# वेदस्य व्यावहारिकत्वम्

डॉ. ज्योत्स्ना

चौखम्भा विश्वभारती
चौक • वाराणसी

आदरणीय गुरुवर
डा. सत्यव्रत शास्त्री जी के
चरणारविन्दों में सादर भेंट
लेखिका द्वारा
ज्योत्स्ना
दिनांक 29-8-82

# वेदस्य व्यावहारिकत्वम्

॥ श्रीः ॥

प्रकीर्ण ग्रन्थमाला

१

# वेदस्य व्यावहारिकत्वम्

डॉ० ज्योत्स्ना

शास्त्री, वेदाचार्यः, एम० ए०, पी-एच० डी०

प्राध्यापकः, राजकीयमहाविद्यालयः

हरियाणा

प्रधानवितरकः

चौखम्भा विश्वभारती

चौक ( चित्रा सिनेमा के सामने )

वाराणसी–२२१००१ ( भारत )

फोन : ६५४४४

सढौरा ( अम्बाला )

प्रथम संस्करण, सन् १९८१, वि० संवत् २०३८

१. **चौखम्भा ओरियन्टालिया**

पो० बाक्स नं० ३२

गोकुल भवन के. ३७/१०९, गोपाल मन्दिर लेन

वाराणसी–२२१००१ ( भारत ) फोन : ६३३५४

---

शाखा—बंगलो रोड, ९ यू० बी० जवाहर नगर

दिल्ली–११०००७ फोन : २२१६१७

२. **चौखम्भा भारती अकादमी**

आकर ग्रन्थों के प्रकाशक एवं वितरक

गोकुल भवन, के. ३७/१०९, गोपाल मन्दिर लेन

वाराणसी–२२१००१ ( भारत )

फोन : ६३३५४

अन्य प्राप्तिस्थान

३. **चौखम्भा संस्कृत संस्थान**

पो० बाक्स नं० १३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी–२२१००१ ( भारत )

फोन : ६५८८९

---

मुद्रक— विद्याविलास प्रेस, वाराणसी

MISCELLANEOUS WORKS
NO. 9

# VEDASYA VYĀVAHĀRIKATVAM

[ the practicability of the vedas ]

By

Dr. JYOTSNĀ, M. A., Ph. D.

*Shāstrī, Vedāchārya*

*Lecturer in Sanskrit, Government College*

*Hariyana ( India )*

*Sole Distributor*

CHAUKHAMBHA VISVABHARATI

*Oriental Booksellers & Publishers*

CHOWK ( OPPOSITE CHITRA CINEMA )

VARANASI–221001 ( U. P. )

( INDIA )

TELEPHONE : 65444

First Edition 1981, V. S. 2038

1. **CHAUKHAMBHA ORIENTALIA**
P. O. Chaukhambha, Post Box No. 32
Gokul Bhawan, K. 37/109, Gopal Mandir Lane
VARANASI-221001 ( India )
Telephone : 63354 Telegram : Gokulotsav

---

**Branch**—Bungalow Road, 9 U. B. Jawahar Nagar
DELHI-110007 Phone : 221617

2. **CHAUKHAMBHA BHARATI ACADEMY**
Gokul Bhawan, K. 37/109
Gopal Mandir Lane
VARANASI-221001 ( India )
Phone : 63354

*Also can be had from*

3. **CHAUKHAMBHA SANSKRIT SANSTHAN**
Post Box No. 139,
Jadau Bhawan, K. 37/116
Gopal Mandir Lane
VARANASI-221001 ( India )
Phone : 65889

# समर्पणम्

निहत्य जाड्यमसुरं सपत्नं
वेदस्य चौरं स्वतपोबलेन।
साक्षात्कृतो येन पुरा पुराणो
लोकोपकारार्थमपावृणोच्च ॥ १ ॥

अपास्य ध्वान्तं निबिडं समग्रं
वेदप्रकाशं व्यतनोत्सुचारुम्।
पाखण्डिनो ये प्रलयं गतास्ते
भानूदये चौरगणा यथा हि ॥ २ ॥

पुम्भ्यो वरेभ्यो वनिताजनेभ्यो
वेदाधिकारं समदापयित्रे।
तस्याऽनुगन्त्रे च प्रचोदयित्रे
वेदस्य वृत्तानि समर्पयामि ॥ ३ ॥

# शुभाशंसनं विदुषां सम्मतयश्च

इयं वेदज्योत्स्नास्नपितवपुराढ्या श्रुतिवचः
प्रवाहध्वस्ताघा गुणगणगरिम्णा गुरुतरा ।
सदाऽऽस्तां वैदग्ध्यात् परमपदपाथः प्रणयिनी
मनोवाचां ज्योत्स्ना क्षपितमलकृत्स्ना त्रिभुवने ।।

इति वष्टि—

**हरिदत्तशास्त्री**
कुलपतिः ज्वालापुरमहाविद्यालयस्य

---

The author has worked a lot and the thesis has encompassed a wide field of learning. The main purpose of the thesis is to show that the Vedas were not only religious books divested of relation with our ordinary life and longings but they were all pervasive having direct connexion with all the facets of human existence and aspiration. Viewed from this perspective the thesis may be deemed a successful presentation.

**Dr. Sitanath Goswami**

---

The marshalling of etymological evidences on key-words from a wide range of vedic and secular works is indeed commendable.

The bulk of the work shows a mastery over the field of research and the presentation is lucid.

**Dr. K. Krishnamoorthy**
Karnatak University, Dharwar

---

प्रबन्धोऽयम् आकण्ठं विषयवस्तुना परिपूर्णः। पुरातनसिद्धान्तानां स्पष्टीकरणे नवविचारसरणियुता शोधनपद्धतिः प्रशस्या। विषयप्रतिपादनशैली रम्या श्लाघ्या च। भाषा वाक्यरचनदृष्ट्या सौष्ठवयुक्ता। मम मतौ शोधप्रबन्धोऽयं परिश्रमेण लिखितः सुप्रमाणसंवलितः श्लाघीयसीशोधपद्धतिमनुसरति। शोधकर्त्री समालोचनात्मकपरीक्षणविधौ सिद्धान्तप्रतिपादने चापि सुप्रतिभानं धारयति।

**रामनाथः वेदालङ्कारः** एम० ए०, पी-एच० डी०
प्रोफेसर एवम् अध्यक्षः, श्रीमद्दयानन्दवैदिकाऽध्ययनपीठ, पञ्जाब विश्वविद्यालय, चण्डीगढ

---

ज्योत्स्नाकुमार्या लिखितो निबन्धः, इतस्ततोऽपाठि मया समोदम्।
महान् श्रमोऽकारि तयेति दृष्ट्वा भृशं प्रहृष्टं हृदयं मदीयम्॥ १॥
वेदा इमे मानवमार्गदर्शकाः, विद्याशतानां प्रतिपादकाश्च।
इत्थं तयाऽसाधि महाश्रमेण ददामि तस्यै बहु साधुवादान्॥ २॥
ददातु देवः सुमतिं सदाऽस्यै दीर्घायुरारोग्यमतीव चारु।
वेदादिशास्त्राध्ययने प्रवृत्ता सन्दर्शयेन्मार्गमतिप्रशस्तम्॥ ३॥

आचार्यः—**धर्मदेव विद्यामार्तण्डः** (वेदभाष्यकारः)
आनन्दकुटीरम्, ज्वालापुरम्

---

वेदानां व्यावहारिकत्वमिति निबन्धमाद्योपान्तमहं दृष्टवान् स च निबन्धः सर्वाङ्गपूर्णः पुष्कलप्रमाणैः पुष्टीकृतो युक्तिभिश्च समन्वितः। रुचिरया भाषया च समलङ्कृतो बाढमाकर्षति चेतः। प्रत्येकं विषयस्य प्रस्तावनं संस्थापनं पोषणं खलु समीचीनतरं तोषयति पाठकान् अतस्तस्यै ज्योत्स्नायै किलानेके साधुवादा दीयन्ते मया।

शुभाकांक्षी—

**स्वामी ब्रह्ममुनिः** परिव्राजको विद्यामार्तण्डो
गुरुकुलकांगडीविश्वविद्यालयस्य
आर्यवानप्रस्थाश्रमस्थो ज्वालापुर-उत्तरप्रदेशस्थस्य

---

वेदानां व्यावहारिकत्वमिति विषयमुपजीव्यायुष्मत्या ज्योत्स्नाकुमार्या लिखितः शोधप्रबन्धो मयावलोकितः । मध्ये मध्ये बहूनि प्रकरणानि साद्योपान्तं परिशीलितानि । आयुष्मत्या ज्योत्स्नया निबद्धं निबन्धमिममलोक्य महान्तमानन्दमभ्युपगतवानहम् । निबन्धोऽयं प्रमाणैरुपबृंहितो युक्तिभिश्च समन्वितो महापाण्डित्यमायुष्मत्या ज्योत्स्नायाः परिलक्षयति । परिश्रमोऽपि तयैतादृशस्य विस्तीर्णस्य निबन्धस्य लेखने महान् विहितः । एतावत्यल्पीयस्यायुषि कुमारीज्योत्स्नाविचारसरणीमीदृशीमतिसूक्ष्मां शास्त्रावगहनञ्चेदृक् सुविस्तीर्णं विपुलं च कलयसि इति दृष्ट्वा सर्वस्यापि प्रेक्षावतो मनो मोदमावक्ष्यति । अस्य विचारपरिपूर्णस्यान्वेषणागुम्फितस्य वैदुष्यसंकलितस्य निबन्धस्य लेखनकारणात् आयुष्मत्यै मयाशीर्वादराशयो वितीर्यन्ते । भगवान् भृशं प्रार्थ्यतेऽस्याः शतवार्षिकायायुषे च कामनाक्रियते । आशासे विदुषीयं बाला भविष्यति संस्कृतभाषाया भारतीयसंस्कृतेर्वैदिकधर्मस्य च परिवर्धनार्थमतोपि समृद्धतरस्य साहित्यनिर्माणं विधास्यतीति ।

**आचार्यः प्रियव्रतो वेदवाचस्पतिः**

भूतपूर्वः कुलपतिः हरद्वारीयकांगडीगुरुकुलविश्वविद्यालयस्य

# पुरोवाक्

आयुष्मत्या डा० ज्योत्स्नया विरचितो वेदस्य व्यावहारिकत्वमिति समाख्यो ग्रन्थो मयाऽऽमूलचूलमवलोकितः । सुरभारत्या निबद्धोऽयमिति प्रियं मे । नैके विद्वांस आङ्गल्या वा हिन्द्या वा वाचा विरचयन्ति स्वकीयान् गवेषणापरान् ग्रन्थान् । तेष्वयमेकतम इति भूयसीनां नो मुदां विषयः । सुरभारत्या विरचिता ग्रन्थाः सुरभारतीवाङ्मयं समेधयन्ति, आङ्गल्या, हिन्द्या भाषान्तरैर्वा विरचितास्तत्तद्भाषावाङ्मयम् । सुरभारतीसमुपासकैस्तु सुरभारत्या एव वाङ्मयं समेधयितव्यमिति प्रथमो नः कल्पः ।

ज्ञानार्थकाद्विदधातोर्निष्पन्नो वेदशब्दो ज्ञानराशिमभिव्यनक्ति यो नाम पूर्वैर्ऋषिभिः स्वकीयया ऋतम्भरया प्रज्ञया साक्षात्कृतोऽवरेभ्यश्च प्रतिपादितः । न केवलं यज्ञयागादिविषय एवात्र प्रतिपादितोऽपि त्वाध्यात्मिकाधिभौतिकाधिदैविकोऽपि । तत्राऽधिभौतिकविषयनिरूपणविवेचनायां कृतो ग्रन्थकर्त्र्या महान् यत्नः । वैदिकी चिकित्सापद्धतिः, शिक्षणव्यवस्था, वैज्ञानिकी धारणा, सामाजिकी, राजनैतिकी च व्यवस्थेति नानाविषयेषु प्रवर्तितो विमर्शो विदुष्याऽनया । एतेन वेदा न केवलं धर्मग्रन्था एवापि तु ज्ञानराशित्वेन नैकविधलौकिकज्ञानस्यापि मूलमिति सिध्यति । अत एव च तेषां व्यवहारोपयोगित्वम् । व्यवहारोपयोगित्वेन च ग्राह्यत्वम् । ग्राह्यत्वेन चोपकारकत्वमिति तेषु क्रमः कश्चनापूर्वः समुन्मिषति ।

विदुष्या ग्रन्थकर्त्र्या विरचितो वेदविमर्शविषयोऽयं ग्रन्थः । श्रमोऽत्रास्याः पदे पदे स्फुटीभवति सूक्ष्मेक्षिका चाऽपि । यत्किञ्चिदप्यत्रानयोक्तं तत्सप्रमाणमेव । यत्र विदुषां वैमत्यं सम्भवेत्स विषयोऽपि मतद्वयनिर्देशेनैव प्रतिपादितः । जातिर्जन्मना भवति गुणेन कर्मणा वेति मतद्वयमप्यनया प्रतिपादितम् । अनयोरिदं साध्विदमसाध्वथवेदं साध्विदं च साधुतरमिति प्रतिपादने नास्या आग्रहविशेषः । समीचीना गवेषणापद्धिरेषैव चाङ्गीकृताऽनया । एतदङ्गीकरणेन ग्रन्थोत्तमोत्तमोऽस्या अवश्यं विदुषां गुणगृह्यानां समादरस्य भाजनं भविष्यतीत्याशासानो ग्रन्थकर्त्रीं ज्योत्स्नां ज्योत्स्नेव जनमनांसि सदा प्रकाशयेत्याशिषा च वर्धयमानो विरमाम्यहं—

दिल्लीनगरम्
१९८१ वर्षीयागस्त्य-
मासस्यैकोनविंशो दिवसः

सुरसरस्वतीसमाराधनैकव्रतः
**सत्यव्रतः शास्त्री**

# PREFACE

I have read *āyuṣmatī* Dr. Jyotsnā's Vedasya Vyāvahārikatvam from cover to cover. I have admired it as it is written in Sanskrit. Generally scholars write their theses in English or Hindi. This thesis is one of those that please us. Books in Sanskrit enrich the literature of Sanskrit language. Books in English or Hindi or any other language proliferate the literature of their language. It is our resolution that Sanskrit speakers should enrich the literature of Sanskrit language.

The word 'Veda' which is derived from the root 'Vid' which means knowledge conveys that column of knowledge which was obtained by the truth seeking seers and later handed to their juniors. Here not only the subject of *yajñas* is treated but subjects spiritual, terrestrial and divine also. The author has discussed the terrestrial topics at length. She has taken up a variety of subjects like Vedic medicine, educational management, scientific principles, social and political order etc. It proves that the Vedas are not only books of religion but the fountain-head of various physical sciences also. Hence their practical value. Hence

their acceptibility. Hence their benefactional worth. This is a quite novel sequence.

The learned author writes this book on the critique of Veda. Her labour and keen insight show at every step. The entire thesis is supported by proofs. Subjects open to scholastic dispute include both shades of opinions. Both shades of opinion have been reproduced while discussing the question whether the 'caste-system' is determined by birth or aptitude. She has no insistence upon what is good and what is bad or what is good and what is better. This is the best course of a research-work and this course she has taken. Hoping that acceptance of her work by the bright scholars will give it a place of honour. I, Satyavrata Shastri, a servant of Sanskrit conclude with the blessing that JYOTSNĀ be true to her name and enlighten the mind of man.

**—Satyavrata Śāstrī**

# प्रास्ताविकम्

कल्याणपाणिर्जनताहितार्थं पीयूषदुग्धं श्रुतिकामधेनुम् ।
यो दोग्धि मानात् पुरुषः समायः पायादपायात् करुणार्द्रचेताः ।।

पुरा किल वेदा एव जनानां कर्तव्यकर्मणां बोधकाः प्रमुखा ग्रन्था अमन्यन्त । परन्तु कालक्रमेणेमे वेदा यज्ञकर्मकाण्डप्रतिपादका एव सन्तीत्येवंविधा विचारा लोके प्रथिताः । तत्कालीनभाष्यकारैरुवट-महीधर-सायण-माधवाचार्यप्रभृतिभिरपि वेदमन्त्राणां कर्मकाण्डात्मका यज्ञपराश्चार्था विशेषतो व्याख्याताः । इमानि भाष्याणि न वेदानां सर्वाङ्गीणमर्थं प्रतिपादयन्ति, जीवनस्यैकाङ्गमेव बोधयन्तीति सुतरां स्पष्टमेव ।

किञ्च, बुद्धकालादपि पूर्वं यस्य पशुबलिप्रभृतेर्विरोधे जनानां विदुषाञ्च महानाक्रोशो विजृम्भितस्तादृशान्येव विधानान्येषु भाष्येषु समुपलभ्यन्ते । तानि च विधानानि विगते काले न केवलं प्रजास्वेव तिरोहितान्यपितु विद्वद्वर्गेष्वपि । तत्प्रतिपादकाश्च वेदा अपि लुप्तप्राया अभवन् । एवं समाप्तप्रायेष्वपि वेदेषु भारतस्य पुनरुत्थानकाले केचन मनीषिणो वेदविषये पुनर्दत्तावधानास्समजायन्त । येषु विद्वद्वरेषु महर्षिर्दयानन्दोऽग्रगण्यः । योगिराजारविन्दप्रभृतयोऽपि खलु वेदानामुद्धारकाः । तैर्मनीषिभिर्न केवला सायणाचार्यप्रभृतेः पद्धतिरेवाऽनुसृताऽपितु स्वप्रज्ञयाऽपि प्राचीनवाङ्मयमनुसृत्य वेदमन्त्राणां वैज्ञानिकानि विविधार्थप्रतिपादकानि भाष्याणि विरचितानि । ते च डिण्डिमघोषेण बोधयन्ति यन्न केवलं यज्ञादिकर्मकाण्डस्यैव विधानं वेदेषु, अपि तु जीवनस्य सर्वेषामपि कर्तव्यकर्मणाम् । वेदा हि सर्वान् लौकिकान् वैदिकांश्च व्यवहारान् प्रतिपादयन्ति ।

तामेतां सरणिमनुसृत्यानेकैर्विद्वद्भिर्वेदानां व्याख्याऽकारि, केचन स्वतन्त्रप्रबन्धा अपि व्यलेखि, कृतञ्च बहुशः प्रशंसनीयं कार्यजातम् । तत्र च गिरिधरशर्मचतुर्वेदिविरचितो "वैदिक विज्ञान एवं भारतीय संस्कृति" इत्येतदाख्यो ग्रन्थः, डाक्टरमंगलदेवशास्त्रिकृता "वैदिक संस्कृति के तत्त्व" इत्याख्या रचना, डाक्टरवासुदेवशरणविरचिता "वेदविद्या", रघुनन्दनशर्मविरचिता 'वैदिकसम्पत्त्यादयः' कृतय उल्लेखनीयाः । तथापि रहस्यमया हि वेदा, तेषां स्वाध्यायस्य न काचिदियत्ता । नवैर्नवैः प्रयासैस्तत्र नवो नवोऽर्थं उपलब्धुं शक्यत एव । किञ्च पूर्वैर्मनीषिभिः समीकृतेन मार्गेण वेदानां निगूढार्थानामपि

यत्किञ्चिदाभासो लब्धुं शक्यः। अपि च वेदानां शोधपद्धत्याऽध्ययनेन तेषां यथार्थस्वरूपबोधः सम्भवेदित्येवं मनसि कृत्वाऽल्पबुद्धियुतयाऽपि मया विदुषां गुरुजनानामनुग्रहेण प्रयासोऽयं समारभ्यते। अनेन भारतीयवाङ्मयस्याध्ययन-क्षेत्रे कश्चनाग्रोपक्रमो भवेत्तस्य प्रमुखपक्षस्य बोधः सम्पद्येत विशेषतश्च वेदानां विषये मध्यकालिकी धारणा व्यपेयात् तेषाञ्च यथार्थस्वरूपबोधे रुचिः स्यादिति सम्भाव्यते।

प्रस्तुते प्रबन्धे उपोद्घातं विधायाभ्युदयिक-आरोग्य-शैक्षणिक-वैज्ञानिक-सामाजिक-राजनीतिक-आध्यात्मिकानि सप्ताधिकरणानि योजितानि। अवसाने चोपसंहाररूपेणात्रोपलब्धा निर्णयास्संक्षेपतो दर्शिताः। तत्र च पाद-टिप्पण्यां विनियोजितेष्वङ्केषु प्रथमाङ्केनाधिकरणं द्वितीयाङ्केन वृत्तं ज्ञेयम्। येऽत्र निबन्धे 'क' 'ख' इत्याद्यैरक्षरैरङ्किताास्त एव विषया बोध्याः।

उपोद्घाते वेदस्य स्वरूपं निरूप्य वेदस्याविर्भावकालः पौरुषेयापौरुषेयत्वं वेदेष्वितिहासो विद्यते न वेति विषया विशदरूपेण चर्चिताः। अत्र च विशेषतो वेदानामाधारेणैव विविधानां विषयाणां विवेचनं क्रियते तद्यथा कृषिपशुपालन-वाणिज्यशिल्पैरन्नवस्त्रावासाऽभावसमस्यासमाधानमाभ्युदयिके, शरीरविज्ञानं व्याधीनां हेतवो नामानि तेषां चिकित्सा चाऽऽरोग्ये, शिक्षास्वरूपं शिक्षा-विधिस्तस्याः फलानि च शैक्षणिके, वैज्ञानिकाविष्कारा वैज्ञानिके, समाजरूपं वर्णव्यवस्था आश्रमव्यवस्था च सामाजिके, राज्यशासनपद्धतिर्राजनीतिके, मानसाऽऽधीनां शमनोपायाः आत्यन्तिकदुःखनिवृत्तेश्चोपाया आध्यात्मिकेऽधि-करणे विस्तरेण निरूप्यन्ते।

अध्ययनस्य चेयं पद्धतिरत्राऽनुसृता–प्रथमं तत्तदर्थप्रतिपादकानां वेद-मन्त्राणां यथाशक्तिस्संकलनं विधाय तेषां निरुक्तब्राह्मणव्याकरणदिशा व्याख्यानं प्रदर्श्यते। पदे पदे विविधानां विवेचकानां मतान्युपन्यस्य तेषां तुलना विहिता, उचितानुचितस्य समीक्षाञ्च विधाय यथावसरं स्वकीय-निर्णयोऽपि विनम्रचेतसा प्रेक्षावतां पुरतो विचारार्थं निधीयते। विशेषेण तु वेदानामेव प्रामाण्यमत्राङ्गीकृतं यथाशक्यं तु वेदाङ्गानामपि।

नितान्तमौलिकोऽयं प्रबन्ध इति कथनमहम्मन्यतामात्रमेव स्यात्। केवलं विनम्रैश्शब्दैरत्र निवेद्यते यदत्र प्रबन्धे केचिदर्थास्तादृशा अपि व्याख्याता यत्र विद्वद्भिर्नवोऽर्थो नूतना व्याख्या वाऽनुसन्धातुं शक्यते तद्यथा—

१. वेदेषु आख्यानवदवभासमानानां केषाञ्चन मन्त्राणां व्याख्यानम्।
२. वेददिशा व्याधिचिकित्सा।
३. वैदिकशिक्षाप्रणाली।

४. सृष्ट्युत्पत्तिविज्ञानस्य नूतना व्याख्या ।
५. दूरसंचार-आकाशवाणी–दूरदर्शनविज्ञानम् ।
६. वृष्ट्युत्पत्तावस्त्रप्रेषणे मरुद्गणानां योगः ।
७. परिवारनियोजनस्य विविधरूपेषुप्रचरणम् ।
८. कामशास्त्रस्य कामिनीवशीकरणस्य वाजीकरणस्य संकेताः ।
९. गृहाश्रमव्यवहारः ।
१०. मन्त्रेषु राज्यस्य सप्ताङ्गानां विशदवर्णनम् ।
११. विविधदुर्जननिदर्शनम् ।

अत्र प्रबन्धे युक्तिप्रमाणाभ्यामेवाऽर्था निरूप्यन्ते तथापि विषयिगतः प्रभावो न त्यक्तुं शक्यतेऽतो भवन्ति भव्येषु हि पक्षपाता इति सूक्त्यनुसारं यत्र क्वचिद्व्यतिक्रमोऽपि स्यादिति क्षम्येयं लेखिका ।

**कृतज्ञताज्ञापनम्—**

सत्स्वपि विविधेष्वन्तरायेषु निबन्धेऽत्र येषां महानुभावानां सौहार्देन साहाय्येन मया किमपि कर्तुं पारितं तेषां धन्यवादपुरःस्सरं कृतज्ञताप्रकाशनेन कृतकृत्यतां मन्यमानयाऽऽनृण्याय किमप्यावेद्यते । पूर्वं तावत् करुणावरुणालयस्य परमपितुरतिशयेन कृतज्ञताऽस्मि यस्य प्रसादान्निबन्धोऽयं पूर्तिमगात् । तातपादं प्रति कृतज्ञताप्रकाशनं तूपचारमात्रमेव स्यात् यो हि यां पदे पदे सत्परामर्शेन सततप्रेरणया नित्यं कृतार्थयति । अत्र चाहं राष्ट्रियसंस्कृतसंस्थानस्योपनिदेशकस्य डाक्टर–जयदेवगांगुलीमहाभागस्यानुग्रहं सादरं मन्ये यो मम शोधविषयमनुमोदितवान् माञ्च समुत्साहितवान् । अथ केन्द्रीयसंस्कृतविद्यापीठस्यानुसन्धानविभागाध्यक्षाणां डाक्टररुद्रदेवत्रिपाठी–महाभागानां, वेदविभागाध्यक्षाणां पथप्रदर्शकानां पण्डितशिवदासमिश्रमहाभागानाञ्चातिशयेनाऽनुगृहीताऽस्मि । यो हि खलु मां स्वापत्यवन्मन्यमानो सदैव मम निबन्धस्य संशोधने महर्घं कालं व्यत्यापयतः । तथा च डाक्टरश्रीनिवासशास्त्रिमहाभागानां दयानन्दपीठाध्यक्षवराणां कुरुक्षेत्रविश्वविद्यालयस्थानामुपकारजातं शिरसा बिभर्मि यैर्हि गुरुवर्रैर्निखिलोऽयं निबन्धः प्रभूतश्रमेण दत्तावधानचेतसा परिमार्जितः परिष्कृतश्च । पुनः परिव्राजकं धर्मानन्दसरस्वतीविद्यामार्तण्डं सविनयं स्मरामि यैर्हि सततसरस्वतीसमुपासनतत्परैर्महाभागै स्वनीरक्षीरविवेकदृष्ट्याऽयं संशोधितः । पण्डितप्रवराणां युधिष्ठिरमीमांसकमहाभागानामप्यहम् ऋणं सादरं वहामि ये महानुभावाः स्वकीयं महर्घं कालं व्यतियाप्य निखिलेऽस्मिन्निबन्धे पादटिप्पण्यां समायोजितानां विविधग्रन्थेभ्यः समुद्धतांशानां प्रतीकानाञ्च सत्याऽसत्यविवेचने मम सहाय्यं व्यदधुः ।

अस्मिन् कलौ युग आदित्यवद्देदीप्यमानानां विश्वविश्रुतानां श्रीचारुदेवशास्त्रिणामाऽऽत्मजस्य डाक्टरसत्यव्रतमहाभागस्याद्यत्वे दिल्लीविश्वविद्यालयस्य संस्कृतविभागाऽध्यक्षवरस्यातिशयेन कृतज्ञतां भरामि यः खलु प्रभूतकार्येषु व्यग्रमना अपि अखिलममुमधीत्य ममाऽऽग्रहं ममाऽनुरोधं नोपक्षिप्यास्य निबन्धस्य पुरोवाचं विरचितवान् ।

वर्त्तमाने युगे यन्नाऽर्थस्यैव माहात्म्यं परितो दरीदृश्यतेऽनुभूयते च तत्र न केवलं निबन्धलेखनमेव कस्यचिदपि लेखकस्य लक्ष्याऽवाप्तिः । यावन्न विद्या प्रकाशेत तावत्तु सा स्वाङ्गेष्वेवाऽवसीदतीति भृशमनुभूय चिरादयं निबन्धः यद्वा तद्वा यैर्महाभागैः श्रेष्ठिप्रवरैः साहाय्येन प्राकाश्यमगात् तेषामहं सादरमनुगृहीताऽस्मि । श्रीयुतब्रह्ममुनिपरिव्राजकाः काले-काले धनप्रदानेन मम साहाय्यं व्यदधुः मासचतुष्टयं यावच्च शतरूप्यकमात्रं छात्रवृत्तिमप्यदुः तानहं सादरं स्मरामि । भारतसर्वकाराय च कृतज्ञतां ज्ञापयामि यस्याऽर्थसाहाय्येन कार्यमिदं यथाकालमवसितम् । पुनः करनालवासिनः चौधरीरायसाहबप्रतापसिंहस्याऽतिशयेनाऽनुगृहीताऽस्मि यः खलु सततं सरस्वतीसमुपासकान् संस्कृताध्येतॄन् अर्थेण नित्यं पोषयति तेषां विद्याप्रकाशने च विद्युद्दीप इव वर्त्तते । स खलु लक्ष्म्या सरस्वत्या च साकमनुगृहीतोऽस्य मुद्रणाय सहस्रोत्तरं रूप्यकं प्रायच्छत् । वाराणस्यां वर्तमानस्य चौखम्भा ओरियन्टालियाध्यक्षस्य श्रीव्रजभवनदासगुप्तस्य तस्य कर्मचारिजनस्य च महान्परिश्रमोऽत्रास्य शुद्धमुद्रणे प्रकाशने च तेषामप्यहमनुग्रहं सादरमुररीकरोमि ।

यः सर्वेभ्यः सम्मानार्हेभ्यः प्रणतिपुरःसरं कृतज्ञतां प्रकटयामि यैर्गुरुगणैरस्य निबन्धने त्रुटिशोधनेन सत्परामर्शेण वित्तेन च साहाय्यं विधायोत्साहः संवर्धितः । येषां दिवंगतानां भूलोकमेव वा सनाथीकुर्वतां विदुषां ग्रन्थ अत्र साहाय्यभूता अभवन् तेभ्यः सर्वेभ्यः सबहुमानं नमस्कृत्य विरमत्येषा सुधीजनाऽनुरक्ता काचन ज्योत्स्नानाम्नी ।

# सङ्केतसारणी

| | |
|---|---|
| अ० | अध्यायः । |
| अथर्व० | अथर्ववेदसंहिता । |
| आ० | आह्निकम् । |
| आ० श्रौ० | आश्वलायनश्रौतसूत्रम् । |
| उ० | उत्तरार्चिकम् । |
| ऋ० | ऋग्वेदसंहिता । |
| ऋ० भा० भू० | ऋग्वेदादिभाष्यभूमिका । |
| ऐ० आ० | ऐतरेयारण्यकम् । |
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् । |
| कामन्दक० | कामन्दकीयनीतिसारः । |
| का० श्रौ० भू० | कात्यायनश्रौतसूत्रभूमिका । |
| कौ० | कौटिल्यार्थशास्त्रम् । |
| तु० | तुलनीयम् । |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् । |
| तै० आ० | तैत्तिरीयारण्यकम् । |
| तै० सं० | तैत्तिरीयसंहिता ( कृष्णयजुर्वेदः ) । |
| द्र० | द्रष्टव्यम् । |
| नि० | निरुक्तशास्त्रम् । |
| निघ० | निघण्टुः ( यास्कीयः ) । |
| न्या० सू० | न्यायसूत्रम् । |
| पा० | पाणिनीयाष्टाध्यायी । |
| पू० | पूर्वार्चिकम् । |
| ब्रा० | ब्राह्मणम् । |
| मीमा० सू० | मीमांसासूत्रम् । |
| यजुः | यजुर्वेदः । |
| शत० ब्रा० | शतपथब्राह्मणम् । |
| सां० सू० | सांख्यदर्शनम् । |
| साम० | सामवेदः । |

# विषयानुक्रमणिका

# वेदस्य व्यावहारिकत्वम्

## १. उपोद्घातः

### ( १ ) वेदनिर्वचनम्—

आद्युदात्तोऽन्तोदात्तश्चोभयविधो वेदशब्दः। आद्युदात्तो ग्रन्थराशिवाचकः[1], अन्तोदात्तश्च दर्भमुष्टिवाचकः[2]। तत्रास्मिन् प्रबन्धे आद्युदात्तो वेदशब्दो गृह्यते। सोऽयं ज्ञानावाप्तिविचारसत्तार्थवतो विदधातोर्घञ्[3] प्रत्यये कृते सिध्यति[4]। तस्मात् वेदशब्दस्यार्था अपि ज्ञानं वेदयिता, पुरुषार्थान् वेदयिता, अभ्युदयनिःश्रेयसप्रापयिता—इत्येवंविधा भवन्ति। तथैवान्येऽप्याचार्या वेदशब्दं निर्वचन्ति[5]। वेदवाचका अनेके यौगिकाश्शब्दा निर्वचनेन वेदस्य वैशिटयं बोधयन्ति।

---

१. द्र० अथर्व० ४।३५।६, तै० ब्रा० ३।१०।११।४७, ३।१२।६।४६।

२. द्र० अथर्व० ७।२८।१।

३. विदज्ञाने, विद्लृलाभे, विदसत्तायाम्, विदविचारणे, विदचेतनाख्याननिवासेषु।

४ पा० ३।३।१२१।

५. विदन्ति जानन्ति विद्यन्ते भवन्ति विन्दन्ति विन्दन्ते लभन्ते विन्दते विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्यायैर्येषु वा तथा विद्वांसश्च भवन्ति ते वेदाः॥ दयानन्दः ऋ० भा० भू० पृ० २०।

इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः। सायणः ऐ० ब्रा० भाष्यभूमिका, पृ० १।

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥
सायणः वेदभाष्यभूमिकासंग्रहः, पृ० ४।

प्रत्यक्षादिभिः प्रमाणान्तरैर्योऽर्थोऽनवगतः तादृशमर्थं स्वर्गादिरूपश्रेयः साधनीभूतं यः शब्दराशिरावेदयति स एव वेदशब्दार्थ इति निश्चेतव्यम्। विद्याधरगौडः, का० श्रौ० भू०, पृ० ४।

तद्यथा—अनुश्रूयतेत्यनुश्रवः,[१] गुरोरन्वध्ययनादन्वध्यायः,[२] ज्ञानस्यागमादागमः,[३] अभ्यसनादाम्नायः,[४] सुखैराच्छादनत्वाच्छन्दनत्वाच्छन्दः,[५] ज्ञानकर्मोपासनाविषयभेदाद् गद्यपद्यगानरचनाभेदात् त्रयी,[६] सत्यविद्यानिगमनान्निगमः, ज्ञानापेक्षया बृंहणत्वाद् ब्रह्म,[७] गुप्तमन्त्रणान्मन्त्रः,[८] श्रूयत इति श्रुतिः, सम्यक् हिता धृतेति संहिता,[९] स्वाध्यायात्स्वाध्यायो वेदः।

एतादृशस्य वेदस्य व्यावहारिकत्वं नित्योपयोगित्वं धर्मार्थकाममोक्षचतुष्टयप्रदत्वमस्तीति मनसि कृत्वा निबन्धोऽयं प्रारभ्यते।

अथ कोऽयं वेदो नाम? सन्ति ह्यत्र विप्रतिपत्तयः। मन्त्रा ऋग्यजुःसामाथर्वसंज्ञका एव वेदा इत्येके। अपरे तु ब्राह्मणान्यपि वेदा यज्ञेषु मन्त्रभागवद्व्यवहारादुक्तञ्च "मन्त्रब्राह्मणयोर्वेदनामधेयम"[१०] इति। यदि हि ज्ञानार्थको वेदशब्दस्तर्हि ब्राह्मणान्यपि ज्ञानं प्रतिपादयन्ति ततो ब्राह्मणान्यपि वेदव्याख्यानरूपत्वाद्वेदाः। मन्त्रा वेदा ब्राह्मणा वा इत्येवंविधस्य विवादस्य विवेचनं नात्राभीष्टमत्र तु मन्त्रभागं गृहीत्वैव वेदस्य व्यावहारिकत्वं विमर्श्यते।

## (२) वेदानामियत्ता

सोऽयं मन्त्रभागः शाखाभेदाद् भिन्न आस्ते। तत्र ज्ञानविषयक ऋग्वेदः, तस्य च द्वे शाखे शाकलशाखा बाष्कलशाखा च समुपलभ्येते। ऋचां विभागभेदेनैवेते भिद्येते। यत्र मण्डलसूक्तादिना विभागः कृतः

---

१. श्रु श्रवणे।

२. इङ् अध्ययने।

३. गम्लृ गतौ। गतिः = ज्ञानं गमनं प्राप्तिश्च।

४. म्ना अभ्यासे, द्र० दुर्गः, नि० भाष्यम् १।१।

५. छदि सम्वरणे।

६. तु० तेषां ऋग् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुः शब्दः। सायणः अथर्ववेदस्योपोद्घाते, पृ० ५। मीमांसासूत्रे २।१, ३५–३७।

७. बृहि वृद्धौ।

८. मत्रि गुप्तभाषणे।

९. डुधाञ् धारणपोषणयोः धातोः दधातेर्हि पा० ७।४।४२ सूत्रेण हि।

१०. कात्यायनप्रतिज्ञासूत्रम् १, आपस्तम्बश्रौतपरिभाषा कण्डिका १।

सः शाकलसंहिता, यत्र चाष्टकाध्यायवर्गैर्विभागः सा बाष्कलसंहिता। तत्रास्य ऋग्वेदस्य दशसु मण्डलेषु पञ्चाशीतिरनुवाका अष्टादश-सहस्राणि सूक्तानि दशसहस्राणि पञ्चशतानि द्विपञ्चाशच्चर्चस्सन्ति। सेयं शाकलसंहिता। अथ बाष्कलसंहितायामष्टावष्टकाः। तत्रैक-स्मिन्नष्टकेऽष्टावध्यायाः, चतुःषष्टिष्वध्यायेषु चतुर्विंशत्युत्तरद्विसहस्र-वर्गाः सन्ति। कर्मकाण्डविषयको यजुर्वेदस्तावत् शुक्लकृष्णभेदेन द्विधा विभक्तः। शुक्लयजुर्मन्त्रभागः, कृष्णयजुस्तावन्मन्त्रब्राह्मण-मिश्रितभागः। तत्र शुक्लयजुषि चत्वारिंशदध्याया नवशतपञ्चसप्त-त्युत्तरैकसहस्राः कण्डिकाः सन्ति। उपासनाविषयकस्सामवेदः कौथुमि-राणायनीयाजैमिनीयाभिस्त्रिभिः शाखाभिस्समुपलभ्यते। तत्राष्ट-शतचतुर्विंशत्युत्तरैकसहस्रं साम्नां योनयः। तासामसंख्यानि सामानि। अथ च भागद्वयं छन्दःसंहितोत्तरसंहिता चेति, पूर्वार्चिकमुत्तरार्चिक-मित्यप्यभिधानं तयोः। पूर्वार्चिके षडुत्तरार्चिके च त्रयः प्रपाठकाः सन्ति। विज्ञानविषयकः शौनकीयोऽथर्ववेदो विंशतिकाण्डैरेकोनषष्टयु-त्तरसप्तशतैः सूक्तैर्नवशतसप्तसप्तत्युत्तरपञ्चसहस्रैर्मन्त्रैर्विभक्तो विद्यते। एवं चत्वारो वेदाः संख्याभेदेन प्रोक्ताः[१]।

अत्रापि केषाञ्चिद् मतभेदः। त्रयो वेदा इति चत्वारो वेदा इति वा। उक्तैरेव त्रिभिर्वेदैः ऋत्वपेक्षितस्य ब्रह्मकर्तव्यस्यापि सिद्धेः। "ऋचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयात्"[२]। अतश्चतुर्णां हौत्रादीनामृत्विजामपेक्षितस्य क्रियाकलापस्य त्रय्यैव सिद्धत्वान्न चतुर्थस्य वेदस्याकाङ्क्षास्ति कुतस्तस्य व्याख्यानचिन्ता[३]। अथ च शास्त्रेषु बहुधा त्रयो वेदा एव श्रूयन्ते तस्माद्वेदास्त्रय एव[४]।

अत्रोच्यते यद् वाङ्मनसनिर्वर्त्यस्य यज्ञशरीरस्यार्धमेव त्रिभिर्वेदै-र्निष्पाद्यतेऽर्धान्तरन्त्वथर्ववेदेनैव श्रूयते[५]। पुरायुगे प्रजापतिः सोमेन

---

१. तु० बलदेव उपाध्याय, वैदिक साहित्य और संस्कृति, पृ० १२३-१७८।

२. ऐ० ब्रा० ५।५।३३, शत० ब्रा० ११।५।८।७।

३. सायणः, अथर्ववेदस्योपोद्घाते पृ० ४।

४. वेदैरशून्यस्त्रिभिरेति सूर्यः। तै० ब्रा० ३।१२।९।१, १।२।१।२६। यज्ञं व्याख्यास्यामः। स त्रिभिर्वेदैर्विधीयते। हिरण्यकेशिश्रौतसूत्रे १।१।१।२, द्र० गो० ब्रा० १।६।

५. तद्ये केचन छान्दोग्ये वाऽऽध्वर्यवे वा हौत्रामर्शाः समाम्नाता न तान् कुर्यादकृत्स्नत्वाद्धौत्रस्य। आ० श्रौ० ८।१३। (अग्रिम पृष्ठे)

यक्ष्यमाणो वेदानुवाच, कं वा होतारं वृणीयाम् , कमध्वर्यु कमुद्गातारं कं ब्रह्माणमिति । ते ह ऊचुः ऋग्विदमेव होतारं वृणीष्व यजुर्विदमध्वर्यु सामविदमुद्गातारमथर्वाङ्गिरोविदं ब्रह्माणम् । तथा हास्ययज्ञश्चतुष्पात् प्रतितिष्ठति[१] । ज्ञानकर्मोपासनाविषयभेदाद्रचनाभेदादेव वा त्रयीपदेन व्यवहारः[२] । अथर्ववेदस्तु त्रिभ्यो वेदेभ्योऽपि श्रेयस्तमो ब्रह्मकर्तव्यप्रतिपादनात् भेषजप्रतिपादनाच्चेति[३] । येऽथर्वाणस्तद् भेषजं यद् भेषजं तदमृतं यदमृतं तद् ब्रह्म[४] । ततोऽथर्ववेदो ब्रह्मवेदनाम्नाप्युच्यते ।

तथैव ब्राह्मणादिष्वपि चत्वार एव वेदा इत्युपदिष्टम् । तद्यथर्ग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः[५] । एवमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्त्यथर्वभिर्जपन्ति[६] । ऋग्वेद एव भर्गो यजुर्वेद एव महः सामवेद एव यशो ब्रह्मवेद एव सर्वम्[७] ।

## ( ३ ) वेदस्याविर्भावः

पाश्चात्यविद्वांसः शार्मण्यदेशीया मोक्षमूलरमहाभागास्तदनुयायिनः कोलब्रुकविलसनप्रभृतयोऽन्ये हाग–आर्क–विशपाद्याः पाश्चात्यविपश्चितश्च वेदस्याविर्भावं ख्रैस्ताब्दात् प्राक् द्वादशशतवर्षमितं सहस्रद्वयवर्षमितं वा परिकल्पयन्ति[८] । शार्मण्यदेशीयो ज्योतिर्विज्जैकोबीमहोदयस्त-

---

प्रजापतिर्यज्ञमतनुत । स ऋचैव हौत्रमकरोद् यजुषाध्वर्यवं, साम्नोद्गात्रमथर्वाङ्गिरोभिर्ब्रह्मत्वम्......स वा एष त्रिभिर्वेदैः यज्ञस्यान्यतरपक्षं संस्क्रियते मनसैव ब्रह्मा यज्ञस्यान्यतरपक्षं संस्करोति । गो० ब्रा० पूर्वगोपथ ३।२, द्र० ऐ० ब्रा० ५।५।३२ ।

१. द्र० गो० ब्रा० पूर्वगोपथ १।२४ ।

२. द्र० सायणः, अथर्ववेदस्योपोद्घाते पृ० ५ ।

३. द्र० तत्रैव पृ० ६ ।

४. द्र० गो० ब्रा० पूर्वगोपथ ३।४ ।

५. शत० ब्रा० १४।५।४।१० ।

चत्वारो वा इमे वेदा ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेदः । गो० ब्रा० पूर्वगोपथ २।१६ ।

६. काठकसंहिता ४०।७ मन्त्रस्य ब्राह्मणम् । द्र० नि० १३।७ ।

७. गो० ब्रा० पूर्वगोपथ ५।१५ ।

८. मोक्षमूलरः, प्राचीनसंस्कृतसाहित्ये ।

उद्धृत बलदेव उपाध्याय, वैदिक साहित्य एवं संस्कृति पृ० १०८ ।

दनुयायिलोकमान्यबालगङ्गाधरतिलकमहाभागश्च ज्योतिषशास्त्र-गणनानुसारं वैक्रमाब्दात् प्राक् चतुःसहस्रवर्षमितं परिकल्पयतः[1]। विद्वांसो भूगर्भशास्त्रप्रमाणैर्वेदाविर्भावकालं खृैस्ताब्दात् पञ्चविंशति-सहस्रवर्षमितं निर्धारयन्ति[2]। अथ च पण्डितदीनानाथशास्त्रिवराः स्वरचितवेदकालनिर्णयाख्ये ग्रन्थे वर्तमानसमयात् त्रिलक्षपूर्वं कालं प्रतिपादयन्ति[3]। शार्मण्यदेशीयः श्लेगालमहोदयोऽपरे चालबर्तव्वेव-रादिमहोदया अपि विश्ववाङ्मये निगमस्य प्राचीनतमत्वमङ्गीकुर्वन्तो-प्याविर्भावकालनिर्णयं निश्चितं नोपपादितवन्तः। कैश्चित् पाश्चात्यैः कालविद्भिः खृैस्ताब्दात् पूर्वं सहस्रत्रयवर्षमितोऽपरैश्च षट्सहस्र-वर्षमितो निर्धारितः। एवं ह्विटनीग्रासमैनप्रभृतिभिर्महाभागैश्च खृैस्तपूर्वं द्विसहस्रवर्षमितो मैक्डानलमहाभागैः खृैस्तपूर्वं सार्धसहस्र-वर्षमितः कालो निर्धारितः। एवं वेदरचनाकालविषये पाश्चात्य-विदुषां भूयान् मतभेदः[4]। भारतीयास्तु मनीषिणो मन्यन्ते यत् प्रत्येकसर्गस्यादौ वेदाः प्रादुर्भवन्ति। अतश्च वर्तमानकल्पस्योत्पत्तौ यावान् कालो व्यतीतस्तावानेव वेदानां प्रादुर्भावस्य कालः। इत्थञ्च महर्षिदयानन्दप्रभृतिभिर्वेदानामुत्पत्तौ "एको वृन्दः षण्णवतिकोटयोऽष्टौ लक्षाणि द्विपञ्चाशत् सहस्राणि नवशतानि षट्सप्ततिश्चैतानि वर्षाणि व्यतीतानि" इत्युक्तम्। "सप्ततितमोऽयं वत्सरो वर्तते यमार्या विक्रमस्यैकोनविंशतिशतं त्रयस्त्रिंशत्तमोत्तरं वत्सरं वदन्ति"[5]।

विद्वद्भिश्च ज्योतिषशास्त्रगणनयाऽप्ययं कालः साध्यते। लोक-मान्यबालगङ्गाधरतिलकमहाभागानां मते खृैस्ताब्दपूर्वं यदा मृग-शिरानक्षत्रे वसन्तसंपात आसीत्तदेमे वेदाः प्रादुर्भूताः[6]। ते चर्ग्वेदस्य

---

१. डा० विण्टरनित्स, हिस्ट्री ऑफ इण्डियन लिट्रेचर प्रथम भाग पृ० २९६–२९७।

२. द्र० डा० अविनाशचन्द्रदास, ऋग्वेदिक इण्डिया।
उद्धृत बलदेवोपाध्याय, वैदिक साहित्य और संस्कृति पृ० ११६।

३. तु० बलदेव उपाध्याय, वैदिक साहित्य और संस्कृति पृ० ११६।

४. द्र० संस्कृतसाहित्यविमर्शः पृ० ३८–३९।

५. दयानन्द, ऋ० भा० भू० पृ० २१।

६. बालगङ्गाधरतिलक, ओरियन।
उद्धृत, बलदेव उपाध्याय, वैदिक साहित्य और संस्कृति पृ० १११।

दशममण्डलस्य षडशीतितमसूक्तस्य द्वाविंशतितमे मन्त्रे[1] सम्प्राप्तो मृगशब्दो मृगशिरानक्षत्रस्य प्रतिपादक इत्याचक्षते। तथा च कल्पादौ यदा पूर्णचन्द्रमाः फाल्गुनीनक्षत्र आसीत्तदा मरीचिमाली नूनमेव मृगशिरानक्षत्र आसीत् वसन्तसंपातश्चासीत्[2]। स एव च वेदाविर्भावकालः[3]।

तदेनं केचिद्विद्वांस एवं समीक्षन्ते—अस्मिन् मन्त्रे योऽयं मृगशब्द उक्तः, स हिंस्रपशुवाचको न नक्षत्रवाची न चात्र नक्षत्रप्रसङ्गः[4]। अद्यत्वे वसन्तसंपात आर्द्रानक्षत्रे भवति सम्पातबिन्दुश्चेदं सततं वक्रगत्या पश्चिमाभिमुखं सरति। गतिश्चैषा अयनांशनाम्ना प्रोच्यते। संपातस्य पूर्णं वृत्तं २५९२० वर्षमितेषु जायते। वृत्ते चैकस्मिन् ३६०। - अंशास्तस्मात् प्रायशो द्विसप्ततिवर्षेष्वेकांशमभिसरति। वृत्ते सप्तविंशतिर्नक्षत्राणि द्वादश राशयो वा भवन्ति। एकस्य नक्षत्रस्य तु गमने ( ३६० ÷ २७ = १३½ ) सार्धत्रयोदशांशानां गतिर्भवति। तत एकस्मिन् वृत्ते ( ७२ × १३½ = ९७२ ) द्विसप्तोत्तरनवशतवर्षाणां कालोऽपेक्षते। मृगशीषनक्षत्रोपरि यदा वसन्तसंपात आसीत् तत्काल एव यदि वेदस्याविर्भावकालो मन्येत तदाऽयं कालः ख्रैस्ताब्दात् त्रिंशत्सहस्रवर्षपूर्वः षट्पञ्चाशत्सहस्रवर्षपूर्वो द्विरशीतिसहस्रवर्षपूर्वश्चैवं बहुधाऽभूत् तदैतेषु कं कालं परिगणयेम ? आगामिनि काले च ख्रैस्ताब्दात् प्रायशो द्वाविंशतिसहस्रवर्षमनन्तरमपि मृगशिरा नक्षत्रे वसन्तसंपातो भविष्यति तदा सोऽपि तिलकमहाभागमतेन वेदाविर्भावकालरूपेण विद्वद्भिर्मान्यो भवेत्। तिलकमहाभागेन भगवद्गीतायाः 'मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः' इत्ययं श्लोकः स्वोक्तौ पुष्टिरूपेणोपस्थापितः। यद्येतेनेद मन्येत यत्तदानीं

---

१. क्व स्य पुल्वघो मृगः। ऋ० १०।८६।२२।

२. मुखं वा एतत् संवत्सरस्य यत् फल्गुनी। तै० सं० ७।४।८।१–२, शत० ब्रा० ६।२।२।१८।

मुखं वा एतत् संवत्सरस्य यत् फाल्गुनी पौर्णमासी। गो० ब्रा० उत्तर-गोपथ १।१९।

३. तु० बलदेव उपाध्याय, वैदिक साहित्य एवं संस्कृति पृ० १११।

४. मृगो न भीमः कुचरो गिरिष्ठाः। ऋ० १।१५४।२।

गच्छति हि वेगेन मृगो जाङ्गलपशुः।

द्र० ब्रह्ममुनिभाष्यम्, नि० १।२०।

वसन्तसंपातो मृगशिरानक्षत्रे आसीत्तेनेदं नैव सिध्यति सो वेदाविर्भावकालोऽपि ।

वेदास्तु महाभारतकालादतिप्राचीनाः । रामायणकालस्तावत् महाभारतात् प्राचीनतरः । महाभारते यत्र तत्र रामायणस्य चर्चा दृश्यते[1] रामायणे च वेदानाम्[2] । तिलकमहोदयोऽपि वैदिककालं चतुर्षु युगेषु विभाजयन् ऋग्वेदस्य यज्ञयागादिव्याख्यानात्मकस्यैतरेयब्राह्मणस्य कालं निगमनिर्माणकालादपि द्विसहस्रवर्षपूर्वं मन्यते[3], इत्यपि विद्वद्भिर्विचारणीय एव ।

तदेतद्वेदाविर्भावकालं ज्योतिषशास्त्रेण साधयन्त्येके । कल्पादौ रेवतीनक्षत्रस्य चतुर्थे चरणे वसन्तसंपात आसीत्तस्य रेवतीनक्षत्रस्य पूषा देवता, तत्पौष्णान्ते ब्रह्मणा कल्पः सृष्टः[4] । कल्पादौ चैत्रमासस्य शुक्लपक्षस्य प्रतिपदातिथिर्ब्राह्ममुहूर्तश्चासीदतस्सर्वसूर्यग्रहणं चन्द्रमसोऽदर्शनञ्चासीदिदं दृश्यं भारतीयज्योतिषानुसारं भूमौ कल्पितायां प्रधानमध्याह्नरेखायामासीत्[5] । सदैव सृष्टयादिः कल्पादिर्वा सदृशमेव

---

१. द्र० अजो नामाभवद् राजा महानिक्ष्वाकुवंशजः ।
तस्य पुत्रो दशरथः शश्वत् स्वाध्यायवाञ्छुचिः ॥
अभवंस्तस्य चत्वारः पुत्रा धर्मार्थकोविदाः ।
रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ॥
—महाभारते वनपर्वणि २७४।६–७ ।

२. सर्वे वेदविदः शूराः सर्वे लोकहिते रताः ।
—वाल्मीकिरामायणे बालकाण्डे १८।२५ ।

३. द्र० बलदेव उपाध्याय, वैदिक साहित्य और संस्कृति पृ० ११२ ।

४. शीघ्रगस्तान् यथाल्पेन कालेन महताल्पगः ।
तेषां तु परिवर्तेन पौष्णान्ते भगणः स्मृतः ॥ सूर्यसिद्धान्त १।१७ ।
ध्रुवताराप्रतिबद्धज्योतिश्चक्रं प्रदक्षिणगमादौ ।
पौष्णाश्विन्यन्तस्थैः सह ग्रहैर्ब्रह्मणा सृष्टम् ।
—ब्राह्मस्फुटसिद्धान्तः मध्यमा ३ ।

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे । ऋ० १०।८६।१३ ।

५. चैत्रसितादेरुदयात् भानोर्दिनमासवर्षयुगकल्पाः ।
सृष्ट्यादौ लंकायां समं प्रवृत्ता दिनेर्कस्य ॥
—ब्राह्मस्फुटसिद्धान्तः १।४ ।

भवति तस्य परमेश्वरस्य यथापूर्वकल्पनात्[1]। अतो नित्ये वेदेऽपि परमेश्वरेण रेवतीनक्षत्रमेव कल्पादावुपदिष्टम्। तद्यथा—

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे।
घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादुत्तरः॥

इन्द्र उत्तरध्रुवो वृषाकपायीं सान्त्वयति सदा सृष्टेरारम्भे रेवतीतारायामागतो वृषाकपिः सूर्यः सर्वग्रहणावसरे ग्रस्तः, हे वृषाकपायि रेवति तारे! सुपुत्रे! सुस्नुषे = सुपुत्रवधु! तव वृषाकपिप्रभृतीन् उक्षणः त्वयि वीर्यसेचकान् ग्रहान् इन्द्रस्तव श्वसुर उत्तरध्रुवो घसत् खगोलरूप उदरे रक्षितवान्। त्वं सुखसञ्चयरूपं हविरन्नादिकं सम्पादय[2]।

तदा प्रजापतिः प्रजा असृजत। प्रजाभ्य अन्नम्। ऋचो यजूंषि सामानि छन्दांसि च व्यरचयत्[3]। वस्तुतस्तु वेदानामाविर्भावकालविषय आचार्याणां वैमत्यमुपलभ्यते। तथापि भारतीया मनीषिणस्तु वेदं नित्यमेव मन्यन्ते।

## (४) वेदानामपौरुषेयत्वम्

अत्र केचन वदन्ति वेदाः केनापि पुरुषेण पुरुषैर्वा विरचिताः पौरुषेया इति यावत्। अयं हि तेषामाशयः—युक्त्या प्रमाणैश्चोपलभ्यते यद्वेदरचनेऽन्यग्रन्थरचनवन्मनुष्याणां सामर्थ्यमस्ति। सर्वे ग्रन्था लेखनीमसीकर्गलोपकरणैर्ग्रथ्यन्ते तन्नेदं बुद्धिगम्यं यद्वेदमीश्वरो लिखितवान्। यदि हि कश्चिदुच्येत यज्ज्ञानमयो वेदो नायं पुस्तकरूपस्तदाऽपि न मुखहस्ताद्यवयवरहितत्वात् परमेश्वराच्छब्दमयो वेदः प्रभवितुमर्हति। अथ च वेदवाक्यानि पौरुषेयाणि वाक्यत्वाद्यथा भारतादिवाक्यम्। क्रमवन्तो वर्णाः पदम्, क्रमवन्ति च पदानि वाक्यम्, क्रमश्च नित्यवर्णेषु स्वत एवासंभवादुच्चारणक्रमनिबन्धन एव। उच्चारणक्रमश्च पुरुषप्रयत्नसाध्य एवेति सिद्धसाध्यत्वं वदतामनवकाश एव[4]। यत्तु अपौरुषेयवादिनो मन्यन्ते यदस्मदादिभिरप्यन्येषां

---

१. ऋ० १०।८६।३।

२. द्र० ब्रह्ममुनि, निरुक्तभाष्यम् १२।६।
तु० ब्रह्ममुनि, वैदिकज्योतिषशास्त्रम्।

३. द्र० बृहदारण्यकोपनिषदि १।२।५।

४. द्र० सायणः, अथर्ववेदस्योपोद्घाते पृ० १७।

विदुषां विद्वत्कृतानां ग्रन्थानाञ्च सकाशादनेकविधं ज्ञानं गृहीत्वैव ग्रन्थान्तरं रच्यते; किञ्च, सृष्टयादावध्ययनाध्यापनक्रमो ग्रन्थश्च न कश्चिदप्यासीत्तदानीमीश्वरोपदेशमन्तरा न कस्यापि विद्यासम्भवो बभूव ।

इति प्राप्ते वदामः—ईश्वरेण मनुष्येभ्यः स्वाभाविकं ज्ञानं दत्तं तच्च सर्वग्रन्थेभ्य उत्कृष्टमस्ति नैव तेन विना वेदानां शब्दार्थ-संबन्धानामपि ज्ञानं भवितुमर्हति तदुन्नत्या ग्रन्थरचनामपि करिष्यन्त्येव पुनः किमर्थं मन्यते वेदोत्पादनमीश्वरेण क्रियते[1] । श्रूयते कल्पादौ मानवा वन्या अशिक्षिता मूढाश्च बभूवुः । तेऽनुकरणात्मक-शब्दैर्भाषां रूपयाञ्चक्रुः । कालक्रमेणाऽग्निनाऽन्नपाकः, वसननिर्माणं, पाषाणलौहताम्रेभ्यः शस्त्रास्त्रनिर्माणं, कृषि वाणिज्यञ्चाशिक्षन्, तथा विकासवादमतानुसारं वेदमपि जुगुम्फुः[2] । अथवा यो यो मन्त्राणां सूक्तानां वा ऋषिः प्रोच्यते तेनैव रचितास्ते मन्त्राः[3] । अथापि वेदव्याख्यानग्रन्थेष्वप्यृषीणां वेदरचने प्रमाणानि समुपलभ्यन्ते[4] । अपौरुषेयवादिनां 'न केनापि वेदकर्ता श्रुतः' इत्युक्तावाचक्ष्महे—पुरुषनिर्मितत्वाङ्गीकारे दौर्बल्यं मन्यमानैस्तत्र दार्ढ्यसम्पादनायैव पौरुषेयत्वं जानद्भिरपि भवद्भिस्स कर्ताऽपह्नुत इति[5] । अपि च वेदा अपौरुषेयास्तदा तेषु कथमर्वाचीनानां केषाञ्चन राज्ञा[6]मन्येषां पुरुष-विशेषाणां[7] देशविशेषाणां नद्यादीनां[8] वा नामानि श्रूयन्ते कथं वा

---

१. द्र० दयानन्दः, ऋ० भा० भू० पृ० १३ ।

२. द्र० डा० मंगलदेवः, भाषाविज्ञान परिच्छेद ८ पृ० १८१ ।

३. ऋषे मन्त्रकृतां स्तोमैः । ऋ० ९।११४।२ ।

४. कारुरहमस्मि कर्ता स्तोमानाम् । नि० ६।५ ।
ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः । ऐ० आ० १।१।१ ।
पुरस्तात् प्रत्यङ्मुखो दाता पश्चात् प्राङ्मुखः प्रतिग्रहीता ।
दातुरुत्तरतः प्रत्यङ्मुखी कन्या दक्षिणत उदङ्मुखो मन्त्रकारः ॥
वाराहगृह्यसूत्रे खण्ड १३ ।

५. विद्याधर गौडः, का० श्रौ० भू० पृ० ९ ।

६. पुरूरवोऽनुकेतमायं राजा मे वीर तन्वस्तदासीः । ऋ० १०।९५।५ ।

७. कण्वः कक्षीवान् पुरुमीढोऽगस्त्यः श्यावाश्वः सोभर्यर्चनानाः ।
विश्वामित्रोऽयं जमदग्निरत्रिरवन्तु नः कश्यपो वामदेव ॥ १५ ।
अथर्व० १८।३।१५ ।

८. इमं मे गङ्गे यमुने सरस्वति शुतुद्रि० । ऋ० १०।७५।५ ।

तेषामुपपत्तिरपि ततो वेदाः पौरुषेयाः ।

अथ च तत्रोर्वशीपुरूरवसोश्च वशिष्ठविश्वामित्रयोरिन्द्रवृत्रयोरहल्यागोतमयोः कथांशा उपाख्यानानि वा कथं नाम संगच्छेरन् ? नित्येषु खलु सत्सु वेदेषु तत्रानित्यानां मर्त्यानामुपाख्यानानि कथं नाम सम्भाव्येरन् ? विलसन्ति च तत्र बहुत्र तादृक्कथांशा य उपरिष्टाद्विवेक्ष्यन्ते, ततोऽपि वेदानां पौरुषेयत्वम् । अथ यदि कश्चित् पृच्छेत् वेदाः कथमस्मज्ज्ञानेषु समागताः ? एवं प्राप्ते वक्तव्यम्—आर्यावर्तनिवासिभिर्बहुवेदिभिर्महर्षिभिरेव तात्कालिकीं परिस्थितिमपरोक्षीकृत्य तामेव च ग्रन्थारूढां कर्तुमारचितो ग्रन्थराशिः । अतएव यत्र ते न्यवात्सुः, तत्रत्यानां नदीनां गिरीणाञ्च नामान्यपि बहून्युल्लिखितानि । तत्काले च या या देवतास्तेषां मनसि स्फुरिता आसन् तास्तास्तैः स्तुता मन्त्रेषु[1] । त एव मन्त्रा एकत्रीकृता ऋग्वेद इत्युच्यते । गच्छति च कस्मिंश्चन काले ततो यजुर्वेदस्तत्कुलीनैरेव कैश्चिन्महर्षिभिरारचित इति ।

अत्र विषये परे तु युक्तिप्रमाणाभ्यां स्वमतं स्थापयन्तो ब्रुवन्ति अपौरुषेया वेदा इति । पूर्वं तावन्नायं लिखितरूपं वेदपुस्तकमपि तु ज्ञानरूपं, श्रुतिरूपस्य ज्ञानस्य गुरुमुखेन श्रवणात्[2] । तस्य परमेश्वरस्यादिगुरुत्वात्[3] । सर्गादावग्निवायुसूर्याङ्गिरस ऋषयो ज्ञानं जगृहुस्तज्ज्ञानमेव वेदरूपम्[4] । निरवयवात् परमेश्वराच्छब्दमयो वेदः कथमुत्पन्न इति जिज्ञासायां न सर्वशक्तिमतीश्वरे शङ्केयं कुतः मुखप्राणादिसाधनमन्तराऽपि तस्य कार्यं कर्तुं सामर्थ्यस्य सदैव विद्यमानत्वात् , वेदस्य सूक्ष्मरचनवज्जगत्यपि महदाश्चर्यभूतं सृष्टत्वात् । यथा

---

१. द्र० विद्याधरगौडः, का० श्रौ० भू० पृ० ८ ।
　इदं ब्रह्म क्रियमाणं नवीयः । ऋ० ७।३५।१४ ।

२. वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
　वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥
　　　कुमारिलभट्ट, श्लोकवार्तिक पृ० ३६६ ।

३. पूर्वेषामपि गुरुः कालेनानवच्छेदात् । योग० १।२६ ।

४. अग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात् सामवेदः । शत० ब्रा० ११।५।८।३ ।
　तेभ्यस्त्रीन् वेदान्निरमिमत ऋग्वेदं यजुर्वेदं सामवेदमिति ।
　अग्नेर्ऋग्वेदं　वायोर्यजुर्वेदमादित्यात्　सामवेदम् ॥
　　　गो० ब्रा० पूर्वगोपथ १।६ ।

मनसि विचारणावसरे प्रश्नोत्तरादिशब्दोच्चारणं भवति तथैवेश्वर ऋषीणां हृदयेषु वेदान् ज्ञापितवान्' । यच्चोक्तं 'वेदा वाक्यत्वात् पौरुषेयाः, वाक्यानि शरीरिणैवोच्चार्यन्ते तन्न, यदि शरीरी कर्ता स्यात्तस्य चिरवृत्तत्वेनोपलब्ध्यभावेऽपि स स्मृतिपथमवतरेत् , न च स स्मर्यते ततो नास्त्येव कर्ता । यच्चोच्यते भवद्भिः कर्ताऽपह्नुत इति नैवमपि चतुरचेतसां मनोऽनुरञ्जयति, केनचिदपह्नवोऽस्मरणं वा हेतुराहोस्वित् सर्वैरस्मरणं सर्वैरपह्नवः । देवदत्तेनास्मृतस्यापि घटस्य विष्णुमित्रगृहे विद्यमानत्वात् , जैमिनीयैरस्मरणेऽपि कणादाक्षचरण-पक्षिलमुनिभिः स्मर्यमाणत्वात्[2] । एवमेव मीमांसका अपि शब्दस्य नित्यत्वं मन्यमाना एकस्वरेण वेदमपौरुषेयमुद्घोषयन्ति 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत' इत्यपि पूर्वपूर्वकल्पे श्रुतेरस्तित्वं बोधयति । यदि दार्ढ्यसम्पादनाय कर्तुरपह्नवो भवेत्तदपि न, धर्मभीरुभिर्भारतीयै-रामायणं वाल्मीकिमुनिप्रणीतं महाभारतं व्यासमुनिप्रणीतमिति दृढं जानद्भिरपि सत्कारेणाङ्गीकरणात् । तर्हि को नाम तादृशो महान् प्रतिबन्ध आसीत्तेषां स्वपूर्वकालिकेतिहासपरिज्ञाने, येन ते सर्वथा तमपरिज्ञाय वेदमपौरुषेयं साधयन्ति[3] ।

स्वाभाविकज्ञानोत्कर्षेण वेदमपि रचयामासुरित्यत्रोच्यते सर्वे प्राणिनः स्वाभाविकज्ञानसम्पन्नास्सन्ति । यथा शिशुर्जात एव रुदिति स्वपिति स्तन्यं धयते । परमेवंविधेन ज्ञानोत्कर्षेण न वेदाः कर्तुं शक्याः । यतो महारण्यस्थानां मनुष्याणां स्वाभाविकज्ञाने सत्यप्येकान्ते रक्षितस्य पुरुषस्य च पशुवत् प्रवृत्तिर्दृश्यते । यथा चक्षुर्मनःसाहित्येन विना ह्यकिञ्चित्करं भवति तथैव विदुषामीश्वरज्ञानेन विना स्वाभाविक-ज्ञानमप्यकिञ्चित्करम्[4] ।

यद्युच्येत विकासक्रमेणानुकरणात्मकैर्मनोरागव्यञ्जकैश्च शब्दैर्भाषां शिक्षयाञ्चक्रुस्तेन च वेदाः प्रणीताः, तदपि न, यत एवंविधैः शब्दमात्र-श्रवणैरेवंविधां साहित्यालङ्कारैरलङ्कृतां विस्मयावहां विविधविद्या-प्रसवित्रीं वेदवाणीं मनुष्याश्चक्रुरिति न कस्यापि प्रेक्षावतो मतिमनु-रञ्जयति । "परमकारुणिको हि परमेश्वरोऽस्ति पितृवत् । यथा पिता

---

२. द्र० दयानन्दः, ऋ० भा० भू० पृ० ११ ।

४. द्र० सायणः, अथर्ववेदस्योपोद्घाते पृ० १८ ।

५. द्र० विद्याधरगौडः, का० श्रौ० भू० पृ० ८-१० ।

१. द्र० दयानन्दः, ऋ० भा० भू० पृ० १३ ।

स्वसन्ततिं प्रति सदैव करुणां निदधाति तथेश्वरोऽपि परमकृपया सर्वमनुष्यार्थं वेदोपदेशमुपचक्रे । अन्यथाऽन्धपरम्परया मनुष्याणां धर्मार्थकाममोक्षसिद्ध्या विना परमानन्द एव न स्यात्"[१] । यद्युच्यते ऋषय एव मन्त्ररचयितारस्तदपि न युक्तिसहमृषिर्दर्शनात्[२] । यच्च पूर्वपक्षिणा प्रमाणान्युपन्यस्तानि न तान्यपि सम्यक् । यत एकस्य धातोरनेकार्था भवन्ति यथोपदिशति पतञ्जलिमुनिः "करोतिरभूत-प्रादुर्भावे दृष्टः, निर्मलीकरणे चापि वर्तते, पृष्ठं कुरु पादौ कुरु उन्मृदानेति गम्यते । निक्षेपणे चापि वर्तते कटे कुरु घटे कुरु अश्मानमितः कुरु स्थापयेति गम्यते"[३] । अतः कारुरिति स्तोमकर्ता स्तुतीनां प्रयोक्ता अर्थे प्रयुज्यते[४] । अनेनैवान्येऽपि प्रयोगाः सिद्धाः । यदि कश्चिद् ब्रूयात्—ऋषयो न मन्त्रकारा अपितु द्रष्टार एव स्युस्तत्कथं द्रष्टॄणां नामानि वेदमन्त्रेषु संगच्छेरन्, यतो हि द्रष्टा तु कृतेः पश्चात् भवति । अत्रोच्यते—द्रष्टॄणां नामान्युपाधिकृतानि यौगिकानि सन्ति न तु व्यक्तिविशेषवाचकानि[५] । यथा कश्चित् सर्वेभ्यो भगवन् भगवन्निति सम्बोधयति तस्य नाम भगवदेव लोके प्रथते । एवं यो य ऋषिर्यं यं मन्त्रं ददर्श तस्य तस्य तन्नाम प्रथितम् । पश्चाद् वेदशब्दस्य श्रेष्ठमर्थं दृष्ट्वा स्वसंज्ञामपि चक्रुः । पूर्वं तावत् प्रजापतिनाऽङ्गीकृतेयं शैली पश्चादन्यैर्ऋषिभिरपि । यद्यृषयो मन्त्रकाराः स्युस्तर्हि ये मन्त्राणां सरितः शैला आदित्यः, चक्षुः, कूर्मः, मत्स्यः, शङ्खः, कपोतः, श्येनः, ऋषभ इत्यादय ऋषयः सन्ति कथमेते मन्त्रकर्तारः स्युः ? यत्र तत्र चाग्निवरुणसोमानां निह्वः[६] क्रियाविधायकः शब्दोऽपि । अथ चैकस्मिन्नेव मन्त्रे ऋषिभेदः, "भार्गवः प्रयोगो बार्हस्पत्यो वाऽग्निः पावकः सहसः सुतयोर्वाग्न्योर्गृहपतिर्यविष्ठयोर्वान्यतरः"[७] । किमेते सर्व

---

१. द्र० तत्रैव पृ० १५ ।

२. नि० २।११, तत्र मन्त्राणां ऋषिर्द्रष्टा । तैत्तिरीयसंहितायाः भट्टभास्कर-भाष्योपोद्घाते पृ० ५ ।

३. महाभाष्यम् पा० १।३।१ ।

४. द्र० दुर्गभाष्यम् नि० ६।६ ।

५. छान्दोग्योपनिषत् १।३।६ ।
द्र० ब्रह्ममुनिः, 'मन्त्रों के ऋषि' पृ० ६ ।

६. ऋ० १०।१२४।१, ५–८ ।

७. ऋग्वेदीयसर्वानुक्रमणी ऋ० ८।१०२ ।

एवैकस्य मन्त्रस्य रचयितारः ? एवमृषीणां मन्त्रकर्तृत्वे मन्यमाने पदे पदे दोषो मिथ्याभ्रमविलासश्च। यच्चोक्तं नित्येषु सत्सु वेदेषु कथमनित्यानां मर्त्यानामाख्यानानि नाम ? अत्रोच्यत ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता[१], अतश्च दर्शयति मन्त्राणामैतिहासिकोऽप्यर्थ उपेक्षितव्योऽसावपि तेषां विषयः[२]। यानि च नामानि मन्त्रेषूपलभ्यन्ते तेषां निर्वचनं दिग्दर्शनार्थमत्र प्रस्तूयते। तद्यथा—

विष्णुः[३]— व्यापनशीलस्य देवस्येन्द्रस्य वा,[४] विष्णवाशानां पते[५]। यदिदं किञ्च तद् विक्रमते विष्णुः[६]।

वसिष्ठः— ये वै ब्राह्मणाः शुश्रुवांसस्ते वसिष्ठाः[७]। वसिष्ठोऽप्याच्छादित उदकसंघातः[८]। प्राणो वै वसिष्ठ ऋषिः[९]। अतिशयेन वसुः[१०]। यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यत् वक्तृतमो वसति तेनैव वसिष्ठः[११]। श्रेष्ठो वै वसिष्ठो भवति[१२]।

विश्वामित्रः—श्रोत्रं वै विश्वामित्र ऋषिः। यदनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रम्[१३]।

---

१. नि० १०।१०।

२. दुर्गभाष्यम् नि० १०।१०, तत्रोपमार्थेन युद्धवर्णाः भवन्ति। नि० २।१६। एवमाख्यानस्वरूपाणां मन्त्राणां यजमानेन नित्येषु च पदार्थेषु योजना कर्तव्या, एष शास्त्रे सिद्धान्तः। स्कन्दभाष्यम् नि० २।१२। औपचारिकोऽयं मन्त्रेष्वाख्यानसमयः, परमार्थेन तु नित्यपक्ष इति। स्कन्दभाष्यम् नि० २।१२।

३. अथर्व० ७।४८।३।

४. सायणभाष्यम् अथर्व० ७।४८।३।

५. तै० ब्रा० ३।११।४।१।

६. नि० १२।१६।

७. जैमिनीयब्राह्मणम् २।२४२।

८. स्कन्दभाष्यम् नि० ५।१४।

९. उवटभाष्यम् यजु० १३।५४।

१०. दयानन्दभाष्यम् ऋ० ७।१८।२१।

११. शत० ब्रा० ८।१।१।६।

१२. ततो वै स देवानां श्रेष्ठोऽभवत्। येन वै श्रेष्ठः तेन वसिष्ठः। गो० ब्रा० उत्तरगोपथ ३।९।

१३. शत० ब्रा० ८।१।२।६।

विश्वं मित्रं येन भवतीति वा[१]।

भृगुः— ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः सन्तप्ताभ्यो यद्रेत आसीत्तदभृज्यत, यदभृज्यत तस्माद् भृगुः समभवत्, तद्भृगोर्भृगुत्वम्[२]।

अङ्गिराः— तस्य श्रान्तस्य तप्तस्य सन्तप्तस्य सर्वेभ्योऽङ्गेभ्यो रसोऽक्षरत् सोऽङ्गरसोऽभवत्तं वा एतमङ्गरसं सन्तमङ्गिरा इत्याचक्षते[३]।

वरुणः— यच्च वृत्वाऽतिष्ठंस्तद्वरणोऽभवत्। तं वा एतं वरणं सन्तं वरुण इत्याचक्षते[४]।

नमुचिः— यो जलं न मुञ्चति[५]।

गन्धर्वः— गामुदकं धारयतीति गन्धर्वो मेघः[६]। गन्धर्वाप्सरसः[७]।

पुरूरवाः— बहुधा रोरूयते[८]। प्राण एव हि पुरूरवाः, स बहुधा रोरूयते स्तनयति तत् पुरूरवाः[९]।

उर्वशी— विशेषेण द्योतते देदीप्यते इति विद्युद् उर्वशी[१०]।

गङ्गा— गमनात्[११]। सा हि विशिष्टं स्थानं गच्छति गमयति वा प्राणिनो विशिष्टं स्थानमिति गङ्गा[१२]।

यमुना— प्रयुवती गच्छतीति प्रवियुतं गच्छतीति वा[१३]। प्रकर्षेण मिश्रयत्यन्याभिर्नदीभिः स्वान्युदकानि गच्छति।

---

१. दयानन्दभाष्यम् यजु० १३।५७।

२. गो० ब्रा० पूर्वगोपथ १।३।

३. गो० ब्रा० पूर्वगोपथ १।७।

४. गो० ब्रा० पूर्वगोपथ १।७।

५. दयानन्दभाष्यम् यजु० १९।३४।

६. सायणभाष्यम् ऋ० ८।६६।५।

७. शत० ब्रा० ९।४।१।४, जैमिनीयोपनिषद्ब्राह्मणम् ३।१।५।१ जैमिनीयब्राह्मणम् ३।३४८।

८. नि० १०।४६।

९. दुर्गभाष्यम् नि० १०।४७।

१०. दुर्गभाष्यम् नि० ५।१४। वश कान्तौ।

११. नि० ९।२६।

१२. दुर्गभाष्यम् नि० ९।२६।

१३. नि० ९।२६।

स्तिमितमिव तरङ्गैर्गच्छति वा[1]।

सरस्वती— सर इत्युदकनाम। सर्त्तेस्तद्वती[2]।

शुतुद्री— शु द्राविणो क्षिप्रद्राविण्याशु तुन्नेव द्रवति[3]।

अगस्त्य:— ये धर्मादन्यत्र न गच्छन्ति तेऽगस्तयस्तेषां साधुः[4]।

लोपामुद्रा— लोप एव आमुद्रा समन्तात् प्रत्ययकारिणो यस्याः सा[5]।

भरद्वाजः— विद्यासद्गुणान् भर्ता वाजं विज्ञापयिता[6]।

पराशरः— परा श्रृणाति दुष्टानां हिंसकः[7]।

अम्बरीषः— शब्दविद्यावित्। शब्दार्थकादबिधातोरौणादिक ईषन् प्रत्ययो रुगागमश्च[8]।

वृषाकपिः— तद्यत्कम्पयमानो रेतो वर्षति तस्माद् वृषाकपिः। तद् वृषाकपेः कपित्वं[9] अथ यद् रश्मिभिरभिप्रकम्पयन्नेति तद् वृषाकपिर्भवति[10]।

एवमेवान्येषामपि शब्दानां यौगिकरूपेण निर्वचनं कर्तव्यं यतः सर्वाणि नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च[11]। अथ च बहूनि निगमस्यैव प्रमाणानि निगमस्येश्वरकर्तृत्वं स्पष्टं साधयन्ति,[12]

---

१. दुर्गभाष्यम् नि० ६।२६।

२. नि० ६।२६।

३. नि० ६।२६।

४. दयानन्दभाष्यम् ऋ० १।१७६।६।

५. दयानन्दभाष्यम् ऋ० १।१७६।४।

६. दयानन्दभाष्यम् ऋ० १।११२।१३।

७. दयानन्दभाष्यम् ऋ० ७।१८।२१।

८. दयानन्दभाष्यम् ऋ० १।१००।१७।

९. गो० ब्रा० उत्तरगोपथ ६।१२।

१०. नि० १२।२८।

११. नि० १।१२।

१२. तमृचश्च सामानि च यजूंषि च ब्रह्म चानुव्यचलन्। अथर्व० १५।६।८।

अहं दा गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम्।
अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन् भरे॥
ऋ० १०।४९।१।

तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे० यजु० ३१।७।

यस्मिन् वेदा निहिता विश्वरूपा०। अथर्व० ४।३५।६। (अग्रिमे पृष्ठे)

अस्माद्भिन्ने कर्तरि प्रमाणाभावात् । निगमस्येश्वरकर्तृत्वात् तस्यैव प्रामाण्यमिति भावः । ततोऽपौरुषेया इमे ।

वेदाः पौरुषेया अपौरुषेया वा ? विवादोऽयमद्य यावद्वर्तते । न केवलं पाश्चात्या विद्वांस एव परस्परमत्र विवदन्ते परं केचिद्भारतीया अपि कदाचिन्नैकमत्यं भजन्ते । अत्र तु पक्षद्वयस्यापि युक्तिप्रमाणानि स्वकीयश्च निर्णयः प्रेक्षावतां पुरतः प्रस्तुतः । त एव चात्र प्रमाणम् ॥

## ( ५ ) वेदेष्वितिहासविमर्शः

वेदस्यापौरुषेयत्वे सिद्धे सति तत्रेतिहासोऽस्ति न वेति विवेचनीयं भवति । इतिहासो नामातीतवृत्तानां क्रमविषयकः परिचयः । यश्च वेदो नित्य आदिमानवादपि पूर्वः परमेश्वरकृतस्सिध्यति न तस्मिन्नितिहासाऽवकाशः । परं तावद् दृश्यते बहुत्र कथांशा उपाख्यानानि च श्रूयन्ते, बृहद्देवताप्रणायकेन शौनकाचार्येण यत्र क्वचिच्च यास्काचार्येणापि तथैव प्रतिपादित इतिहासो वेदेषु । सायणाचार्येण वेदस्यापौरुषेयत्वं प्रतिजानताऽपि स्ववेदभाष्येषूपाख्यानानि वर्णितानि । एवमेव वेङ्कटाचार्येणग्भाष्ये । तदत्र विचार्यते किं सत्यं वेदेषु राज्ञामृषीणां चेतिहास उतालङ्कारमात्रमेव ? इतिहासपक्षे विपक्षे चोभयत्र बहूनि प्रमाणानि समुपलभ्यन्ते ।

तदत्र प्रस्तूयते ये शब्दा लौकिका नहुषपुरूरवस्पाराशरादयो वेदेषु सम्प्राप्यन्ते तेषां शब्दानां नामधारिणामृषीणां राज्ञां चोपाख्यानान्यैतरेयादिषु ब्राह्मणेषु भागवतादिषु पुराणेषु चापि प्रतिपादितानि, ततो निश्चीयते यद्वेदा इतिहासयुक्ताः सन्ति । एतद्विषये पूर्वं तावच्छ्रोत्रस्थानेन निरुक्तशास्त्रेणावलोक्यते—

---

यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम् ॥ अथर्व० १०।७।२०। १०।८।३२, १६।७२।१, ७।१०५।१ ।

ब्रह्म ब्रह्मण उज्जभार । अथर्व० ४।१।३ ।

श्लोकं देवः कृणुते स्वाय धर्मणे । ऋ० ४।५३।३ ।

तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात् सामवेदः । शत० ब्रा० ११।५।८।३ ।

एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः० । शत० ब्रा० १४।७।३।११ ।

तत्र च यद्देवापिः[1] इत्यस्मिन् मन्त्रविषये यास्काचार्यो विवृणोति—देवापिः शन्तनुश्च द्वौ कौरव्यौ भ्रातरौ बभूवतुः। तयोः शन्तनुः कनिष्ठो देवापिश्च ज्येष्ठ आसीत्। स शन्तनुर्ज्येष्ठभ्रातरं देवापिमतिक्रम्य स्वमभिषेचयामास। देवापिश्च तपस्तेपे। तदा शन्तनुराज्ये द्वादशवर्षाणि देवो न ववर्ष। दुर्भिक्षेण व्यग्रमना निबिडे कान्तारे तपस्यन्तं देवापेरन्तिकं जगाम। क्षमां ययाचे[2]। तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति।

'उतासिमैत्रावरुणोर्वसिष्ठोर्वश्या[3]' इत्यृचो व्याख्याने यास्काचार्यो निरूपयति—उर्वशी नाम्न्यप्सराऽऽसीत्। सा रूपवती सुन्दरी। तस्या दर्शनान्मित्रावरुणयोर्देवयोर्रेतश्चस्कन्द[4]। 'य इमा विश्वा भुवनानि जुह्वत्[5]' इति मन्त्रं व्याख्यायन् विवृणुते—"विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार। स आत्मानमप्यन्ततो जुहवाञ्चकार"[6]। तथा चाह 'तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं भवति[7]।

अन्यच्च वेदेषु वेदव्याख्यानभूतेषु वा ग्रन्थेषु बहुश आख्यानान्युपलभ्यन्ते। तद्यथा—

अगस्त्य ऋषिरासीत्। लोपामुद्रा च तस्य ऋषिवरस्य धर्मपत्नी बभूव। तौ दम्पती प्रजामैच्छताम्[8]। नहुषः पराक्रमी नरपतिर्देवानां राजा बभूव। एकदा स सहस्रवर्षेभ्यो दीक्षामाप्नोत्। अथ च सर्वाभ्यो नदीभ्य उवाचाहं यक्ष्ये। यूयं सर्वा मदर्थं सर्वान् भोगान् वहत।

---

१. यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्। देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्॥ ऋ० १०।९८।७।

२. नि० २।११।

३. ऋ० ७।३३।११।

४. द्र० नि० ५।१४।

५. ऋ० १०।८१।१।

६. नि० १०।२६।

७. नि० ४।६।

८. द्र० सायणभाष्यम्। लोपामुद्रा वृषणं नीरिणाति धीरमधीरा धयति श्वसन्तम्। अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः॥ ऋ० १।१७९।६।

नद्यस्तं प्रत्यूचुः—हे राजन् त्वं सरस्वतीं नदीं प्रपद्यस्व, सा ते भोगान् वक्ष्यति । सा सरस्वती तस्मै भोगान् दुदुहे[1] ।

अत्रिमुनेः सुता अपालानाम्नी गलित्कुष्ठरोगेणाक्रान्ता स्वपितुराश्रम उवास । सा स्वरोगापनयनार्थं देवराजमिन्द्रं स्वतपसा तुतोष । तुष्टो देवराजस्तस्या अन्तिकमुपगतः । सा देवेन्द्रं दृष्ट्वा सोमेनापूपसक्तुभिश्च तं सत्कृत्याब्रवीत्—हे पुरन्दर ! मां सुलोमां सुत्वचामनवद्याङ्गीं कुरु । तस्याः प्रार्थनामूरीकृत्य शक्रस्तां स्वरथछिद्रेण प्रक्षिप्य निश्चकर्ष तदा साऽनुपमरूपवती लावण्यवती बभूव[2] ।

पणिनामका असुरा रसानदीपारनिवासिन आसन् । एकदा त इन्द्रस्य गामपजह्रुर्न्यगूहुश्च । तेषां कृत्यं बृहस्पतिर्देवगुरुस्तपसा बुबोधेन्द्रश्च शशंस । स इन्द्रस्ता अन्वेषणायासुराणामुपाके स्वदूतीं सरमानाम्नीं शुनीं प्राहिणोत् । तेऽसुरा इन्द्रस्य दूतीं सरमां प्राहुः—सरमे ! 'गोभिरश्वेभिर्वसुभिर्न्यृष्टां' निधिं वयं रक्षामः, न तमिन्द्रो ग्रहीतुं शक्नोति, अतस्त्वमिन्द्रसमीपे मा गच्छेहास्माकं स्वसा भव । सा पयोलोभादसुराऽनुगृहीतचित्ता पणिनामन्तिकं गावो न सन्तीत्येवमिन्द्राय प्रत्युवाच । इङ्गितज्ञः शक्रस्तस्या अलीकं ज्ञात्वाऽसुरान् जघान गाश्च प्रत्यावर्तयत्[3] ।

उर्वश्यामप्सरस्यनुरक्तः पुरूरवा राजर्षिरासीत् । तयोः प्रगाढस्नेह आसीत् । तयोरनुरागं दृष्ट्वा शक्रः स्वमायया तौ दम्पती व्ययोजयत् । उर्वश्या वियुक्तो नृपतिरुन्मत्त इव जातस्तदैकदा पर्यटन् चिरकालानन्तरं सः स्वप्रियामुर्वशीं वरटारूपेण सखीभिस्सह विचरन्तीमद्राक्षीत् । सः तां बहुधा स्वेन सह गन्तुमाह्वयामास

---

१. द्र० बृहद्देवता ६।२०–२३ ।

रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय । ऋ० ७।९५।२ ।

२. द्र० बृहद्देवता ६।९९–१०६ ।

खे रथस्य खेऽनसः खे युगस्य शतक्रतो ।
अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम् ।।
ऋ० ८।९१।७ ।

३. द्र० बृहद्देवता ८।२४–३६ ।

अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्ति तं पणयो ये सुगोपा रेकुपदमलकमाजगन्थ ।।
ऋ० १०।१०८।७ ।

विललाप च। सा राज्ञो वचनं श्रुत्वाऽब्रवीत् पुरूरवः! "मा मृथाः मा प्रपप्तो मा त्वा वृकासो अशिवास उक्षन्। न वै स्त्रैणानि सख्यानि सन्ति[१]।"

सरण्यूनाम्नी त्वष्टुर्दुहिताऽऽसीत्। तस्या विवस्वता सह परिणयः संजातः। ततः सरण्यू यमयम्यौ प्रसुषाव। पुनः सा भर्तुः परोक्षे स्वसदृशीं नारीं छायां ससर्ज। तस्यै छायायै स्वापत्यानि निक्षिप्य सरण्यूर्वडवारूपेण दूरञ्जगाम। विवस्वानपक्रान्तां तां सरण्यूमश्वरूपिणीं प्रति वाजीभूत्वा प्रदुद्राव। सा स्वपतिं हयरूपिणं ज्ञात्वा मिथुनायोपचक्राम। तदा कुमारावश्विनौ सूर्यवर्णौ संबभूवतुः[२]।

च्यवनो नामर्षिः स्थविर आसीत्। स राजर्षेः सुतां सुकन्यां श्यामां परिणीतवान्। सुकन्यायाः पातिव्रत्येन प्रमुदितावश्विनौ चिकित्सयर्षिवरं पुनर्युवानं कृतवन्तौ[३]।

एवं पूर्वपक्षिणां मते वेदेष्वितिहासोऽस्ति तत्र च सन्ति निरुक्त-बृहद्देवतादीनां ग्रन्थानां बहूनि प्रमाणानि। अत्रास्माकमपि न कश्चिद्विरोधः, दृष्टिभेद एव केवलम्। ऐतिहासिका अनित्यानां पश्चाद्भवानां मर्त्यानामितिहासं मन्यन्ते, वयञ्च नित्यानां पुरुषाणामितिहासम्। यथा हि 'सं मा तपन्ति' इत्यस्य मन्त्रस्य त्रितनामर्षिः। त्रिषु स्वर्गनरकमर्त्येषु बद्धः त्रितः कश्चित् क्षेत्रज्ञः। येनापि पुरुषेणायं मन्त्रः साक्षात्कृतः स त्रितनाम्ना विश्रुत उपाधिहेतुत्वात्। यथा लोके तं तमुपाधिमासादयन्तस्तेन तेन पदेन श्रूयन्ते[४]। निरुक्ताचार्यस्येतिहास-शब्दप्रयोगेणैव नैतदङ्गीकर्तुं शक्यते यत्स वेदेष्वितिहासं मन्यते। निरुक्तं हि निर्वचनशास्त्रम्। यौगिकशब्दस्यैव निर्वचनं जायते।

---

१. द्र० शत० ब्रा० ११।५।१।१-१०, ऋ० १०।९५।५,१०,१२,१५।

२. त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश॥
अपागूहन्नमृतां मर्त्येभ्यः कृत्वा सवर्णामदर्दुर्विवस्वते।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः॥
ऋ० १०।१७।१-२

३. युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः।
ऋ० १०।३९।४।

४. द्र० 'मन्त्रों के ऋषि' पृ० ९।

निरुक्तसमये च सर्वे शब्दा यौगिकाः सन्ति[१]। 'आख्यानप्रिया हि देवाः' इत्युक्तिरपि यास्कस्य[२]। तत्रोपमार्थेन युद्धवर्णा भवन्ति[३]। तस्मादाहुर्नैतदस्ति यद् दैवासुरमिति[४]। एवंविधानामाख्यानस्वरूपाणां मन्त्राणां यजमानेन नित्येषु पदार्थेषु योजना कर्तव्या, एष एव शास्त्रे सिद्धान्तः, औपचारिकोऽयं मन्त्रेष्वाख्यानसमयः परमार्थेन तु नित्यपक्ष एव[५]।

एवमुर्वश्यर्थं व्याचक्षमाणो वदत्याचार्योऽप्स इति रूपनाम, या या रूपवती स्त्री सा उर्वशी भवति[६]। अपि च पितृपुत्रभावो न चेतनेष्वेव पदार्थेषु भवति, जडेष्वपि, यथा तनूनपादाज्यं भवति। गौस्तनूः भोगानां तननात् तन्वाः पुत्रं पयः पौत्रश्चाज्यम्[७]। अथापि पार्वतेयी शिलाघट्टकस्य नाम पर्वताज्जायमानत्वात्[८]। एवमेव बृहद्देवताया-मप्याख्यानानि गूढार्थानि। परमेश्वरो वेदस्य निगूढमर्थं काल्पनिकेनाख्यानालङ्कारेण यथा सुबोधोऽर्थस्स्यात् तथर्षिहृदयेषु प्रकाशयते। अतोऽत्र तासां कथानां मूलत्वेनाभिमतानां मन्त्राणां सत्योऽर्थो दिग्दर्शनार्थं प्रस्तूयते :

**( क ) देवापिशन्तन्वोरुपाख्यानम्—**

> यद्देवापिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्।
> देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्॥[९]

अत्र वृष्टिविज्ञानं वर्तते। यदा विद्युद् विद्योतते तदनु गर्जति तदा देवो वर्षति। यावत् प्रकाशात्मिका विद्युत् स्तनयित्नुना शब्दलक्षण-वैद्युतेन साकं न संयुज्यते तावद्देवो न वर्षति, अत उच्यते यदा

---

१. तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। नि० १।१२।

२. ऋषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता। नि० १०।४६,१०।१०।

३. नि० २।१६।

४. शत० ब्रा० ११।१।६।६।

५. स्कन्दभाष्यम् नि० २।१२।

६. नि० ५।१३।

७. नि० ८।५।

८. पार्वतेयी यजुः १।१४ अस्य मन्त्रस्य शतपथब्राह्मणे द्र० १।१।४।७। कनीयसी ह्येषा दुहितेव भवति तस्मादाह पार्वतेयीति। शत० ब्रा० १।२।५।१७।

९. ऋ० १०।९८।७।

देवापिः = देवानामाप्त्या स्तुत्या प्रदानेन च प्रकाशात्मिका विद्युत् शन्तनवे = शं तनुरस्यास्ति शम् कल्याणकारी वृष्टिलक्षणाय जलावाप्त्यर्थं होत्राय = वृष्टिरूपयज्ञाय वृतः स्वीकृतः कृपयन्=सामर्थ्यं वर्धयन् अदीधेत् = प्रकाशते, तदा बृहस्पतिः =बृहतां महतां वाचां पतिः स्तनयित्नुलक्षणविद्युत् देवश्रुतं=देवैः श्रोतुं योग्यं वृष्टिवनिं=वृष्टियाचिनं वाचं = शब्दलक्षणां वाणीं रराणः = प्रकाशयन् अस्मै देवाप्यै प्रकाशात्मकवैद्युतायायच्छत् प्रदत्ते तदा देवो वर्षति[1]।

**( ख ) वसिष्ठोर्वश्या उपाख्यानम्—**

उतासिमैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधिजातः ।[2]

अत्रोपरिष्टात् 'विद्युतो ज्योतिः परिसिञ्जहानम्' इत्यृचातो वृष्टिप्रसङ्गः प्राप्यते । मित्रावरुणौ वाय्वादित्यौ भवतः[3], तौ च वृष्ट्यां सहायकौ[4] । आदित्यो मेघस्य प्रेरणान्मित्रः । वायुर्मेघस्य वरयितृत्वाद्धारयितृत्वाद् वरुणः, तयोर्मित्रावरुणयोरेतो मेघरूपं चस्कन्द, पुनर्वसिष्ठस्योदकसमूहस्य ( प्रावृष्याऽऽच्छादितोदकस्य ) प्रकटीभाव इत्यालङ्कारिकं वर्णनम् । हे आकाशीयोदकसमूह वसिष्ठ ! त्वं रश्मिसमूहवत आदित्यस्य मित्रस्य सूक्ष्मवाष्पवतो वायोर्वरुणस्य सहयोगतः सम्भूतोऽसि । हे परिवृद्धवृष्टिजल ! त्वमुर्वश्या विद्युतो ( उर्वशी = रूपवती विद्युत्, उरुभ्यां बहुभ्यामश्नुते व्याप्नोतीति[5] ) मनसः कान्तात् चञ्चलघर्षणबलात्प्रकटीभूतः[6] ।

**( ग ) अगस्त्यलोपामुद्रयोरुपाख्यानम्—**

नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित् ।
लोपामुद्रा वृषणं नीरिणाति धीरमधीरा धयतिश्वसन्तम्[7] ॥

परमेश्वर उपदिशति कामनावतीं पुरुषमभिलषन्तीं कन्यामेव

---

१. तु० ब्रह्मदत्त जिज्ञासु, देवापि और शन्तनु के वैदिक आख्यान का वास्तविक स्वरूप ।

२. ऋ० ७।३३।११ ।

३. स्कन्दभाष्यम् नि० ५।१४ ।

४. एतौ वर्षस्येशाते । काठकसंहिता ११।१० ।

५. दुर्गभाष्यम् नि० ५।१४ ।

६. तु० दुर्गभाष्यम्, ब्रह्ममुनिभाष्यम् नि० ५।१४ ।

७. ऋ० १।१७९।४ ।

परिणयेत्तदैव सुखमेधते। लोपामुद्रा शब्दोऽत्र स्त्रीवाची। इतोऽमुतः कुतश्चिदाजातः = सर्वतो प्रसिद्धः, वीर्यं रुधतः नदस्य = अव्यक्तशब्दं कुर्वतो वृषभस्य कामः = कामदेवो मामागन् = आप्नोति। अर्थात् वृषभवत् कामयुक्ताऽधीरा धैर्यरहिता लोपामुद्रा (लोप एव आमुद्रा प्रत्ययकारिणी) या स्त्री भवति सा वृषणं = वीर्ययुक्तं धीरं श्वसन्तं पुरुषं नीरिणाति = प्राप्नोति धयति = अधिगच्छति च। धैर्यविहीनेन कामदेवेन ग्रस्ता लोपामुद्रा लज्जावती कामनावती स्त्री शयमानं कामिनमाप्नोति[1]।

अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः।
उभावर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम[2]॥

अत्र सन्तानोत्पत्तिर्विषयः। यथा खनित्रैः खनमानः कृषीवलो धान्यादिकं प्राप्य सुखी जायते तथा ब्रह्मचर्येण विद्यया प्रजामपत्यं बलमिच्छमानोऽगस्त्य ऋषिः (ये धर्मादन्यत्र न गच्छन्ति तेऽगस्तयस्तेषु साधुः) उग्रो विद्वान् पुपोष पुष्णाति विद्वत्सु च सत्या आशिषो जगाम = प्राप्नोति तथोभौ वर्णौ स्त्रीपुरुषौ भवेताम्।

यथा कृषीवलाः सुक्षेत्रेषु धान्यान्युप्त्वा फलवन्तो भवन्ति यथा च धार्मिका विद्वांसः सत्यान् कामानाप्नुवन्ति तथा ब्रह्मचर्येण शरीरं संपोष्य स्वेच्छयोद्वाहः कार्यस्तेन सुक्षेत्रोत्तमबीजसम्बन्धवत् फलवन्तो भवन्ति[3]।

**( घ ) नहुषसरस्वत्या उपाख्यानम्—**

एकाचेतत् सरस्वती नदीनां शुचिर्यती गिरिभ्य आ समुद्रात्।
रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय[4]॥

एका अचेतत् जडा सरस्वती (सरः = उदकम्) उदकवती सरित् नदीनामन्यक्षुद्रनदीनां शुचिर्यती पवित्रतां भरन्ती गिरिभ्यः पर्वतेभ्यो विनिःसृता आ समुद्रं याति। सा रायः = धनं रत्नं बहु चेतन्ती प्रज्ञापयन्ती भुवनस्य गौर्भोगमयी भूत्वा घृतं पयश्च दुदुहे नाहुषाय = मनुष्याय। नहुष इति मनुष्यनामसु पठितम्। अत्रोपमालङ्कारः। यथा मनुष्येभ्यो गौर्घृतं प्रयच्छति तथा नद्यपि वृष्ट्यादिसुखस्य साधनत्वात्

---

१. द्र० दयानन्दभाष्यम् ऋ० १।१७९।४।

२. ऋ० १।१७९।६।

३. द्र० दयानन्दभाष्यम् ऋ० १।१७९।६।

४. ऋ० ७।९५।२।

क्षेत्रसिञ्चनाद् वनस्पतिप्रजननात् सर्वभूतानां प्राणहेतुत्वाद् भुवनस्य गौरिव मनुष्येभ्यो भोगान् वहति।

**( ङ ) अपालेन्द्रयोरुपाख्यानम्—**

खे रथस्य खेऽनसः खे युगस्य शतक्रतो।
अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम्[१]॥

अत्र वरवध्वोः परिणयविषयः। हे शतक्रतो इन्द्र! बहुकर्मिन् ऐश्वर्यवन् वर इति यावत्। त्वम् अपालां पालकेन भर्त्रा विरहितां ब्रह्मचारिणीं नववधूं रथस्य खे रथयानस्यावकाशेऽनसः खे शकटयानस्यावकाशे युगस्य खे युगयुक्तस्य रथस्यावकाश उपस्थापय। अथ च तां त्रिविधमधिकुरु ज्ञानेन गमनेन प्राप्त्या च तस्या अवगुणान् ऊनतां च विपूय तां सूर्यवत्तेजस्विनीं कुरु।

**( च ) पणिसरमयोरुपाख्यानम्—**

"अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः।
रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमा जगाम[२]॥"

'देवशुनीन्द्रेण प्रहिता पणिभिः असुरैः समूद' इत्याख्यानस्य वाक्यं व्याख्यायन्नाचार्यो विशदयते—"देवशुनीन्द्रेण प्रहिता इति निदानप्रख्यापनं मन्त्रार्थाभिव्यक्तये। 'समूदे' संवादं कृतवतीत्यर्थः"। इत्याख्यानविद एवं मन्यन्ते[३]।

अत्र सरमा शब्दः सरणादितिनिर्वचनात्[४] मध्यस्थानीदेवतासु पठितत्वात् कश्चिद् भौतिकः पदार्थः। मध्यस्थानीदेवतायाः स्थानमन्तरिक्षम्। यत्र मेघाः सम्भवन्ति तदन्तरिक्षं नाम। तत्र भवा सरमा माध्यमिका वाक्[५] स्तनयित्नु[६]र्मेघेषु ध्वनिसारणाद् गर्जनलक्षणत्वात्। इन्द्रः=आदित्यः। एष वा इन्द्रो य एष तपति[७]। तस्य रश्मयो

---

१. ऋ० ८।९१।७।
२. ऋ० १०।१०८।७।
३. द्र० दुर्गभाष्यम् नि० ११।२५।
४. नि० ११।२४।
५. वाग् वै सरमा। मैत्रायणीसंहिता ४।६।४।
६. द्र० ब्रह्ममुनिभाष्यम् नि० ११।२५।
७. शत० ब्रा० ३।४।२।१५।

गावः[1] ता गाः पणयो जलकणा[2] न्यगूहुः, पुनरिन्द्रेण सूर्येण प्रेरिता सरमा देवशुनी देवानामभ्ररूपां हविर्लिहन्ती स्तनयित्नुर्वाक् जलकणानां पणीनामन्तिकमुपगता, अब्रवीच्च यद्यूयमिन्द्रस्य गा विमोचयत। पणयस्तां प्रत्यूचुः—हे सरमे देवशुनि! स्तनयित्नो वाक्! अयमस्मदादीनां निगूहितानां गवामाशुगामिनां रश्मीनां वसूनाञ्च निधिराकरोऽस्ति। स निधिरद्रिबुध्नो मेघाच्छन्नो मेघबद्धो गवादिभिर्ह्रद इवोर्मिभिः परिपूरितोऽस्ति। तादृशं चेमं निधिं पणयो जलकणा रक्षन्ति। ये सुगोपाः सुष्ठु गोप्तुं रक्षितुं समर्थाः सुगोपायितारस्सन्ति। अत्र तु त्वं रश्मिभिर्रेकु = रिक्तं पदं स्थानमलकम् = व्यर्थमाजगन्थ आगताऽसि[3]। एवमस्य वास्तविकोऽर्थः साधितुं शक्यते।

**( छ ) त्वष्टृसरण्योरुपाख्यानम्—**

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति।
यमस्य माता पर्युह्यमाना महोजाया विवस्वतो ननाश[4]॥

पुराणेषु द्वादशादित्याः विश्रुताः। ते मासभेदादवस्थाभेदाच्च द्वादश। तद्यथा—

विष्णुर्धाता भगः पूषा मित्रेन्द्रौ वरुणोर्यमा।
विवस्वानंशुमान् त्वष्टा पर्जन्यो द्वादश स्मृताः[5]॥

ज्येष्ठमासे विवस्वान् आषाढे अंशुमान् माघे भगः त्वष्टा च फाल्गुने मासि तपति। अत्र पूर्वं पारिभाषिकाणां शब्दानामर्थः प्रदर्श्यते पश्चात् मन्त्रार्थः[6]।

---

१. सर्वे रश्मयो गाव उच्यन्ते। नि० २।७।

२. द्र० ब्रह्ममुनि वेद में इतिहास नहीं पृ० २७१।

३. तु० दुर्गभाष्यम् नि० ११।२४।

४. ऋ० १०।१७।१।

५. महाभारते आदिपर्वणि ६५।१५-१६।
आभिर्द्वादशभिस्तेन भास्करेण महात्मना।
कृत्स्नं जगदिदं व्याप्तं मूर्तिभिस्तुन्नराधिप॥ भविष्यपुराणे ७७।८-९।
द्र० अमरकोशः।

६. धर्मदेवो निरुक्ताचार्यः, त्वाष्ट्र सरण्यू के आख्यान का वास्तविक स्वरूप पृ० २४-२५।

त्वष्टा— उदयकालात् प्रागंशुमाली। कृशहेतुत्वात् त्वष्टा।

सरण्यू— सरणात्[1]। गमनशीलत्वात् सूर्योदयात् प्राक्कालीन उषः कालः। सर्वप्राणिनामयं प्रबोधकालस्तस्मात् संज्ञापदेन प्रोच्यते[2]।

विवस्वान्—रश्मिभिराकीर्ण आदित्यः[3]।

यम–यमी—सरण्यूविवस्वतोर्दम्पतीरूपयोर्जायमानं यमयमीयुगलं तमो ज्योतिश्च। उषःकाले तमसो ज्योतिषश्च यः समावेशो जायते तं यम-यमी नाम्ना आचक्षते।

अश्विनौ— अहोरात्रौ[4]। सूर्येण जायतेऽहोरात्रौ तस्मात्तस्य पुत्ररूपौ। सरण्यूविवस्वन्तावश्वरूपधारिणौ भूत्वा प्रदुद्रवतुरिति प्रकथनमुषःकालस्य सूर्यस्य चोभयोः शीघ्रगामित्वात्। अश्वः आशुगामी। अत्र रूपकालङ्कारः। पूर्वमुषा प्रादुर्भवति पश्चाच्च तमनुसरन्नादित्यः। "स विवस्वानादित्य आश्वमेव रूपं कृत्वा मामनुसृत्य सम्बभूव। ततोऽश्विनौ जज्ञाते"[5]।

मनुः— 'सवर्णायां मनुः' मनुर्ज्ञानं बोधोऽवगमः। निखिलपदार्थानां बोधः सूर्यप्रकाशे जायते ततः सवर्णाप्रकाशो मनोः प्रादुर्भावः ज्ञानस्यावगमः।

अयं चात्र मन्त्रार्थः—त्वष्टा उषःकालीनः सूर्यः दुहित्रे = दुहितुः स्वसुताया उषःकालस्य वहनं विवाहं विवस्वता रश्मिभिराकीर्णनादित्येन सह करोति। इदं विश्वं भुवनं प्राणिजगत् समेति = संगच्छति एकत्रीभवति वा, अर्थात् प्राणिनः शयनं विहाय स्वस्वकार्येषु संलग्ना जायन्ते। यमस्य तमसो माता पर्युह्यमाना = पर्यूढा सती महः = महतः बृहतो विवस्वत आदित्यस्यः जाया भार्या स्त्रीरूपा निशा सूर्योदये सति ननाश = नश्यति।

---

१. नि० १२।६।

२. ब्रह्मपुराणम् अध्यायः ३२।

३. वृतोऽग्निपिण्डसदृशो दध्रे नातिस्फुटं वपुः।
तद्रूपं गोलकाकारं दृष्ट्वा संज्ञां विवस्वतः॥ ब्रह्मपुराणम् अ० ३२।

४. नि० १२।१।

५. नि० १२।१०।

अपि च—

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदधुर्विवस्वते ।
उताश्विना अभरत् यत्तदासीदजहादु द्वा मिथुना सरण्यूः[1] ॥

आदित्यरश्मयोऽमृतां मरणधर्मरहिताममृतरूपामुषःकालरूपां रजनीं मर्त्येभ्यो मनुष्येभ्योऽपागूहन् निगूहितवन्तः । अथ च सवर्णामुषःकालसदृशवर्णां प्रभां प्रसूय विवस्वत उदीयमानायादित्यायाददुः प्रायच्छन् । स उषःकालोऽश्विनौ दिवसं रात्रिञ्चाभरत् अधारयत् उतापि च सरण्यूस्तेनैवोषः कालेन द्वा मिथुना द्वौ पुत्रावजहात् विसृष्टवान्[2] ।

अत्र वेदेष्वितिहासविषये पक्षे विपक्षे चोभयविधानि प्रमाणान्युपन्यस्तानीतीतिहासवदवभासमानानां केषाञ्चन मन्त्राणामर्थाश्च दर्शिताः । आम्नायेष्वनित्यस्येतिहासस्य भ्रान्तिरेव केवला, तस्याश्च मूलं यौगिकप्रक्रियाया अनाश्रयणम्, प्राचीनवैदिकाख्यानग्रन्थानामभावः, आख्यानविदां रीत्यनभिज्ञता । अथ चाख्याननिदर्शकैर्यास्कप्रभृतिभिराचार्यैरैतिहासिकसंकेतानामनिर्देशः, पुराणादिषु च तस्यैवाऽऽख्यानस्य परिबृंहितरूपेण चित्रणम्, मतमतान्तराणाञ्चाग्रहः, वेदाभिप्रायदूषकाणां भाष्याणां संकलनम्, वैदिकस्वाध्यायस्य चोनता वर्तते । नित्येषु वेदेषु नास्तीतिहासः, यश्चावभासते सोऽलङ्काररूपेण, 'देवस्य ( परमात्मनः ) काव्यस्येदमेव सौन्दर्यम् । येषामाख्यानानामद्य यावदपि न किञ्चिन्निदानं सम्भूतं तेषामर्थो विद्वद्भिर्निरुक्तप्रक्रियया व्याकरणेनानुसन्धेयः ।

इत्थं वेदानां स्वरूपे निर्धारितेऽपौरुषेयत्वे च सिद्धे वेदेषु नास्तीतिहासलेशोपीति च निर्णीत एषाऽत्र जिज्ञासा जायते यत् को नाम वेदानां प्रतिपाद्यविषयः । अत्र केचन वदन्ति कर्मकाण्डपरा एव वेदाः[3] । ते च प्रायेण सर्वेषां मन्त्राणां यज्ञेषु नियोगं प्रदर्शयन्ति । परे त्वेतन्न क्षमन्ते घोषयन्ति च वेदेषु सर्वाः सत्यविद्या विद्यन्त इति[4] । तथा च समस्तस्यापि मानवधर्मस्योपदेशो वेदेषु विद्यन्ते । उक्तञ्च

---

१. ऋ० १०।१७।२ ।

२. तु० दुर्गभाष्यम् १२।११ ।

३. तु० अर्थज्ञानस्य तु यज्ञानुष्ठानर्थत्वात् । सायणः, ऋ० भा० भू० पृ० ५ ।

४. तथा यत् सायणाचार्येण वेदानां परमर्थमविज्ञाय सर्वे वेदाः क्रियाकाण्डतत्पराः सन्तीत्युक्तम् । दयानन्दः, ऋ० भा० भू० पृ० ३२१ ।

कणादेन "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः[1]। एवञ्च धर्मो ह्यैहिकस्य पारलौकिकस्य च सुखस्य मूलम्। स च कर्तव्यकर्मणां नाम। यच्च "चोदनालक्षणोऽर्थो धर्मः[2]" इति जैमिनिनोक्तम् तत्राप्ययमेव भावः। वेदेषूपदिष्टं कर्तव्यमेव धर्मः। इममेव चार्थमन्येऽपि प्राचीना मनीषिणः स्वीकुर्वन्ति स्म। तथा ह्याचार्येणोक्तम् "अर्थं वाचः पुष्पफलमाह। याज्ञदैवते पुष्पफले देवताध्यात्मे वा[3]" अनेन स्पष्टमेव यद् यास्कस्य मते न केवलं यज्ञपरा मन्त्रा अपितु विविधार्थका भवन्ति। आत्मानन्दप्रभृतिभिश्चास्यवामीयसूक्तस्याध्यात्मिकी व्याख्या विधीयते। ततश्च वेदेषु सर्वमपि व्यावहारिकं ज्ञानं विद्यतेऽत्र न सन्देहस्यावसरः। इत्येतदेवाधिकृत्यात्र शोधप्रबन्धे विविधरूपेषु वेदानां व्यावहारिकत्वं निरूप्यते। अत्र तु कुड्यां चित्रभिति न्यायेनोपोद्घात उपरिनिर्दिष्टं तथ्यं प्रस्तुतम्।

भवतश्चात्र—

आदौ निरुक्तीर्विविधाश्च संज्ञाः प्रदर्श्य वेदस्य तथा स्वरूपम्।<br>
संख्या निदर्श्यास्य च जन्मवृत्तं पौरस्त्यपाश्चात्यदिशा विविक्तम् ॥१॥<br>
वेदस्य कर्तुर्विषये मतानि नामान्यृषीणामथ यौगिकानि।<br>
ऐतिह्यनामानि निराकृतानि सत्यानि रूपाणि निदर्शितानि ॥२॥

१. वैशेषिकसूत्रम् १।२।

२. मीमांसासूत्रम् १।२।

३. नि० १।२०।

# २. आभ्युदयिकमधिकरणम्

## ( १ ) आर्थिकं वृत्तम्

**( क ) अर्थस्वरूपम्—**

धर्मार्थकाममोक्षात्मके पुरुषार्थचतुष्टयेऽर्थस्य महत्त्वपूर्णं स्थानम्। नह्यर्थेन विना शरीरधारणमपि शक्यं, पुनरन्यव्यवहाराणां तु का कथा? अर्थेनैव धर्मो रक्ष्यते, इतरपुरुषार्थानाञ्च सिद्धिः। अर्थ्यते आकाङ्क्ष्यतेऽर्थिभिस्तदर्थो नाम। स आम्नायेषु मघम्–रेक्णः–रिक्थम्–वेदः–वरिवः–श्वात्रम्–रत्नम्–रयिः–क्षत्रम्–भगः–मीळ्हम् ( मील्हम् )–गयः–नृम्णम्–तना–बन्धुः–इन्द्रियम्–वसु–रायः–राधः–भोजनम्–मेध्य–यशः–ब्रह्म–द्रविणम्–श्रवः–वृत्रम्–वृतम् इत्येतैःपदैराम्नायते[१]। स एव लोके श्रीलक्ष्मीपदाभ्यामप्यभिधीयते। यद् द्रव्यं पुरुषं धन्यमैश्वर्यवन्तं कुर्यात्, येन च स लोके प्रतिष्ठितो भवेत्तद्वेदेषु धननाम्ना कीर्त्यते।

यदर्थिभ्यो मंघ्यते—दीयते तन्मघम्[२] रिच्यतेऽवशिष्यते मनुष्यस्यातः प्रयतस्तद्रिक्थमर्थात् म्रियमाणस्य धनं धनिना सह न गच्छति[३]। भृशं व्रियते सर्वैः, तद्यथा ब्राह्मणो ज्ञानं वृणोति क्षत्रियो बलं वैश्यो धनं शूद्रश्चेतरवर्णानां भृतिं वृणोति ततो वरिवः[४]। लक्ष्म्याश्चलस्वभावत्वात्, आशु अतति गच्छत्यन्यमन्यं प्रति तत् श्वात्रम्[५]। रमणीयं हि यद् भवति तद् रत्नम्[६]। यः पुण्येन रीयते प्राप्यते वा, तर्पयति

---

१. निघ० २।१०।

२. मंहतिर्दानकर्मा।

तेभिरिन्द्र चोदय दातवे मघम्। ऋ० ६।७५।५।

३. न जामये तान्वो रिक्थमारैक्। ऋ० ३।३१।२।

४. कृधी नो अद्य वरिवः स्वस्तिमदुरुक्षितौ गृणीहि दैव्यं जनम्। ऋ० ६।८४।१।

५. अत सातत्यगमने।

श्वात्रेण यत् पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्नापरं पुनः। ऋ० १।३१।४।

६. धत्तं रत्नानि दाशुषे। ऋ० १।४७।१।

प्राणिनो भोगसाधनत्वात् , दीयते वाऽर्थिभ्यः स रयिः[1] । पूर्वजन्म-सुकृतवशात् स्थिरं भवति, गृह्यत उपभोगसाधनत्वात्, दारिद्र्यं हिनस्ति, क्षतात् त्रायते तत् क्षत्रम्[2] । भज्यते सेव्यते भोगार्थिभिः स भगः[3] । दातृभिरर्थिभ्यो मिह्यते = सिच्यते तत् मीहुम् ( मीळ्हु )[4] । गीयते स्तूयते पुरुषैः स गयः[5] । वस्ते आच्छादयति तिरोभावयति दारिद्र्यम् स वसुः[6] । राध्नुवन्ति साध्नुवन्ति धर्मादीन् पुरुषार्थान्, राध्यतेऽनेन धर्मादिः हिंस्यते दारिद्र्यं वा स राधः[7] । भुज्यन्तेऽनेन विषयास्तद् भोजनम्[8] । तनोति विस्तारयति जीवनमनेन सस्तना[9] । नमति प्रह्वीकरोत्यर्थिभ्यस्तद् वस्तु नृम्णम्[10] । बध्नात्यनेन

---

१. री गतिरेषणयोः ।
आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । ऋ० १।७९।८ ।

२. नहि ते क्षत्रं न सहो न मन्युम्० । ऋ० २।२४।६ ।
असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा सन्तु नेमे० । ऋ० १।५४।८ ।

३. भगस्य रातिमीमहे । ऋ० ३।६२।११ ।

४. मिह सेचने ।
रुद्रस्य ये मीह्ळुषः सन्ति पुत्राः । ऋ० ६।६६।३ ।

५. आ पवमान नो भरार्यो अदाशुषो गयम् । कृधि प्रजावतीरिषः ।
ऋ० ९।२३।३ ।

६. वस आच्छादने ।
नू नो रास्व सहस्रवत्तोकवत् पुष्टिमद्वसु । ऋ० ३।१३।७ ।
अहं भुवं वसुनः पूर्व्यस्पतिः० । ऋ० १०।४८।१ ।

७. राध संसिद्धौ ।
अग्ने यजस्व हविषा यजीयाञ्छ्रुष्टी देष्णमभि गृणीहि राधः ।
ऋ० २।९।४ ।

८. भुजपालनाभ्यवहारयोः ।
मा नः प्रिया भोजनानि प्र मोषीः । ऋ० १।१०४।८ ।
तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । ऋ० ५।८२।१ ।

९. तनु विस्तारे ।
विह्वयन्ते तना गिरा । ऋ० ८।४०।६ ।
अग्ने दिवः सूनुरसि प्रचेतास्तना पृथिव्या उत विश्ववेदाः । ऋ० २।२५।१ ।

१०. णम प्रह्वत्वे शब्दे ।
हस्ते दधानो नृम्णा विश्वान्यमे देवान् धाद् गुहा निषीदन् ।
ऋ० १।६७।३ ।

भृत्यादीन् स बन्धुः[१]। संगच्छतेऽनेन सर्वं तद्वता, हिंस्यते वा तद्वान् चौरादिभिः, यद्वा मतौ धीयते अर्जयितव्यं रक्षितव्यं दातव्यमिति धनवता बुद्धौ धनं धार्यते सा मेधा[२]। द्रूयते प्राप्यतेऽयं पुण्येनानेन तृप्तिं गच्छति वा तद् द्रविणम्[३]। श्रूयते दूराद्दूरतरं स श्रवः[४]। वर्त्यते = व्रियते विभज्यते वा सर्वैस्तद् वृतम्[५]। *।

अत्र पण्डिताः प्रवदन्ते यद्धर्मो मोक्षश्चैव साधनीयौ नार्थः, परन्तु तेऽप्यर्थविरोधिनो धननिन्दकास्सन्तोऽपि धनिन एवोपासते। तत्र चेदं स्मरणीयमेव न ह्यर्थमन्तरा धर्मोऽपि साध्यते। यदि खलु जठरपिठर्यामाखवः समुत्प्लवेरन् न तदा कश्चिद् धर्मं सेवितुं प्रभवति। यतो बुभुक्षितैर्व्याकरणं न भुज्यते न पीयते काव्यरसं पिपासुभिस्ततोऽर्थाय सततं प्रयतेत एव। न ह्यतः पापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुस्तस्मादुपकरणानि पर्येष्टुं यतेत[६]। विविधैः शास्त्रैरर्थगौरवं नितरां प्रतिपाद्यत एव, वेदेषु तु विशेषतः[७]।

लोके धनार्जनाय केचिन्नीचसेवानुरक्ता अपि दृश्यन्तेऽपरे मिथ्याभाषणनयेन जनान् प्रवञ्चयन्ति, एके दुष्टाचरणैः शिष्टविगर्हितव्यवसायैर्मद्यमांसविक्रयेण वा धनमर्जयन्ति। परं तावच्छ्रुतेरादेशो

---

१. बन्ध बन्धने।
युवोर्हि नः सख्या पित्र्याणि समानो बन्धुरुत तस्य वित्तम्।
ऋ० ७।७२।२।

२. मेधाकारं विदथस्य प्रसाधनम्। ऋ० १०।९१।८, द्र० १।१८।६,९।३२।६ यजु० ३२।१४, दुर्गभाष्यम् निघ० २।१०।

३. द्रु गतौ।
इन्द्र श्रेष्ठानि द्रविणानि धेहि। ऋ० २।२१।६।

४. श्रु श्रवणे।
सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत्। ऋ० १।९।७।

५. वृतु वरणे।
वृतंचयः सहुरिर्विक्ष्वारित।० ऋ० २।२१।३।

* अस्मिन् सन्दर्भे यास्कीयं निरुक्तं तस्य व्याख्यानानि चाप्यनुसन्धेयानि।

६. चरके सूत्रस्थाने १।१५।

७. येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः।
तन्मे भूयो भवतु मा कनीयोऽग्ने सातघ्नो देवान् हविषा निषेध॥
अथर्व० ३।१५।५।

यदेतादृशी पापी लक्ष्मीरस्मत् दूरं परापततु[१]। साऽस्मान्नाभ्येतु न्यायेनार्जयेम त्यक्तेन भुञ्जीमहि[२] सखिभ्यः प्रदायोपभुनजामहै[३]। अघं माघसाम,[४] केवलादिनो मा भूम[५]। अन्यायोपार्जितं वित्तं भूतेभ्यो दुःखानि प्रददाति न्यायोपार्जितं वित्तं तु शमं कल्याणं वा। इदं चक्रवदन्योन्यं प्रतितिष्ठति[६] लक्ष्म्याश्चलस्वभावत्वात्।

**( ख ) अर्थोत्पत्तिः—**

अर्थः कथमुत्पाद्यत इति विचार्यते। न कश्चित् पदार्थ उत्पद्यते जातमात्रो वा न नाशमुपैतीति विज्ञानविदामाघोषः। ब्रह्माण्डे यावन्ति पदार्थजातानि सन्ति तावन्त्येव तिष्ठन्ति। तानि वर्धयितुं ह्रासयितुं वा न कश्चित् प्रभवति। पुरुषस्तेषां रूपमाकृतिं वा परिवर्तयितुं समर्थ उपयोगितां प्रवर्धयितुं वा। यथा कश्चिच्छ्रमिक अरण्यात् काष्ठान्यानीय तेषामुपयोगितां वर्धयति, तथा च तक्षा तेभ्य एव काष्ठेभ्यो वेत्रासनं पीठं वा प्रकुरुते तदा तान्येव काष्ठानि महार्घाणि जायन्ते। एवमेव तन्तुवायः कर्पासात्तन्तून् तन्तुभ्यः सूक्ष्मवसनं निर्माय कार्पासमधिकमूल्यवन्तं करोति। एवं प्रकृतिप्रदत्तानां वस्तूनामुपयोगिताप्रवर्धनमेवार्थस्योत्पत्तिः। पदार्थानां रूपपरिवर्तनेन तेषामुपयोगिता प्रवर्धते। सा रूपपरिवर्तनेन स्थानपरिवर्तनेन कालपरिवर्तनेनाधिकारपरिवर्तनेन च विविधैरुपायैर्वर्द्धयते सम्पाद्यते च। अर्थोत्पत्तिप्रकारश्चार्थशास्त्रस्य ग्रन्थेषु निरूपितं वेदेषु चापि तस्य बीजानि समुपलभ्यन्ते तेषु केषाञ्चिदुल्लेखोऽग्रे करिष्यते।

**( ग ) अर्थोत्पत्त्युपकरणानि—**

भूमिः, श्रमः, साधनसामग्री ( पूंजी ), व्यवस्था साहसञ्चेति पञ्चोपकरणान्यर्थस्योत्पत्तेः। भूमिरस्मभ्यं विविधं पदार्थजातं

---

१. प्र पतेतः पापि लक्ष्मि नश्येतः प्रामुतः पत।
अयस्मयेनाङ्केन द्विषते त्वा सजामसि॥ अथर्व० ७।११५।१।

२. तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥ यजु० ४०।१।

३. न स सखा यो न ददाति सख्ये॥ ऋ० १०।११७।४।

४. अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्। मनु०

५. केवलाघो भवति केवलादी०। ऋ० १०।११७।६।

६. ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुप तिष्ठन्त रायः॥
ऋ० १०।११७।५।

प्रयच्छति । सैव वसुन्धरा हिरण्यवक्षा जगतः प्रतिष्ठात्री विद्यते । श्रमेण विना नोदरं पूर्यते, श्रमेणैव पदार्था उत्पाद्यन्ते । किञ्चिदुद्देश्यमभिलक्ष्य कृतः प्रयास एव श्रमनाम्ना कीर्त्यते । स उभयविधो मानसः शारीरश्च । अर्थाभिलाषिणां मानसश्रमेण स्वल्पकाल एव प्रचुरद्रव्योपलब्धिर्जायते । बुद्धिमन्तः कुशलाः श्रमिका धनाढ्या जायन्ते । अपरे तु न ।

ये पदार्था अपरं द्रव्यमुत्पादयितुमुपयोज्यन्ते ते साधनसामग्रीनाम्ना व्यवह्रियन्ते । कलायन्त्राणि, गृहम् , असिद्धं द्रव्यं, सिद्धं द्रव्यमन्यानि यन्त्राणि च यदि द्रव्यार्जनायोपयोज्यन्ते तदा तामेव 'साधनसामग्री' इत्याचक्षते विद्वांसः ।

व्यवस्थाकरणमर्थोत्पादनस्य मूलम् । वर्तमानयुगे पदार्थानामुत्पत्तिः कलायन्त्राणां साहाय्येन जायते । कलायन्त्राणि च श्रमिकाश्चालयन्ति । व्यवस्थापक उत्पत्त्युपकरणानि व्यवस्थापयति । सर्वं सिद्धमसिद्धं पदार्थं निरीक्षते । श्रमिकानां भृतिं व्यवस्थापयति । सैषा व्यवस्था अर्थोत्पादन उपकरणरूपा ।

वेदेषु वर्णाश्रमव्यवस्थायाः सन्दर्भे धनार्जनसाधनानि समुपदृष्टानि । तद्यथा ब्राह्मणेभ्यो विद्याऽध्ययनाध्यापनमेवार्थप्रदं, क्षत्रियेभ्यो वीरेभ्यो राजन्येभ्यः शरीरात्मबलं प्रवर्ध्य युद्धसामग्रीं धनुर्भुशुण्डीतोमराद्यायुधानि संगृह्य सेनां संयोज्य सर्वेषां भूतजातानां रक्षणमर्थप्रदं, वैश्येभ्यः कृषिगोरक्षावाणिज्यानि शिल्पं पूर्वोक्तसाधनानि च धनप्रदानि[1], शूद्रेभ्यश्च त्रैवर्णिकानां सेवया भृतिप्राप्तिरेव धनप्रदा भवति ।

अथ चेयं विश्वम्भरा वसुमती हिरण्यगर्भवती भूमिरपि सर्वेभ्यो धनं प्रददाति, सर्वां भोगमयीं सामग्रीमुद्गिरति कन्दमूलानि फलपुष्पाण्यन्नमौषधीर्वसनादीनि चापीयमेव प्रयच्छति । सर्वाण्ययस्ताम्ररजतसुवर्णानि चापि भूमावेव लभ्यन्ते[2] ।

न केवलेयं हिरण्यगर्भा स्वगर्भ एव वसूनि धारयति, प्रत्युतान्यैरपि बहुभिरुपायैर्भूमिसकाशाद्धनं प्राप्यते जनैः । तेषु चोपायेषु कृषिप्रभृतयः प्रमुखाः । तथा हि—

---

१. गोजिद् भूयासमश्वजिद् धनञ्जयो हिरण्यजित् । अथर्व० ७।५०।८ ।

२. विश्वं भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी ।
वैश्वानरं बिभ्रती भूमिरग्निमिन्द्र ऋषभा द्रविणेनो दधातु ।।
अथर्व० १२।१।६ ।

कृषिः—धनाभिलषद्भिर्नरैः कृषिः करणीया[१]। हलस्य फालो भूमिं कर्षणेन प्राणिभ्योऽशनं ददाति[२]। अतः पशुप्रजान्नलाभाय कृषिः कर्तव्या[३]। सा कथं करणीयेत्याह श्रुतिः—

युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम्।
गिरा च श्रुष्टिः सभरा असन्नोनेदीय इत्सृण्यः पक्वमेयात्[४]॥

हे मनुष्या यूयं बलीवर्दानां स्कन्धेषु युगानि धत्त। तत्र कृष्युपकरणानि हलानि युङ्क्त। तेन च हलेन भूमिं कर्षत। कृष्टे सुसंस्कृते क्षेत्रे बीजानि वपत। पक्वस्तम्बगुम्फयुते सस्ये सति दात्रेण लुनीत। एवं कृषकाणामनडुद्भिर्वह्यमानाः सुफालाः सद्यो भूमिं खनन्ति[५]। जलेन सिच्यमानानि च क्षेत्राणिप्रभूतमन्नमुत्पादयन्ति[६]। यथा सुशिक्षितेनानुरक्तेन सैन्येन वीरा विजयं प्राप्नुवन्ति तथैव कृषिकर्मसु कुशला धीमन्तः कृषीवला उत्तमां हलादिसामग्रीं सम्पाद्य क्षेत्राणि विकर्ष्य बीजान्युप्त्वाऽन्नान्युत्पाद्य सर्वानानन्दयन्ति भूयश्चैश्वर्यमाप्नुवन्ति[७]। एवमिमौ कृषकस्यानड्वाहौ चतुर्भिरेव पादैरवसादकरीमलक्ष्मीं व्यपोह्य भूमिमुद्भिन्दन्तौ स्वकीयेन कर्षणव्यापारजनितेन श्रमेणान्नं सम्पादयतः, दारिद्रयञ्च व्यपोहतः[८]।

**पाशुपाल्यम्—**

यथा कृषिकर्मार्जनस्योपकरणं तथैव पशुपालनमपि वित्तसाधकम्। अद्यत्वेऽपि भरतखण्डे त्रिविष्टपे चान्येषु देशेष्वपि बहवो नराः पशुपालनेन स्वाजीविकां साधयन्ति। पशवोऽस्मभ्यं भूरि भोजनं द्रविणञ्च प्रयच्छन्ति। ते द्विविधाः—आरण्या ग्राम्याश्च[९]। अरण्ये भवा

१. द्र० दयानन्दभाष्यम्। इन्द्रः सीतां निगृह्णातु। ऋ० ४।५७।७।
२. कृषन्नित् फाल आशितं कृणोति०। ऋ० १०।११७।७।
३. अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व। ऋ० १०।३४।१३।
४. ऋ० १०।१०१।३, अथर्व० ३।१७।२, यजु० १२।६८।
५. ऋ० ४।५७।८।
६. सिञ्चामहा अवतमुद्रिणं वयं सुषेकमनुपक्षितम्। ऋ० १०।१०१।५।
७. द्र० दयानन्दभाष्यम्। ऋ० ४।५७।१।
८. सायणभाष्यम्।
पद्भिः सेदिमवक्रामन्निरां जङ्घाभिरुत्खिदन्।
श्रमेणानड्वान् कीलालं कीनाशश्चाभिगच्छतः॥ अथर्व० ४।११।१०।
९. यजु० ३१।६।

आरण्याः सिंहगजवृकर्क्षवराहादयः। ग्रामे भवा ग्राम्या वराहमहिष-मृगमेषाजागर्दभादयो गोश्वादयश्च। ग्राम्येषु गोमहिषाजादयो विशेषतो दुग्धघृतेनान्नेन मनुष्यान् तर्पयन्त्यवयश्चोर्णाभिः, रासभा भारवहनेन तुरगाश्च रथवाहनेन पुरुषं कृतकृत्यं कुर्वन्ति। एते सद्यः प्रजायमानत्वात् सद्योवृद्धित्वात् विक्रीयमाणा मुद्राप्राप्तिसाधका अपि। पशुवत्सु निकेतेष्वेव प्रजा लक्ष्मीः श्रीश्च विराजन्ते। तदेतेषां पशूनां वर्णनमसकृदुपलभ्यते वेदेषु। आरण्येषु मृगेषु मृगराजः सम्राडिव, ग्राम्येषु चाघ्न्याश्वौ श्रेष्ठत्वेनाम्नातौ। वृषभाः कृषिकर्मणे क्षेत्रकर्षणाय रथवाहनाय च, गाव आरोग्याय बलवर्णपुष्ट्यै प्रजान्नहेतोश्च पालनीयाः पोषणीयाः रक्षणीया वर्धनीयाश्च। आम्नायेषु सर्वप्राणिनां हिंसा-निषेधः क्रियते[1]। तत्र चोच्यते—अस्माकं गोष्ठं पशुभिः समृद्धं तेभ्यः सुखावहञ्च स्यात्[2]। पशूनां समृद्ध्या पुष्ट्यैव मनुष्याणामपि समृद्धिः पुष्टिर्वा भवति। ते पशवः कथं पालनीया इति श्रुतिरुपदिशति—

ये वाजिनः सुशिक्षिताः सुदमना उत्तमाभरणवन्तः पुष्टाः सन्ति त एव कार्याणि सङ्गरेषु विजयञ्च साध्नुवन्ति[3]। ततो वाजिनः पुष्ट्यै छागदुग्धं पाययितव्यम्[4]। सुसंस्कृतान्नानि चणकाश्च भोजयितव्याः। ते अश्वा मक्षिकादंशेभ्यो गापायितव्याः स्वहस्तेन रश्मिभिः सुनियम्य यथेष्टङ्गमयितव्याः[5], विविधनिक्रमणनिषदनगतिभिः सुशिक्षणीयाः[6]।

---

१. इमं मा हिंसीर्द्विपादं पशुम्। यजु० १३।४७।
इदं मा हिंसीरेकशफं पशुम्। यजु० १३।४८।

२. इमं गोष्ठं पशवः सं स्रवन्तु बृहस्पतिरानयतु प्रजानन्।
अथर्व० २।२६।२।
सं० संस्रवन्तु पशवः समश्वाः समु पूरुषाः। अथर्व० २।२६।३।

३. यद्वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रशना रज्जुरस्य।
यद्वा घास्य प्रभृतमास्ये तृणं सर्वा ता ते अपि देवेष्वस्तु॥
ऋ० १।१६२।८।

४. द्र० दयानन्दभाष्यम्। एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः। ऋ० १।१६२।३।

५. यदश्वस्य क्रविशो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति।
ऋ० १।१६२।९।

६. निक्रमणं निषदनं विवर्तनं यच्च पड्वीशमर्वतः। ऋ० १।१६२।१४।

भेषजप्रदानेन च नीरोगाः कारणीयाः[1]। तेषां नखपादयो रोमेषु च भवं मलं समीक्ष्यापाकरणीयम्[2]।

यथा वाजी पशुषु श्रेष्ठत्वेनाम्नातस्तथा धेनुरपि। अस्मिँलोके न किञ्चिद्धनं गोधनाच्छ्रेयस्तरम्। रक्षिताः पोषिता इमा गावो बलवर्ण-बुद्धिपुष्ट्युत्साहारोग्यप्रदाता[3] दिव्यममृतमयं हैयङ्गवीनं पयश्च प्रयच्छन्ति। स्वयं प्रज्ञावत्यः पुरुषमपि प्रज्ञावन्तं कुर्वन्ति[4]। सर्वाणि शास्त्राणि साङ्गोपाङ्गाश्च वेदा गोमहिमानं गायन्ति। एतद्वै विश्वरूपं यावदपि तत्सर्वं गोरूपमेव[5]। अतः सर्वैः स्वगृह एकं बृहद् गोष्ठं रचनीयम्[6]। यत्र गावः सुखेन वसन्तु। आहारमदन्तु, अभीता उच्छ्वसन्तु[7] तद् गोष्ठं नॄन् पालयति। यस्य पशवो मेदन्ते तस्य गृहसदस्या अपि मेदन्ते[8]। यस्य च पशवो वपुषा क्षीयन्ते स नरोपि क्षीयते। यत इमा गावो नीरसानि तृणानि जग्ध्वा मिष्टं जीवनीयं पयः ददति तत एताः सर्वत्र पूज्याः पोषणीयाश्च। यत्र धेनवो वसन्ति ततो दुःखानि दुर्मतिरलक्ष्मीश्चापाव्रजन्ति[9]। अत एताः स्तेनेभ्योऽघ-

---

१. भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम्।
सुखं मेषाय मेष्यै ॥ यजु० ३।५९।

२. यद्वस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु।
ऋ० १।१६२।९।

३. संसिञ्चामि गवां क्षीरं समाज्येन बलं रसम्। अथर्व० २।२६।४।
आ हरामि गवां क्षीरमाहार्षं धान्यं रसम्। अथर्व० २।२६।५।

४. वचोविदं वाचमुदीरयन्तीं विश्वाभिर्धीभिरुपतिष्ठमानाम्।
ऋ० ८।१०१।१६।

५. अथर्व० ९।७।२५।

६. व्रजं कृणुध्वम्। अथर्व० १९।५८।४।

७. शिवो वो गोष्ठो भवतु शारिशाकेन पुष्यत। इहैवोत प्रजायध्वम्०।
अथर्व० ३।१४।५।
अयं वो गोष्ठ इह पोषयिष्णुः। रायस्पोषेण बहुला भवन्तीर्जीवा जीवन्तीरुप वः सदेम। अथर्व० ३।१४।६।

८. यूयं गावो मेदयथा कृशं चिदश्रीरं चित् कृणुथा सुप्रतीकम्।
भद्रं गृहं कृणुथ भद्रवाचो०। अथर्व० ४।२१।६।

९. गोभिष्टरेमामतिं दुरेवाम्॥ ऋ० १०।४२।१०।

शंसेभ्यो वधिकेभ्यश्च गोपनीयाः[१]। ताविमौ धेन्वनुड्हाविदं सर्वं बिभृतः[२]।

यथाऽश्वादयः पशवः पालनीयास्तथा पक्षिणोऽपि वसन्ततौ कपिञ्जलाः, ग्रीष्मतौ कलविङ्काः, वर्षतौ तित्तिर्यः, शरदि वर्तिकाः, हेमन्ततौ ककराः, शिशिरतौ च विककराः पालनीयाः[३]। एते पक्षिण ऋतुसुखप्रदाः पुष्टिकरा विषहराश्च भवन्ति। एवं पशुपतिराम्नायेषु प्रशस्यते[४]।

**वाणिज्यम्—**

न केवलं कृषिः पशुपालनमेव वाऽर्थोत्पादनस्य साधनमपितु वाणिज्यं शिल्पादीनि चापि। एकदेशादपरदेशेषु पदार्थानां नयनं क्रयविक्रयणञ्च वाणिज्यमुच्यते। ऐश्वर्यवान् परमेश्वरः श्रिये वणिजं वाणिज्यव्यवहारार्थं प्रचोदयति तस्य वाणिज्यबाधाञ्च विनाशयति[५]। ये वणिजो वाणिज्यं कुर्वन्तो देशदेशान्तरेषु चरन्ति ते पण्यं क्रीत्वा विक्रीय च लाभसहितं मूल्यधनं प्राप्नुवन्त्यसंख्यातधनस्य[६] चाधिपतयो जायन्ते[७]। धिया विनियोजिते वाणिज्ये प्रपणो विक्रयः प्रतिपणश्च

---

१. प्रजावतीः सूयवसे रुशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः।
मा व स्तेन ईशत माघशंसः परि वो रुद्रस्य हेतिर्वृणक्तु॥
अथर्व० ४।२१।७।

२. गौर्वा इदं सर्वं बिभर्ति। शत० ब्रा० ३।१।२।१४।

३. वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान् वर्षाभ्यस्तित्तिरीन्।
शरदे वर्तिका हेमन्ताय ककराञ्छिशिराय विककरान्॥
यजु० २४।२०।

४. य ईशे पशुपतिः पशूनां चतुष्पदामुत यो द्विपदाम्।
निष्क्रीतः स यज्ञियं भागमेतु रायस्पोषा०॥ अथर्व० २।३४।१।

५. इन्द्रमहं वणिजं चोदयामि स न ऐतु पुर एता नो अस्तु।
नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम्॥
अथर्व० ३।१५।१।

६. ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी सञ्चरन्ति।
ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहराणि॥
अथर्व० ३।१५।२।

७. अथर्व० ३।१५।३।

यत्येव[1]। ते च तन्तुं संवयन्त्युषानक्ताभ्यामुपमिते[2]। ते युवती परिनृत्यत्यौ कार्यं कुर्वत्यौ का परा का चापरेति न लक्ष्येते[3]। तत्र चैकः पुमान् तन्तून् संतनोति, अपरश्च तानुत्कृणत्ति = वियोजयति। एवं सुविस्तृते देशे तन्तून् संयमन्ते। तत्र च गर्तं विधाय मयूखानपि योजयन्ति[4]। तदा तन्तुभिर्वसनमुत्पद्यते। रञ्जितैस्तन्तुभिश्च चित्रितं वसनमुपजायते[5]।

एवं विविधैरुपायैर्धनमर्ज्यते। उत्तरत्र तूपवेदप्रभृतिषु तेषां विशदं विवरणमपि क्रियते। इत्थञ्चार्थिकेऽपि वृत्ते वेदा मानवस्य मार्गदर्शका इति सुनिश्चितमेव।

भवतश्चात्र—

लोके धनस्य प्रभुतामवेक्ष्य आदौ हि तस्याऽभ्युदयाऽधिकारे।
अर्थस्वरूपं विशदं विविच्य सम्प्राप्तिरस्यार्जनसाधनानि ॥ १ ॥
गोरक्ष्यवाणिज्यकृषेर्महत्वं शिल्पञ्च नानाविधपाशुपाल्यम्।
एतानि धर्म्याणि हि साधनानि वित्तस्य वेदात्प्रतिपादितानि ॥ २ ॥

---

१. तन्त्रमेके युवती विरूपे अभ्याक्रामं वयतः षण्मयूखम्।
प्रान्या तन्तूंस्तिरते धत्ते अन्या नाप वृञ्जाते न गमातो अन्तम् ॥
अथर्व० १०।७।४२।

२. उषासानक्ता……तन्तुं ततं पेशसा संवयन्ती०। यजु० २०।४१।

३. तयोरहं परिनृत्यन्त्योरिव न वि जानामि यतरा परस्तात्।
अथर्व० १०।७।४२।

४. पुमानेनद्वयत्युद्गृणत्ति पुमानेनद्वि जभाराधि नाके। अथर्व० १०।७।४३।
पुमाँ एवं तनुत उत्कृणत्ति पुमान् वि तत्ने अधिनाके अस्मिन्।
इमे मयूखा उप सेदुरू सदः सामानि चक्रुस्तसराण्योतवे ॥
ऋ० १०।१३०।२।

५. तन्तुं तन्वन् रजसो०। ऋ० १०।५३।६।

# ३. आरोग्याधिकरणम्

## ( १ ) शरीरविज्ञानात्मकं वृत्तम्

ऐहिकस्यामुष्मिकस्य च सर्वविधसुखस्य साधनभूतमारोग्यमित्यत्र न कोऽपि विवादः। आरोग्यवता देहेनैव धर्मार्थकाममोक्षाः साध्यन्ते तस्माद् धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्[१] आरोग्यविज्ञाने-नैकतः शरीरसुखमपरतश्चार्थसिद्धिरित्येका क्रियाद्व्यर्थकरी भवति। चिकित्साकरणेन क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचिद्यशः क्वचिदभ्यासयोगश्च जायते। नेयं चिकित्सा कदापि निष्फला भवति[२]। वेदेषु चाप्योषधीनां क्रयविक्रयस्य विधानं दृश्यते[३]। ता विक्रीयमाणाः भिषजे धनं प्रयच्छन्ति[४]।

तस्यारोग्यस्य व्यासेनोपदेश आयुर्वेदशास्त्रे कृतः। सोऽथर्ववेद-स्योपवेदः। अथर्ववेदो भेषजवेदनाम्नाऽपि श्रूयते[५]। तद्भेषजवेदेऽपि प्रभूतमारोग्यविज्ञानं दृश्यते। अत्र प्रायेण तद्विज्ञानं वेददिशैव प्रस्तूयते।

भिषक्, द्रव्याणि, उपस्थाता, रोगी चेति पादचतुष्टयवती चिकित्सा। तेषु चतुष्पादेषु भिषगित्यस्येव प्रधानत्वम्। यतः स एव विज्ञाता शासिता योक्ता च भवति। यथा—मृद्दण्डचक्रसूत्रादीनि कुम्भकारादृते गुणं नावहन्ति तथैव भिषजा विना पादत्रयं गुणं नावहति। भिषक्ष्वपि भिषक्तमः सः परमपितैव, यः सर्वान् रोगान्

---

१. चरके सूत्रस्थाने १।१५।

२. अष्टाङ्गसंग्रहः। रसरत्नसमुच्चयः ३०।१२६

३. पवस्तैस्त्वा पर्यक्रीणन् दूर्शेभिरजिनैरुत।
प्रक्रीरसि त्वमोषधेऽभ्रिखाते न रूरुपः॥ अथर्व० ४।७।६।
अपक्रीता०। अथर्व० ८।७।११।

४. उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते।
धनं सनिष्यन्तीनामात्मानं तव पूरुषः॥ ऋ० १०।९७।८।

५. यज्ञं ब्रूमो यजमानमृचः सामानि भेषजा।
यजूंषि होत्रा ब्रूयुः०॥ अथर्व० ११।६।१४।

पराकरोति[१]। स एव भिषग् ब्रह्मा श्रूयते[२]। यथा राजा समितौ स्वसहायकैः सभ्यैः परिवृतो भवति तथा भिषक् परितो रोगनिवृत्तिकारीभिरोषधीभिः परिवृतो विराजते[३]। तस्य भिषजश्चिकित्साऽधिष्ठानं पुरुषः[४]। शरीरात्मेन्द्रियसंयोगः पुरुषसंज्ञां लभते[५]। तस्य पुरुषस्य कथमुत्पत्तिर्जायत इति प्रथमं तावद्विचार्यते।

**(क) पुरुषोत्पत्तिः—**

अविद्याऽस्मितारागद्वेषाभिनिवेशैः क्लेशैः कुशलाकुशलैः कर्मभिः कामक्रोधलोभमोहप्रभवैः पुण्यापुण्यकर्माशयैश्च तद्विपाकवशात् जात्यायुर्भोगाँल्लभते जीवः[६]। शुभाऽशुभकर्मनिमित्तान्मनसश्च सदोषत्वाज्जीवाः पौनःपुन्येन तिर्यग्मानुषदेवेषु सञ्चरन्ति[७]। सोक्षरपुरुषस्तादृशं मोहप्रवृत्तिमन्तं जीवं रसरक्तमांसमेदोऽस्थिमज्जाशुक्रवति सप्तधातुमये पञ्चमहाभूतैर्विनिर्मिते देहे प्रहिणोति[८]।

**(ख) अङ्गप्रत्यङ्गानां नामानि—**

तदस्य शरीरस्य चितिः कथं भवति? अङ्गप्रत्यङ्गैश्चितमिदं शरीरं षडङ्गम्। चतस्रः शाखाः, मध्यं, शिरः षष्ठमिति। एषामङ्गानामेव प्रत्यङ्गान्यन्ये। तेषामङ्गप्रत्यङ्गानां नामानि वेदेषु दृश्यन्ते तद्यथा—

---

१. प्रथमो दैव्यो भिषक्। यजु० १६।५।
भिषक्तमं त्वा भिषजां शृणोमि। ऋ० २।३३।४।

२. ऋ० ६।११२।१।

३. यत्रौषधीः समग्मत राजानः समिताविव।
विप्रः स उच्यते भिषग् रक्षोहामीवचातनः॥ ऋ० १०।९७।६।

४. सुश्रुते सूत्रस्थाने १।२२।

५. चरके सूत्रस्थाने १।४२।

६. योग० २।३, १२, १३।

७. गतिप्रवृत्योस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म।
चरके शारीरस्थाने २।३८।

अव्यक्ताद् व्यक्ततां याति व्यक्तादव्यक्ततां पुनः।
रजस्तमोभ्यामाविष्टश्चक्रवत् परिवर्तते॥
चरके शारीरस्थाने १।६८।

८. द्रप्सश्चस्कन्द पृथिवीमनुद्यामिमं च योनिमनु यश्च पूर्वः।
अथर्व० १८।४।२८।

| | | | |
|---|---|---|---|
| केशाः | अथर्व० ६।६।१। | श्मश्रूणि | अथर्व० ५।१६।१४। |
| शिरः | अथर्व० २।२५।२। | हनू | अथर्व० १०।२।८। |
| शीर्षम् | अथर्व० ४।३४।१। | छुबुकम् | अथर्व० २।३३।१। |
| मूर्धा | अथर्व० १६।३।१-२। | ग्रीबाः | अथर्व० ६।३२।२। |
| कपालानि | अथर्व० ६।८।२२। | अधरकण्ठः | यजु० २५।२। |
| मस्तिष्कम् | अथर्व० २।३३।१। | मन्याः | अथर्व० ६।२५।१। |
| देवकोशः[1] | अथर्व० १०।२।२७। | उष्णिहा | अथर्व० २।३३।२। |
| हिरण्ययः कोशः | अथर्व० १०।२।३२। | कृकाटम् | अथर्व० ६।७।१। |
| ललाटम् | अथर्व० ६।७।१। | कृकाटिका | अथर्व० १०।२।८ |
| भ्रुवौ | ऋ० ४।३८।७। | स्कन्धौ | अथर्व० १२।२।३ |
| नेत्रम् | अथर्व० १०।१०।२२। | अंसौ | अथर्व० १०।२।५ |
| अक्षिणी | अथर्व० २।३३।१। | कफोडौ | अथर्व० १०।२।४। |
| चक्षणी | अथर्व० १०।२।६। | बाहू | अथर्व० २।१३।२। |
| चक्षुः | अथर्व० २।३५।५। | हस्तौ | अथर्व० ६।८१।१। |
| पक्ष्माणि | यजु० २५।१। | कक्षे | अथर्व० ६।१२७।२। |
| कनीनिका | अथर्व० ४।२०।३। | अरत्नी | यजु० २०।८। |
| कनीनकम् | यजु० २५।१। | अङ्गुलजः | अथर्व० २।३३।६। |
| श्रुतिः | यजु० १८।१। | नखाः | अथर्व० २।३३।६। |
| कर्णौ | अथर्व० २।३३।१ | कुसिन्धम् | अथर्व० १०।२।३। |
| नासिके | अथर्व० २।३३।१ | कबन्धम् | अथर्व० १०।२।३। |
| आस्यम् | अथर्व० ६।५६।३ | वक्षः | ऋ० १।६२।४। |
| मुखम् | अथर्व० १०।२।६। | उरः | अथर्व० १०।२।४। |
| ओष्ठौ | यजु० २५।२ | जत्रवः | यजु० २५।८। |
| सृक्काः | अथर्व० ६।१५।६। | पक्षत्तिः | यजु० २५।५। |
| दन्ताः | अथर्व० ५।१८।८। | पर्शवः | अथर्व० ११।३।१२। |
| दंष्ट्रा | अथर्व० ११।८।२२। | पार्श्वौ | अथर्व० ४।१४।७। |
| दन्तमूलानि | यजु० २५।१। | क्रोडः | अथर्व० ६।७।५। |
| तालु | यजु० २५।१। | स्तनौ | अथर्व० ६।१।७। |
| जिह्वा | अथर्व० २।३३।१। | वर्जह्ये | अथर्व० ११।१०।१४। |
| जिह्वाग्रम् | अथर्व० १।३४।२ | उदरम् | अथर्व० १०।१०।२२। |
| जिह्वामूलम् | अथर्व० १।३४।२। | जठरम् | अथर्व० २०।३३।३। |

१. देवाः = इन्द्रियाणि ।

| | |
|---|---|
| कुक्षी | अथर्व० २४।४।२। |
| नाभिः | अथर्व० २।३३।४। |
| जघनम् | अथर्व० १४।१।३६। |
| पृष्ठम् | यजु० ९।२१। |
| अनूकम् | अथर्व० ४।१४।८। |
| अनूक्यम् | अथर्व० २।३३।२। |
| करूकराणि | अथर्व० ११।११।८। |
| पृष्ट्यः | अथर्व० ९।७।६। |
| श्रोणी | अथर्व० १०।२।३। |
| भसद्यम् | अथर्व० २।३३।५। |
| प्लाशिः | अथर्व० २।३३।४। |
| अनूवृजौ | अथर्व० ९।४।१२। |
| चम्वौ | अथर्व० ९।१०।१२। |
| हृदयम् | अथर्व० २।३३।३। |
| हार्दिम् | अथर्व० ६।८९।१-२। |
| क्लोम | अथर्व० २।३३।३। |
| यकृत् | अथर्व० २।३३।३। |
| प्लीहा | अथर्व० २।३३।३। |
| पाजस्यम् | अथर्व० ९।७।५। |
| पित्तम् | यजु० १९।८५। |
| हलीक्ष्णम् | अथर्व० २।३३।३। |
| आन्त्राणि | अथर्व० १।३।६। |
| पुरीतत् | यजु० २५।८। |
| आन्त्रम् | अथर्व० १०।९।६। |
| वनिष्ठुः | अथर्व० २।३३।४। |
| गुदा | अथर्व० २।३३।४। |
| वृक्कौ | अथर्व० ९।७।१३। |
| गवीन्यौ | अथर्व० १।३।६। |
| मतस्ने | अथर्व० २।३३।३। |
| बस्तिः | अथर्व० १।३।७। |
| धनुः | अथर्व० १।१७।४। |
| वस्तिबिलम् | अथर्व० १।३।८। |
| मेहनम् | अथर्व० १।३।६। |

| | |
|---|---|
| शेपः | अथर्व० ४।४।१। |
| पसः | अथर्व० ४।४।६। |
| कपृत् | अथर्व० २०।१२६।१६। |
| रोमशम् | अथर्व० १०।१२६।१६। |
| वर्त्रम् | अथर्व० १।१।३७। |
| भसत् | अथर्व० २।३३।५। |
| मुष्कौ | अथर्व० ६।१२७।२। |
| आण्डौ | यजु० २०।९। |
| लोहितवाससः | यजु० २०।९। |
| गर्भः | अथर्व० १।११।२। |
| कमलम् | अथर्व० ८।६।९। |
| उल्वम् | अथर्व० ४।२।८। |
| जरायुः | यजु० ८।२७। |
| योनिः | अथर्व० १।११।५। |
| विजामा | अथर्व० ७।८०।२। |
| भंसः | अथर्व० २।३३।५। |
| कुल्मलम् | अथर्व० २।३०।३। |
| सक्थ्यौ | अथर्व० ६।९।१। |
| ऊरू | अथर्व० २।३३।५। |
| जाम्बीलौ | यजु० २५।३। |
| वक्षणाः | अथर्व० ९।८।१६। |
| जानुनी | अथर्व० ९।८।२१। |
| अष्ठीवन्तौ | अथर्व० ११।१०।१४। |
| जङ्घे | अथर्व० १०।२।२। |
| उच्छ्लङ्खौ | अथर्व० १०।२।१। |
| गुल्फौ | अथर्व० १०।२।१। |
| पादौ | अथर्व० १।२७।४। |
| प्रतिष्ठा | अथर्व० १०।२।१। |
| अधस्पदम् | अथर्व० ७।६५।१। |
| प्रपदोः | अथर्व० ६।२४।२। |
| चर्म | अथर्व० ४।१२।४। |
| ऊर्जः | अथर्व० १८।४।५३। |
| लोहितम् | अथर्व० ९।७।१७। |

| | | | |
|---|---|---|---|
| असृक् | अथर्व० ४।१२।४। | तमः | यजु० ६।१६। |
| मांसम् | अथर्व० १०।२।१। | मायुः | अथर्व० ६।१५।६। |
| पिशितम् | अथर्व० ६।१२७।१। | बलासम् | अथर्व० ६।१४।१ |
| क्रविः | अथर्व० ६।१२७।१। | लोमानि | अथर्व० २।३३।७। |
| वपा | अथर्व० २०।५।२। | परूंषि | यजु० १८।३। |
| मेदः | अथर्व० ४।२७।४। | मर्म | अथर्व० ८।३।१७। |
| अस्थीनि | अथर्व० ६।५।२३। | सीमन्तः | अथर्व० ६।१३४।३। |
| कीकसाः | अथर्व० २।३३।२। | स्नावानि | अथर्व० १२।११।८। |
| पर्वाणि | अथर्व० २।३३।७। | हिराः | अथर्व० १।१७।१। |
| मज्जा | अथर्व० २।३३।६। | धमन्यः | अथर्व० २।३३।६। |
| रेतः | अथर्व० ६।११।२। | खानि | अथर्व० १०।२।१। |
| बीजम् | अथर्व० ३।१७।२। | पेशनीः | अथर्व० १०।२।१। |
| ओजः | अथर्व० ३।५।१। | निधिः | अथर्व० १०।७।३। |

**( ग ) स्वाभाविक्यः क्रियाः—**

तदेतैरङ्गैरिदं शरीरं चीयते। तस्य शरीरस्य स्वाभाविक्यः क्रिया विक्रयाश्च दृश्यन्ते। तद्यथा स्वप्नं = निद्रा, संबाधः = निद्राक्षयः, तन्द्रचः = तन्द्रा, अवर्तिः = अरुचिर्ग्लानिर्वा, निर्ऋतिः[1] = निराशा अनुत्साहो वा। आयुर्बलं जवो[2] रेतो मेधां[3] जरा खालित्यं पालित्यं[4] स्तेयं दुष्कृतं वृजिनं = पापं सत्यं यज्ञो यशो बलं क्षत्रमोजो[5] भूतिः = समृद्धिः, अभूतिः = असमृद्धिः, रातयः = दानम्, अरातयः =

---

१. प्रियाप्रियाणि बहुला स्वप्नं संबाधतन्द्रचः।
आनन्दानुग्रो नन्दांश्च कस्माद्वहति पूरुषः॥ अथर्व० १०।२।९।
आर्तिरवर्तिर्निर्ऋतिः कुतो नु पुरुषेऽमतिः।
राद्धिः समृद्धिरव्यृद्धिर्मतिरुदितयः कुतः॥ अथर्व० १०।२।१०।

२. को अस्मै वासः पर्यदधात् को अस्यायुरकल्पयत्।
बलं कोऽस्मै प्रायच्छत् को अस्याकल्पयज्जवम्॥ अथर्व० १०।२।१५।

३. को अस्मिन् रेतो न्यदधात् तन्तुरातायतामिति।
मेधां को अस्मिन् अध्यौहत् को बाणं को नृतो दधौ॥
अथर्व० १०।२।१७।

४. जरा खालित्यं पालित्यं शरीरमनुप्राविशन्। अथर्व० ११।८।१९।

५. स्तेयं दुष्कृतं वृजिनं सत्यं यज्ञो यशो बृहत्।
बलञ्च क्षत्रमोजश्च शरीरमनु प्राविशन्॥ अथर्व० ११।८।२०।

कार्पण्यम्, क्षुधस्तृष्णा[1] आनन्दा मोदाः प्रमुदः = विनोदः, हसः = हासाः, नरिष्टाः = स्वच्छन्दचेष्टा नृत्तान्या[2]लापाः आयुजः=आयोजनानि प्रयुजः = प्रयोजनानि[3], आशिषः प्रशिषः = प्रशासनानि, संशिषः = अनुमतयः, विशिषः = मनोरथाः चित्तानि संकल्पा[4] आस्तेयीः = लालाः, बास्तेयीः = मूत्रम्, त्वरणाः = जलानि, गुह्याः = गुह्याङ्गानि शुक्राः स्थूलाः अन्नानि अपः = पेयानि जलानि[5]।

यथैताः स्वाभाविकक्रियास्तथैवेतत् श्वासप्रश्वासग्रहणमपि। न कश्चित् क्षणमपि श्वासप्रश्वासेन विना जीवितुमर्हति। जाग्रतः स्वपतो वा शश्वत् श्वासक्रिया जायते। नासिकया श्वासप्रणालीभिः श्वासं वहति। अयं प्राणवायुर्बाह्यत आयाति देहे दक्षं बलं वा दधाति। अपानवायुर्देहस्य रपः = मलं पराकरोति[6]। श्वासमनुप्रश्वासो भवति। एकः प्राणवायुर्बहिस्तिष्ठत्यन्तर्वाऽऽस्ते[7]। एतस्यार्थस्य प्रतिपादके मन्त्रे प्राणायामस्य संकेतो दृश्यते। एतौ प्राणापानावायुषः रक्षकौ मरणाच्चापि रक्षतः[8]। 'मित्रावरुणौ' इत्युच्येते। अन्तरिक्ष-

---

१. भूतिश्च वा अभूतिश्च रातयोऽरातयश्च याः।
क्षुधश्च सर्वास्तृष्णाश्च शरीरमनु प्राविशन्॥ अथर्व० ११।८।२१।

२. आनन्दाः मोदाः प्रमुदोऽभीमोदमुदश्च ये।
हसो नरिष्ट नृत्तानि शरीरमनुप्राविशन्॥ अथर्व० ११।८।२४।

३. आलापाश्च प्रलापाश्चाभीलापलपश्च ये।
शरीरं सर्वे प्राविशन्नायुजः प्रयुजो युजः॥ अथर्व० ११।८।२५।

४. आशिषश्च प्रशिषश्च संशिषो विशिषश्च याः। अथर्व० ११।८।२५।

५. आस्तेयीश्च बास्तेयीः त्वरणाः कृपणाश्च याः।
गुह्याः शुक्राः स्थूला अपस्ता०॥ अथर्व० ११।८।२८।

६. द्वाविमौ वातौ वात आसिन्धोरापरावतः।
दक्षं ते अन्य आवातु व्यन्यो वातु यद्रपः॥ अथर्व० ४।१३।२।
आ वात वाहि भेषजं वि वात वाहि यद्रपः।
त्वं हि विश्वभेषज०॥ अथर्व० ४।१३।३।

७. नमस्तेस्त्वायते नमो अस्तु परायते।
नमस्ते रुद्र तिष्ठत आसीनायोत ते नमः॥
अथर्व० ११।२।१५,११।४।७।

८. प्राणापानौ मृत्योर्मापातम्०। अथर्व० २।१६।१।
प्राणापानौ मा मा हासिष्टम्। अथर्व० १६।४।५। (अग्रिम पृष्ठे)

चारित्वांन्मातरिश्वनाविति च[१]। श्वासोच्छ्वासक्रियायाः कालः परिमितो भवति[२]। ज्वरादिषु गदेषु त्वयमेव स्वल्पत्वं दीर्घत्वं वाऽऽपद्यते। अस्य श्वासप्रश्वासस्य स्थानमुरः। तस्मिन् द्वौ फुफ्फुसौ[३]। तौ विशेषेण प्राणापानस्य साधनभूतौ।

तदिदं शरीरमन्नेनैव क्रियायुक्तञ्जायते। प्राणिनां बलवर्णौजसां मूलमाहार एव[४]। अन्नं वै प्राणः। तस्यान्नस्य पाचनक्रिया देहे स्वाभाविकी विद्यते। क्षुत्पिपासयोरुपशान्त्यै भोजनं गृह्यते। तदिदमन्नंबहुभिर्नामभिराम्नायेषूपलभ्यते[५]। जीवनरक्षणत्वादवः[६]। प्राणान् धारयितेति धासिः[७]। ऊर्जयति प्रबलयति प्राणयति वा इत्यूक्[८]। अनयति प्राणयत्यायुः[९]। जातान्यनेन व्रीह्यन्ते ततो ब्रह्म। शरीरं वर्चयति दीपयतीति वर्चः[१०]। एवमेते क्षुत्पिपासे व्याधी शरीरमनुप्रविष्टौ स्तः[११]।

यथा क्षुत्पिपासे व्याधी तथैव मृत्युरपि, शरीरस्य शीर्णशीलत्वात्। मृत्युश्च द्विविधः कालमृत्य्वकालमृत्युभेदात्। नियतकालप्रमाणमायुर्न वेति विचिकित्सायां विचार्यते, भूतानामायुर्युक्तिमपेक्षते।

---

कृणोमि ते प्राणापानौ। अथर्व० ८।२।११।
इहैव स्तं प्राणापानौ माप गातमितो युवम्।
शरीरमस्याङ्गानि जरसे वहतं पुनः॥ अथर्व० ३।११।६।
उत वात पितासि न उत भ्रातोत नः सखा।
स नो जीवातवे कृधि॥ ऋ० १०।१८६।२।

१. मित्रावरुणौ मे प्राणापानौ। अथर्व० १६।४।७।
मातरिश्वना प्राणापानौ। अथर्व० ५।१०।८।

२. प्राणापानैः संमिता ओषधीभिः। अथर्व० १२।३।२८।

३. द्र० अथर्व० २।३३।४, १०।६।१७, ६।४।१२।

४. द्र० सुश्रुते सूत्रस्थाने ४६।३।

५. निघ० २।७।

६. अग्निर्गिरोऽवसा वेतु धीतिम्। ऋ० १।७७।४।

७. विदत्सर मा तनयाय धासिम्। ऋ० १।६२।३।

८. यंसि त्मनमूर्जं न विश्वध क्षरध्यै। ऋ० १।६३।८।

९. पाहि सदमिद् विश्वायुः। ऋ० १।२७।३।

१०. आयुषा सह वर्चसा। ऋ० १०।८५।३९, अथर्व० १४।२।२।

११. क्षधश्च सर्वास्तृष्णाश्च शरीरमनु प्राविशन्। अथर्व० ११।८।२१।

पौर्वदैहिकं कृतं कर्म दैवमैहिकञ्च पुरुषकारः स्मर्यते। तयोरेवास्य बलाबलं तिष्ठति। उत्तमकर्मणा दीर्घायुः सुखायुर्वा भवति हीनेन चाल्पायुर्दुःखायुर्वा। विशिष्टेन पुरुषकारेण दुर्बलं दैवमुपहन्यते, एवं विशिष्टेन दैवेन च हीनः पुरुषार्थः।

तस्मादुभयदृष्टत्वादेकान्तग्रहणमसाधुः निदर्शनञ्चात्र प्रस्तूयते यदि हि नियतकालप्रमाणमायुः सर्वं स्यात्तदाऽऽयुष्कामाणां न मन्त्रौषधि-जपोपवासप्रायश्चित्ताद्याः क्रिया इष्टयश्च प्रयुज्येरन्। न चण्डचपलगो-गजोष्ट्रादयः पवनादयश्च दुष्टाः परिहार्याः स्युः न गिरिविषमदुर्गाम्बु-वेगाः न प्रवृद्धोऽग्निः न च विविधविषाश्रयाः सरीसृपोरगादयः न, रिपवः, इत्येवमादयो भावा नाभावकराः स्युरायुषः सर्वस्य नियत-कालप्रमाणत्वात्। न चाकालमरणभयमागच्छेत् प्राणिनां, व्यर्थाश्चा-रम्भकथाप्रयोगबुद्धयः स्युर्महर्षीणां रसायनाधिकारे, नापि राजा नियतायुषमपराधिनं प्राणैर्वियुञ्जेत् न भिषगार्तं भेषजेनोपपादयेत्, न चर्षयो यथेष्टमायुस्तपसा प्राप्नुयुः[1] न च परमेश्वरः "सर्वमायु-र्जीव्यासम्"[2] 'आयुष्मान् भूयासम्"[3] "सहस्रायुः सुकृतश्चरेयम्"[4] "शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमुवसन्तान्। शतं त इन्द्रो अग्निः सविता बृहस्पतिः शतायुषा हविषाऽऽहार्षमेनम्"[5] "शतं हिमा अशीय भेजजेभिः[6]" "शतं जीवाति शरदस्तवायम्"[7] "प्राणापानाभ्याँ गुपितं शतं हिमाः"[8] प्रभृतीन् दीर्घायुष्करान् मन्त्रानुपदिशेन्न च गुरव 'आयुष्मान् भव' इत्याशीः वदेयुः। अपि च सर्वचक्षुषामेतत् प्रत्यक्षं यथा पुरुषसहस्राणामाहवं कुर्वतामकुर्वतां चाऽतुल्यायुष्ट्वं तथा जातमात्राणां रोगाणामप्रतीकारात् प्रतीकाराच्चाऽविषविषप्राशिनां चाप्यतुल्यायुष्ट्वमेव, तस्माद्धितोपचारमूलं जीवितमतो विपर्यया-

---

१. द्र० चरके विमानस्थाने ३।४१।

२. अथर्व० १९।६९।१–४।

३. अथर्व० १८।२।४५।

४. अथर्व० १७।१।२७।

५. अथर्व० ३।११।४।

६. ऋ० २।३३।२।

७. अथर्व० २।२९।२।

८. अथर्व० २।२८।४।

न्मृत्युः[1]। वेदेषु तावत् शतोपाया दीर्घायुप्राप्त्यै विहिताः[2]। भिषजाऽऽतुर आश्वासयितव्यो यन्न त्वं मरिष्यसि मा भैषीः[3]। अहं सर्वान् यमदूतानपाकरोमीति[4]।

एवं सति कथं कालमृत्युरकालमृत्युर्वा भवतीति जिज्ञासायामुच्यते यथा यानसमायुक्तोऽक्षः प्रकृत्यैव दृढत्वादिगुणोपेतः, स च सर्वगुणसम्पन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवाऽवसानं गच्छेत् तथाऽऽयुः शरीरोपगतं बलवत् प्रकृत्या यथावदुपचर्यमाणं स्वप्रमाणक्षयादेवावसानं गच्छति स मृत्युः काले। यथा च स एवाऽक्षोतिभाराधिष्ठितत्वाद् विषमपथादक्ष चङ्क्रमणाद् वाह्यवाहकदोषादणिमोक्षात् पर्यसनादस्नेहाच्चान्तराऽवसानमापद्यते, तथाऽऽयुरप्ययथाबलमारभ्यादयथाऽग्न्यभ्यवहरणादसत्संश्रयादुदीर्णमूत्रपुरीषादिवेगविनिग्रहात् क्रोधलोभदुःसाहसादिवेगविधारणाद् भूतविषवाय्वग्न्युपतापादभिघाताच्चान्तराऽवसानमापद्यते स मृत्युरकाले। तथा ज्वरादिभिरप्यातङ्कैर्मिथ्योपचरितैरकालमृत्युर्दरीदृश्यते प्राणिनाम्[5]। अतो विवेकशीलैर्जनैरकालमृत्योः कारणान्यपास्य दीर्घायुष्याणि वरेण्यानि चानुष्ठीय पुरुषार्थचतुष्टयेन सुखमेधितव्यम्।

## ( २ ) व्याधिनिदानात्मकं वृत्तम्

त्रिदोषप्रकोपो विषं कृमयश्चेति रोगाणां कारणानि समुपदृश्यन्ते। वातपित्तश्लेष्मभिरव्यापन्नैः शरीरमिदं धार्यते आगारमिव स्थूणाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके[6]। ते प्रकृतिभूताः शरीरोपकारका

---

१. द्र० चरके विमानस्थाने ३।४१।

२. मेममन्ये मृत्यवो हिंसिषुः शतं ये। अथर्व० २।२८।१।
ते कृणुत जरसमायुरस्मै शतमन्यात् परिवृणक्तु मृत्यून्।
अथर्व० १।३०।३।
व्यन्ये यन्तु मृत्यवो यानाहुरितराञ्छतम्। अथर्व० ३।११।५।
मृत्योः पदं योपयन्तो यदैत द्राघीय आयुः प्रतरं दधानाः।
ऋ० १०।१८।२।
अन्तर्मृत्युं दधतां पर्वतेन। ऋ० १०।१८।४।

३. सोऽरिष्ट न मरिष्यसि न मरिष्यसि मा बिभ। अथर्व० ८।२।२४।

४. वैवस्वतेन प्रहितान्यमदूतांश्चरतोऽपसेधामि सर्वान्। अथर्व० ८।२।११।

५. द्र० चरके विमानस्थाने ३।४३।

६. सुश्रुते सूत्रस्थाने २१।३।

भवन्ति विकृतिमापन्नास्तु खलु नानाविधैर्विकारैः शरीरमुपतापयन्ति[१]। वातपित्तश्लेष्माणः शरीरधारकत्वाद्धातव उच्यन्ते त एत ऋग्वेदे त्रिधातुपदेनाम्नायन्ते[२]।

**(क) त्रिदोषप्रकोपः—**

वायुर्देहे बलमादधाति प्राणोदानसमानव्यानापानरूपैर्विभक्तः[३] पित्तादिदोषाणां रसरक्तादिधातूनां पुरीषादीनां मलानां जाठराग्नेश्च समतां, शब्दस्पर्शरूपरसगन्धेषु विषयेषु समनस्केन्द्रियाणामभिसम्बन्धं, वचनादीनां क्रियाणामानुलोम्यं च सम्पादयति। पित्तं पाचकं रञ्जकं साधकमालोचकं भ्राजकमिति पञ्चधा प्रविभक्तं वह्निजलाभ्यामुत्पद्यते। पित्तस्य चाप्युल्लेख आम्नायेषु दृश्यते[४]। इदं रागपक्तितेजोमेधोष्म-कृदग्निकर्मणाऽनुग्रहं करोति। श्लेष्मा श्लेषकक्लेदकरोपकतर्पका-वलम्बकः, सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्यकृत् पञ्चधा प्रविभक्त उदककर्मणाऽनुग्रहं करोति[५]। एते पूर्वकृतकर्मवशाद्देहं धारयन्ति[६] यदा तु पुराकृतकर्मणा विपाकजन्यभोगा निरवशेषतया भुज्यन्ते तदैते चिकित्सापथमतिक्रम्यारिष्टलिङ्गानि मरणचिह्नानि कुर्वन्ति[७]। एते त्रय एव स्वस्थानस्थाः प्रस्पन्दनोद्वहनपूरणविवेकधारणै-र्देहिनं पालयन्ति विकृतिमापन्नास्तु नानाविधं समुपतापयन्ति शरीरम्।

**(ख) विषम्—**

भेषजवेदे धान्यस्यान्नस्य वा भक्ष्याभक्ष्यस्य पेयस्य पयसश्च निर्विषीकरणविधान[८]मेतद्विज्ञापयति यत्तेषां विषाक्तत्वं व्याधिजनकम्।

---

१. चरके विमानस्थाने १।६।

२. त्रिधातु शर्म वहतं शुभस्पती। ऋ० १।३४।६।
त्रिधातूनि दाशुषे यच्छताधि। ऋ० १।८५।१२।

३. चरके सूत्रस्थाने १२।८।

४. अग्ने पित्तमपामसि। अथर्व० १८।३।५।

५. द्र० सुश्रुते सूत्रस्थाने १५।४।

६. अदृष्टहेतुकेन। सुश्रुते सूत्रस्थाने २१।१०।

७. क्रियापथमतिक्रान्ता केवलं देहमाप्लुताः।
चिह्नं कुर्वन्ति यद्दोषास्तदरिष्टं निरुच्यते॥
चरके इन्द्रियस्थाने ११।२९।

८. यदश्नासि यत्पिबसि धान्यं कृष्याः पयः।
यदाद्यं यदनाद्यं सर्वं ते अन्नमविषं कृणोमि॥ अथर्व० ८।२।१९।

अन्यत्र सर्वेषां यक्ष्माणां विषस्य दूरीकरणाय सङ्केतः समुपलभ्यते[1]। विष्लृव्याप्ताविति धातोर्विषमिति रूपं सिध्यति। इदमाशु व्यवायि भवति[2]। अतः शीघ्रं कार्यकारित्वात् सद्यो घातकं भवति। इदं शरीरे वातादीन् दूषयति धातुमलादींश्च क्षपयति।

**( ग ) क्रिमयः—**

क्रिमयः स्वसत्तया निजदेहसंपर्चनेन विषोत्पादनेन विसृष्टमलमूत्र-संसर्गेण च रोगोत्पादका भवन्ति। ते विविधा असंख्याताश्च भेषजवेदे विशेषेण प्रतिपादिताः। तेषां प्रणाशनविधानमपि विहितम्। निदर्शनार्थं पाषाणमय उलूखले यथौषधीनां पेषणं मर्दनं वा क्रियते तथा क्रिमयो मर्दनीयाः[3]। सहमानानाम्न्या पृश्निपर्ण्या भेषजेन दुर्णामिनाम्नः क्रिमेः शिरोवृश्चनस्योपदेशः क्रियते[4]। केचित् क्रिमयः प्रत्यक्षा भवन्ति गण्डूपदाद्याकृतिमन्तः, अपरे च सूक्ष्मत्वात् चक्षुर्विषयानर्हा दृष्टा अदृष्टाश्च, ते सर्वेऽपि हन्तव्या एव[5]। एते क्रिमयोऽस्माकं देहं प्रविशन्ति[6]। केचिदक्षिणी केचिन्नासां केचिच्च दन्तान् परिसर्पन्ति,[7] तत्र गत्वा च तेषु तेष्वङ्गेषु विकारं जनयन्ति। केचिद् गर्दभवन्नादं

---

१. यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत्। अथर्व० ६।८।१०–१२।

२. रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च।
विकाशि विशदं चैव लघ्वपाकि च तत् स्मृतम्॥
सुश्रुते कल्पस्थाने २।१६–२०।

३. तया पिनष्मि सं क्रिमीन् दृषदा खल्वाँ इव। अथर्व० २।३१।१।
सर्वान् निमष्मषाकरं दृषदा खल्वाँ इव। अथर्व० ५।२३।८।

४. सहमानेयं प्रथमा पृश्निपर्ण्यजायत।
तयाऽहं दुर्णाम्नां शिरो वृश्चामि शकुनेरिव॥ अथर्व० २।२५।२।

५. दृष्टमदृष्टमतृहमथो कुरूरुमतृहम्।
अलगण्डून्त्सर्वाञ्छलुनान् क्रिमीन् वचसा जम्भयामसि॥
अथर्व २।३१।२।

६. ये क्रिमयः पर्वतेषु वनेष्वोषधीषु पशुष्वप्स्वन्तः।
ये अस्माकं तन्वमाविविशुः सर्वं तद्धन्मि जनिम क्रिमीणाम्॥
अथर्व० २।३१।५।

७. यो अक्ष्यौ परिसर्पति यो नासे परिसर्पति।
दतां यो मध्ये गच्छति तं क्रिमिं जम्भयामसि॥ अथर्व० ५।२३।३।

कुर्वन्ति[१]। अपरे क्लीबा इव नृत्यन्ति[२]। केचिच्च सूर्यप्रकाशं न तितिक्षन्तेऽतो घनान्धकारे वसन्ति ततो दुर्गन्धजनका[३] भवन्ति। केचिदामं मांसं खादन्ति, अपरे गर्भान् खादन्ति[४] केचित् सूर्योदये सति स्नुषा यथा श्वशुराल्लज्जते तथा तिरोहन्ते, तथा चेतस्ततः परिसर्पन्ति[५]। एतादृशान् क्रमीन् स्थूलान् प्रत्यक्षान् सूक्ष्मानदृष्टान् सर्वानादित्यो नाशयति[६]। एतेन ज्ञायते यत् सूर्यप्रकाश आवास आरोग्यकरः। एतादृशं विस्तरेण वर्णनं श्रुतिषूपलक्ष्यते।

अथ क्रमीणां नामानि यौगिकानि तेषां विविधगुणद्योतकानि भेषजवेदादाकल्यन्ते तद्यथा—

| | | |
|---|---|---|
| यातुधानः | यातु गन्ता अभिधीयत इति अथवा यातुना दुःखं तं दधाति सः। | अथर्व० ४।१८।८। |
| यातुधानी | यातुधानस्य स्त्री। | अथर्व० ४।१८।७। |
| किमीदिनः | किमिदानीं किमिदानीमिति चरति छिद्रान्वेषण्या बुद्धया। | अथर्व० ८।४।२। |
| रक्षांसि | रक्षितव्यमस्मात् रहसि वा क्षिणोति रात्रौ नक्षत इति वा। | अथर्व० ८।३।६। |
| अलगण्डूः | मांसदूषकः। | अथर्व० २।३१।२-३। |
| शीर्षण्यः | शिरसि भवः। | अथर्व० २।३१।४। |
| पार्ष्टेयः | पर्शुकावासी। | अथर्व० २।३१।४। |

१. ये शालाः परिनृत्यन्ति सायं गर्दभनादिनः।
कुसूलाः ये च कुक्षिलाः ककुभाः करुमाः स्रिमाः।
तानोषधे त्वं गन्धेन विषूचीनाम् विनाशय॥ अथर्व० ८।६।१०।

२. क्लीबा इव प्रनृत्यन्तो वने ये कुर्वते घोषं तानितो नाशयामसि।
अथर्व० ८।६।११।

३. ये सूर्यं न तितिक्षन्त आतपन्तममुं दिवः।
अरायान् बस्तवासिनो दुर्गन्धींल्लोहितास्यान् मककान् नाशयामसि॥
अथर्व० ८।६।१२।

४. य आमं मांसं खादन्ति पौरुषेयं च ये क्रविः।
गर्भान् खादन्ति केशवास्तानितो नाशयामसि॥ अथर्व० ८।६।२३।

५. ये सूर्यात् परिसर्पन्ति स्नुषेव श्वशुरादधि। अथर्व० ८।६।२४।

६. उत् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा।
दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रमीन्॥ अथर्व० ५।२३।६।

| | | |
|---|---|---|
| अवस्कवः | अधोगामी । | अथर्व० २।३१।४ । |
| व्यध्वरः | विमार्गगामी । | अथर्व० २।३१।४ । |
| कण्वः | सूक्ष्मः चतुरश्च । | अथर्व० ५।२३।१०,२।२५।१। |
| दुर्णामा | पापो योनिजो गर्भाशये रोगजनकः | अथर्व० २।२५।२ । |
| अराय्यः | दुर्भगः । | अथर्व० २।२५।३ । |
| असृक्पावा | रुधिरपायी । | अथर्व० २।२५।३ । |
| गर्भादः | गर्भमत्ति यः । | अथर्व० २।२५।३ । |
| क्रव्यादः | क्रव्यमत्ति यः । | अथर्व० ४।३६।३ । |
| गन्धर्वः | गां वाणीं धारयतीति । | अथर्व० ४।३७।१२ । |
| अवकादः | शैवालभक्षकः । | अथर्व० ४।३७।१० । |
| अभिशोचः | अभितः शोकं प्रापयिता । | अथर्व० ४।३७।१० । |
| पिशाचः | पिशितमश्नाति । | अथर्व० ४।३७।१० । |
| अप्सरसः | अप्सरति विरुद्धं गच्छति अप्सारिणी भवतीति वा । | अथर्व० ४।३७।१२ । |
| सरूपौ | समरूपवन्तौ । | अथर्व० ५।२३।४ । |
| विरूपौ | विभिन्नरूपौ विकृतरूपौ वा । | अथर्व० ५।२३।४ । |
| कृष्णौ | तद्वर्णौ । | अथर्व० ५।२३।४ । |
| रोहितौ | लोहितवर्णौ । | अथर्व० ५।२३।४ । |
| बभ्रुः । बभ्रुकर्णः | तद्वर्णः । बभ्रू कर्णौ यस्य । | अथर्व० ५।२३।४। |
| गृध्रः | गृध्रत्यभिकाङ्क्षति पक्षिविशेषः । तद्वत्कष्टप्रदः । | अथर्व० ५।२३।४ । |
| कोकः | संहारकः । | अथर्व० ५।२३।४ । |
| शितिकक्षाः | तीक्ष्णकक्षाः । | अथर्व० ५।२३।५ । |
| शितिबाहवः | तीक्ष्णभुजः । | अथर्व० ५।२३।५ । |
| विश्वरूपाः | विविधरूपाः । | अथर्व० ५।२३।५ । |
| येवाषासः | शीघ्रगतिमन्तः । | अथर्व० ५।२३।७ । |
| कष्कषासः | कष्कष्ध्वनयितारः । | अथर्व० ५।२३।७ । |
| एजत्काः | कम्पयितारः । | अथर्व० ५।२३।७ । |
| शिपिविलुकाः | तीक्ष्णाः । | अथर्व० ५।२३।७ । |
| नदनिमा | नादकारी । | अथर्व० ५।२३।८ । |
| त्रिशीर्षा | त्रिशिरस्कः । | अथर्व० ५।२३।९ । |
| त्रिककुद् | त्रिककुद्मान् । | अथर्व० ५।२३।९ । |

| | | |
|---|---|---|
| सारङ्गः | चित्रविचित्रवर्णः । | अथर्व० ५।२३।६ । |
| अर्जुनः | श्वेतवर्णः । | अथर्व० ५।२३।६ । |
| क्षुल्लकाः | कृमीणाम् अण्डाः । | अथर्व० ५।२३।१२ । |
| अत्रिणः | अदन्तीति अत्रिः पापं वा । | अथर्व० ५।२३।१० । |
| अलिंशः | लसत्यालिङ्गति यः । | अथर्व० ८।६।१ । |
| वत्सपः | भ्रूणचोषकः । | अथर्व० ८।६।१ । |
| पलालः | अतितुच्छाङ्गः । | अथर्व० ८।६।२ । |
| अनुपलालः | अतितुच्छाङ्गः । | अथर्व० ८।६।२ । |
| शर्कुः | हिंसकः । | अथर्व० ८।६।२ । |
| मलिम्लुचः | अतिमलीनः । | अथर्व० ८।६।२ । |
| पलीजकः | अकाले पलितकारी । | अथर्व० ८।६।२ । |
| आश्रेषः | श्लेषकः । | अथर्व० ८।६।२ । |
| वव्रिवासः | रूपंहीनकर्ता । | अथर्व० ८।६।२ । |
| ऋक्षग्रीवी | ऋक्ष इव ग्रीवा यस्य । | अथर्व० ८।६।२ । |
| प्रमीली | दंशनेन नेत्रप्रमीलयिता । | अथर्व० ८।६।२ । |
| सुनामा | हानिरहितः । | अथर्व० ८।६।४ । |
| केश्यसुरः | केशवान् । | अथर्व० ८।६।५ । |
| स्तम्बजः | स्तम्बेजातः । | अथर्व० ८।६।५ । |
| तुण्डिकः | विकृततुण्डी । | अथर्व० ८।६।५ । |
| श्वकिष्किणः | श्वा इव हिंसकः । | अथर्व० ८।६।६ । |
| तिरीटी | किरीट इव उन्नतशिरो यस्य । | अथर्व० ८।६।७ । |
| कुसूलाः | अन्नकुठारेव स्थूलाः । | अथर्व० ८।६।१० । |
| कुक्षिलाः | स्थूलकुक्षयः । | अथर्व० ८।६।१० । |
| ककुभाः | भीमाकाराः । | अथर्व० ८।६।१० । |
| करुमाः | कुत्सित शब्दयितारः । | अथर्व० ८।६।१० । |
| स्रिमाः | सूक्ष्माः । | अथर्व० ८।६।१० । |
| कुकुन्धाः | कुकुध्वनयितारः । | अथर्व० ८।६।११ । |
| कुकूरभाः | अल्पज्योतिष्काः । | अथर्व० ८।६।११ । |
| दुर्गन्धी | दुष्टगन्धः । | अथर्व० ८।६।१२ । |
| मककाः | गन्तारः । | अथर्व० ८।६।१२ । |
| खलजः | खले जातः । | अथर्व० ८।६।१५ । |
| शकधूमजः | गोमयधूमजातः । | अथर्व० ८।६।१५ । |
| उरुण्डः | बृहद्मुखः । | अथर्व० ८।६।१५ । |

| | | |
|---|---|---|
| मट्मटाः | मट्मट्कारिणः । | अथर्व० ८।६।१५। |
| कुम्भमुष्काः | कुम्भ इव अण्डकोषाः येषाम् । | अथर्व० ८।६।१५। |
| अयाशवः | शीघ्रगामिनः । | अथर्व० ८।६।१५। |
| पर्यस्ताक्षः | विस्तृतनेत्रः । | अथर्व० ८।६।१६। |
| अप्रचङ्कशः | क्षीणोकः । | अथर्व० ८।६।१६। |
| पण्डगाः | सरीसृपाः । | अथर्व० ८।६।१६। |
| उद्धर्षी | घर्षणशीलः । | अथर्व० ८।६।१७। |
| मुनिकेशः | जटिलः । | अथर्व० ८।६।१७। |
| मरीमृशाः | पुनः पुनर्हिंसितुं स्पर्शकः । | अथर्व० ८।६।१७। |
| उदुम्बलः | मारकः । | अथर्व० ८।६।१७। |
| तुण्डेलः | प्रकृष्टतुण्डः । | अथर्व० ८।६।१७। |
| शालुडः | दुष्टः । | अथर्व० ८।६।१७। |

यथर्ग्वेदे कृमितुल्यदुर्गुणयुक्ता नरपिशाचाः पिशाचा रक्षांसि, अचिता यातुधाना अघशंसो ब्रह्मद्विषो भङ्गुरावन्तो मायया शाशदाना उलूकाः शुशुलूकाः श्वानः कोकः सुपर्णा गृध्राः कीर्तिताः[1]। एवमथर्ववेदे गायकाः कृमयः गन्धर्वनाम्ना, रूपप्रिया गन्धप्रिया वाऽप्सरस इति नाम्ना कीर्तिताः[2]। त एते कृमयो रोगजनकत्वात् रोगाणां हेतवः।

## ( ३ ) व्याधिनामात्मकं वृत्तम्

वेदेषु तक्मा[3] = ज्वरः कास[4] बलास[5] अपचित्[6] जायान्य[7] ( राजयक्ष्मादयो जायया भवाः ) हरिमा[8] मत्ररोव[9] क्षात्रय[10] ( परक्षेत्रे देहे

---

१. द्र० ऋ० ७।१०४ ( सम्पूर्णं सूक्तम ) ।

२. त्वया वयमप्सरसो गन्धर्वांश्चातयामहे । अथर्व० ४ ३७।२ ।
शतमहं दुर्णाम्नीनां गन्धर्वाप्सरसां शतम् । अथर्व० १९।३६।६ ।

३. अथर्व० १।२५।२ ।

४. अथर्व० १।१२।३ ।

५. अथर्व० ५।२२।११ ।

६. अथर्व० ६।८३।१ ।

७. अथर्व० ७।७६।५ ।

८. अथर्व० १।२२।१ ।

९. अथर्व० १।२।१–४ ।

१०. अथर्व० २।८।१–२ ।

चिकित्स्यः ), किलास[1] आस्राव[2] ( आ समन्तात् स्रवत्यङ्ग-प्रत्यङ्गेभ्यश्च ) विषूची[3] उन्माद[4] विसल्पक[5] विद्रधि[6] अलजी[7] अप्वा[8] = प्रवाहिका हृद्रोग[9] वातदुःष्वप्नप्रभृतीनां[10] विषादीनाञ्च वर्णनं व्यासतः समुपलभ्यते[11]। ओषधिः-शल्योद्धरण-मन्त्र-मणि-( ओषधिवटी ) धारणचिकित्साऽपि विस्तरेण प्रतिपादिता। बहुधा रोगाणां नामभिरेव तेषां लिङ्गानि व्यज्यन्ते। जिज्ञासुभिरियं विद्याऽथर्ववेदविद्भ्यः कविराजेभ्य एव श्रोतव्या मन्तव्या निदिध्या-सितव्या कर्मोपासनया च साक्षात्कर्तव्या। अत्र समासतो नामानि निरुच्यन्ते—तक्मा-तकि कृच्छ्रजीवन इति धातो रूपम्। तक्मा एव ज्वर इत्युच्यते। तस्य मूलं भेषजवेदे प्रतिपादितम्—'शकल्येषि यदि वा ते जनित्रम्'[12]। जाठराग्नेर्नाम शकल्येट्। शकलानां समूहः शकल्यस्तमिच्छतीति। तस्मिन् ज्वरस्य जन्म। तक्मा यक्ष्मादयो ज्वरस्य नामानि। तेषां बहूनां भेदानां वर्णनं चिकित्सा च वेदे समुपदिष्टा। तद्यथा—

| | | |
|---|---|---|
| शीर्षलोकः | शिरोग्राही। | अथर्व० १९।३९।१०। |
| सहस्राक्षः | सहस्राण्यक्षीणि यस्य सः। | अथर्व० ६।२६।३। |
| अर्चिः | ज्वाला। | अथर्व० १।२५।२। |
| तपुः | तापकः। | अथर्व० ६।२०।१। |
| शुष्मी | शोषकः। | अथर्व० ६।२०।१। |
| ग्रभीता | ग्रहीता। | अथर्व० १।१२।२। |

१. अथर्व० १।२३।१-४।
२. द्र० अथर्व० २।३।३। सायणभाष्यम्।
३. अथर्व० ७।४२।१।
४ अथर्व० ६।१११।१-२।
५. अथर्व० ६।१२७।१।
६. अथर्व० ६।१२७।१।
७. अथर्व० ९।८।२०।
८. अथर्व० ३।२।५।
९. द्र० हृद्द्योतः। अथर्व० १।२२।१।
१०. द्र० अथर्व० ६।४५-४६।
११. अथर्व० ५।१३।४।
१२. अथर्व० १।२५।२।

| | | |
|---|---|---|
| शोचिः | तापकः । | अथर्व० १।२५।२ । |
| हुडुः | हुडुध्वनिकारयिता । | अथर्व० १।२५।२ । |
| शोकः | संतापकः । | अथर्व० १।२५।३ । |
| अभिशोकः | संतापकः । | अथर्व० १।२५।३ । |
| वरुणस्य पुत्रः | जलीयदेशेषु भवः । | अथर्व० १।२५।३ । |
| व्यालः | व्याल इव हन्ता । | अथर्व० १।२२।६ । |
| विगदः | विशिष्टगदः । | अथर्व० ५।२२।६ । |
| व्यङ्गः | विकृताङ्गकारी । | अथर्व० ५।२२।६ । |
| अमर्त्यः | पुनः पुनराक्रान्ता । | अथर्व० ५।२६।३ । |
| पाप्मा | क्षयकारकः । | अथर्व० ६।२६।१ । |
| अभिशोचयिष्णुः | अभितस्तापकः । | अथर्व० ६।२०।३ । |
| रुद्रः | रोदयिता । | अथर्व० ६।२०।२ । |
| हरितस्य देवः | हरिद्वर्णस्य देवः । | अथर्व० १।२५।२ । |
| अभ्रजा | अभ्राज्जातः श्लेष्मज्वरः । | अथर्व० १।१२।३ । |
| वातजा | वातज्वरः । | अथर्व० १।१२।३ । |
| शुष्मः | शोषकज्वरः । | अथर्व० १।१२।३ । |
| परुषः | त्वग्रूक्षयिता । | अथर्व० ५।२२।३ । |
| अङ्गज्वरः | अङ्गेषु भवः । | अथर्व० ६।८।५ । |
| अङ्गभेदः | अङ्गमर्दयुक्तः । | अथर्व० ६।८।५ । |
| शीतः | शीतज्वरः । | अथर्व० ५।२२।१० । |
| रूरः | पित्तज्वरः । | अथर्व० ५।२२।१० । |
| तृतीयकः | तृतीयकः । | अथर्व० ५।२२।१३ । |
| वितृतीयः | चातुर्थिकः । | अथर्व० ५।२२।१३ । |
| सदन्दिः | सन्ततः । | अथर्व० ५।२२।१३ । |
| शारदः | शरदि भवः । | अथर्व० ५।२२।१३ । |
| वार्षिकः | प्रावृषि भवः । | अथर्व० ५।२२।१३ । |
| ग्रैष्मः | ग्रीष्मे भवः । | अथर्व० ५।२२।१३ । |
| विश्वशारदः | शरदि विश्वतः प्रसर्ता । | अथर्व० ६।८।६ । |
| अन्येद्युः | अन्येद्युष्कः । | अथर्व० १।२५।४ । |
| उभयद्युः | उभयद्युः । | अथर्व० १।२५।४ । |
| अरुणः | रक्तज्वरः ( मसूरिकादिषु ) | अथर्व० ६।२०।३ । |
| बभ्रुः | पीतज्वरः । | अथर्व० ६।२०।३ । |
| वन्यः | वने भवः । | अथर्व० ६।२०।३ । |

| | | |
|---|---|---|
| च्यवनः | स्वेदकज्वरः । | अथर्व० ७।११६।१ । |
| नोदनः | इतस्ततो प्रद्रावयति । | अथर्व० ७।११६।१ । |
| अव्रतः | विषमज्वरः । | अथर्व० ७।११६।२ । |
| धृष्णुः | धर्षणपूर्वमाक्रान्ता । | अथर्व० ७।११६।१ । |
| हायनः[१] | व्रीहिपक्वकाले भवः । | अथर्व० १९।३९।१० । |

## ( ४ ) व्याधिचिकित्सात्मकं वृत्तम्

भेषजैरेव भिषक् भिषग् भवति[२]। न हि धनुर्ज्याकरवालादिभिर्विना रक्षापुरुषो रक्ष्यं रक्षितुं समर्थो भवति। अतो रोगिभिर्भिषजं प्रति भक्तिमद्भिर्वर्तितव्यम्। यन्निर्देशकारित्वमातुरस्य स्मृतं[३] न तद्भक्तिभावेन विना वर्त्यते। रोगिभिर्वैद्यानां समीपे गत्वा तान् स्तुतिभिः स्तुत्वाऽभ्यर्च्य च सदाऽऽरोग्याय प्रयतितव्यम्[४]। तथैव भिषजोऽपि सर्वविधप्रयत्नेन मनुष्यानरोगान् कुर्वन्तु। रोगिणामिदमेव कर्तव्यं यत्ते न कदापि वैद्यं प्रति क्रुध्यन्तु न च तं निन्दन्तु, उत च सर्वदा तं पूजयन्तु[५]। यदा राज्ञाऽपि भिषक् पूज्योऽस्ति तदा प्रजाजनानां तु का कथा ?। यस्य राज्ये सहस्रं वैद्याश्चरन्ति तत्र सर्वेभ्यः सुखं भवति[६]।

### ( क ) ओषधि :—

रोगनिवारकाणि द्रव्याण्यनेकविधानि। तद्यथा सूर्यरश्मिभिर्जलाग्निवायुविद्युदादिभिर्विविधानां विकाराणाँ चिकित्सा भवति।

---

१. द्र० रामगोपालशास्त्री, वेदों में आयुर्वेद ।

२. युवं ह स्थो भिषजा भेषजेभिः । ऋ० १।१५७।६ ।

३. चरके सूत्रस्थाने ९।९ ।

४. द्र० दयानन्दभाष्यम् । ऋ० १।१२७।१० ।

५. अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमन्त कृष्टीः ।
ऋ० १।१८९।३ ।

मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वां भिषजां शृणोमि ।।
ऋ० २।३३।४ ।

तमुष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य ।
ऋ० ५।४२।११ ।

६. सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ।
ऋ० ७।४६।३ ।

तत्तद्रोगहराणां द्रव्याणां होमेनापि यक्ष्मादीनां रोगाणां निवृत्तिर्भवति[१]। उपस्पर्शनेन केचिद्रोगा निवर्तन्ते[२]। यो भिषक् हस्तस्पर्शमात्रेण रोगाञ्जयति[३] स पीयूषपाणिरिति लोके ख्यातिं लभते। अभिमन्त्रणेनापि व्याध्युपसृष्टानां व्याधिपरिमोक्षः संभवति[४]। सूर्यचन्द्रतारकादिभिर्हृद्रोगस्य हरिमा (कामला) रोगस्य क्षेत्रियरोगस्य च चिकित्सा भवति[५]।

शल्यतन्त्रेषु धन्वन्तरिसंहितादिष्वग्निक्षारादिना दहनकर्मणा चिकित्सा प्रतिपादिताऽर्शादीनां विकाराणाम्। विद्युता यद्दहनमर्शसामर्बुदानां वा क्रियते तदप्यग्निकर्मैव। तथा सर्पदंशादिष्वपि ज्वलद्भिरङ्गारैर्दंशस्थानं दह्यते। तदृग्वेदेऽग्निचिकित्साया उपदेशः[६]।

सूर्यरश्मिविद्युदग्निवज्जलमपि परमेश्वरेण सर्वत्राऽयत्नलभ्यं प्रदत्तम्। जलं प्रथमं भेषजं सर्वरोगेभ्यः। अन्यानि भेषजान्यपि जलेनैव प्रभावजनकानि भवन्ति[७]। जलस्याऽमृतं नाम रोगनिवारकत्वात्। अत उक्तम् अप्स्वमृतं भवति[८]। विविधानां जलानां गुणा

---

१. मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्।
ऋ० १०।१६१।१, अथर्व० ३।११।१।

२. हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी।
अनामयित्नुभ्यां त्वा ताभ्यां त्वोपस्पृशामसि॥
ऋ० १०।१३७।७, अथर्व० ४।१३।७।

३. अयं मे हस्तो भगवानयं मे भगवत्तरः।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः॥
ऋ० १०।६०।१२। अथर्व० ४।१३।६।

४. क्षेत्रियात् त्वा निर्ऋत्या जामिशंसाद् द्रुहो मुञ्चामि वरुणस्य पाशात्।
अनागसं ब्रह्मणा त्वा कृणोमि शिवे ते द्यावापृथिवी उभे स्ताम्॥
अथर्व० २।१०।१।
तमाहरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय। ऋ० ३।११।२।

५. अनुसूर्यमुदयतां हृद्योतो हरिमा च ते। ऋ० १।२२।१।
हृद्रोगं मम सूर्य हरिमाणं च नाशय।
ऋ० १।५०।११, द्र० अथर्व० २।८।१।

६. विश्वा अग्नेऽप दह···प्रनिस्वर चातयस्वामीवाम्। ऋ० ७।१।७।

७. आप इद् वा उ भेषजीरापो अमीवचातनीः। अथर्व० ३।७।५।
अपो याचामि भेषजम्। अथर्व० १।५।४।

८. अप्स्वन्तरमृतमप्सु भेषजम्। अथर्व० १।४।४।

अपि विविधास्तेषां हृदयङ्गमं वर्णनमपि दृश्यते । नामभेदाच्च गुणभेदः । सामुद्रम् , दिव्यम् , मरुभवं, कूपस्थं, वार्षिकम् , नादेयम् मेघस्थञ्चेत्येवमादीनि[१] । जलेनेर्ष्याक्रोधादीनामपि शमनं भवति[२] ।

( ख ) ओषधेरुत्पत्तिः—

ओषद् दहत् पीडयन्तं रोगं धयन्ति पिबन्तीत्योषधयः । ताः कल्पादावेव जाता यथा च—तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधय इति[३] । ओषधिरिति पदेन पृथिव्यन्तर्गतानां लौहसुवर्णताम्रादिधातूनां पारदसदृशरसानामन्येषाञ्च खनिजानां गन्धगैरिकप्रभृतीनां शिलाजत्वादिद्रव्याणामपि ग्रहणं भवति । सृष्टेरादितोऽद्य यावदोषधयः शाश्वताः सन्ति । तासां सप्तोत्तरशतं जन्मानि यद्वा यानि मनुष्यदेहस्य सप्तोत्तरशतं मर्माणि तान्योषधीनां प्रयोगस्थानानि[४] ।

( ग ) ओषधिभेदाः—

ता ओषधयो द्विविधाः स्थावरजङ्गमभेदात् । स्थावराश्चतुर्विधाः— वनस्पतयो वृक्षा वीरुध ओषधय इति । तास्वपुष्पाः—अदृश्यपुष्पाः

---

१. समुद्रज्येष्ठाः सलिलस्य मध्यात्'''आपो देवीरिह मामवन्तु ।
ऋ० ७।४९।१ ।
या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः ।
ऋ० ७।४९।२ ।
शं न आपो धन्वन्याः शमु सन्त्वनूप्याः ।
शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः शिवा नः सन्तुवार्षिकीः ।
अथर्व० १।६।४ ।
याः प्रवतो निवत उद्वत उदन्वतीरनुदकाश्च याः ।
ता अस्मभ्यं पयसा पिन्वमानाः शिवा देवीरशिपदा भवन्तु ।
सर्वा नद्यो अशिमिदा भवन्तु ।। ऋ० ७।५०।४ ।।

२. अग्नेरिवास्य दहतो दावस्य दहतः पृथक् ।
एतामेतस्येर्ष्यामुद्नाग्निमिव शमय ।। अथर्व० ७।४५।२ ।

३. तैत्तिरीयोपनिषदि २।१ ।

४. या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ।। ऋ० १०।९७।१ ।
द्र० शत० ब्रा० ७।२।४।२६ ।

फलवन्तो वनस्पतयः, पुष्पफलवन्तो वृक्षाः, प्रतानवत्यः स्तम्बिन्यश्च वीरुधः, फलपाकनिष्ठा ओषधय इति[1]।

ताश्चित्रविचित्रवर्णाः पिङ्गलाः शुक्रा लोहिता पृश्निमत्यः श्यामाः कृष्णाश्च भवन्ति[2]। तासामाकृतयोऽपि विविधाः, प्रस्तारवत्यः स्तम्बिन्य एकशुङ्गमत्यः प्रतानवत्यः प्रभावत्यः काण्डिन्यः विविधशाखामत्यश्च[3]। ताः सर्वा अस्मत् कल्याणाय वर्तन्ते[4]।

**( घ ) ओषधिगुणाः—**

काश्चिदायुषो वर्धयित्र्यः काश्चिच्च क्षतान् रोहयित्र्यो हानिरहिता जीवनमुन्नेत्र्यो भवन्ति[5]। उष्णशीतभेदेनापि भिद्यन्ते। या अग्नेर्गुणं धारयन्ति ता उष्णवीर्याः, याश्चापो गर्भं धारयन्ति ताः शीतवीर्या भवन्ति। काश्चिच्छीता उदकात्मना शैवालादिषु भवाः सौम्या अपराश्चाग्नेयत्वात् तीक्ष्णशृङ्ग्यो भवन्ति[6]। काश्चित् विषं घ्नन्ति, काश्चित् बलासं नाशयन्ति काश्चिच्च दुष्टपुरुषैः कृतानभिचारकृत्यादीनपाकुर्वन्ति[7]। एता उपयुज्यमाना देहमुष्णं शीतं वा कुर्वन्ति। याः प्रतिवर्षं

---

१. ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः। ऋ० १०।९७।३।
याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः। ऋ० १०।९७।१५।

२. या बभ्रवो याश्च शुक्रा रोहिणीरुत पृश्नयः।
असिक्नी कृष्णा ओषधीः सर्वा अच्छा वदामसि॥ अथर्व० ८।७।१।

३. प्रस्तृणती स्तम्बिनीरेकशुङ्गाः प्रतन्वतीरोषधीरावदामि।
अंशुमतीः काण्डिनीर्या विशाखा ह्वयामि ते वीरुधो वैश्वदेवीरुग्राः पुरुषजीवनीः॥ अथर्व० ८।७।४।

४. पुष्पवतीः प्रसूमतीः फलिनीरफला उत।
संमातर इव दुह्रामस्मा अरिष्टतातये॥ अथर्व० ८।७।२७।

५. जीवलां न घारिषां जीवन्तीमोषधीमहम्।
अरुन्धतीमुन्नयन्तीं पुष्पां मधुमतीमिह हुवेऽस्मा अरिष्टतातये॥
अथर्व० ८।७।६।

६. अवकोल्वा उदकात्मान ओषधयः।
व्यृषन्तु दुरितं तीक्ष्णशृङ्ग्यः॥ अथर्व० ८।७।९।

७. उन्मुञ्चतीर्विवरुणा उग्रा या विषदूषिणीः।
अथो बलासनाशनीः कृत्याः दूषणीश्च यास्ता इहायन्त्वोषधिः।
अथर्व० ८।७।१०।

पुनः पुनर्नवा जायन्ते ताः पुनर्नवापदेनोच्यन्ते[१]। एताः सर्वा दुरित-मपाकुर्वन्ति।

सर्वत्रौषधय उपलभ्यन्ते। येन सर्वे सर्वत्र स्वस्वदेशे वसन्तस्ताभ्य आरोग्यं लभेरन्। अत एव लोक उक्तिरियं विश्रुता—'यस्य देशस्य यो जन्तुस्तज्जं तस्यौषधं हितम्'। तथाप्योषधीनां प्रधानं प्राप्तिस्थानम् हिमवान् नगाधिराज आयुर्वेदतन्त्रेषु प्रतिपादितः[२]। भेषजवेदे पर्वतेषु समेषु चोभयोः स्थानयो रोहन्त्य ओषधयः शिवाः प्रतिपादिताः[३]।

**( ङ ) ओषधिचयनम्—**

अश्वत्थो वृक्षेषु, दर्भस्तृणेषु, वीरुधां सोमो राजा,[४] अमृतेषूदकं, द्रवेषु घृतं, जङ्गमेषु व्रीहिर्यवश्चान्नेषु, अश्विनौ दिवस्पुत्रेषु सूर्यचन्द्रादिषु "अश्विनौ वै देवानां भिषजौ" श्रेष्ठतमाविति[५] महोषधिवर्गो भेषजवेदे संगृहीतः। मधु श्लेष्मपित्तप्रशमनानां, सर्पिर्वातपित्त-प्रशमनानां, तैलं वातश्लेष्मप्रशमनानां श्रेष्ठतममित्योषधीनां प्राधान्य-मात्रेयसंहितायां सङ्गृहीतं विस्तरभिया न लिख्यते[६]।

ता ओषधयो वन्यचारिभिर्गोपालैस्तापसैर्मूलाहारिभिर्व्याधा-दिभिर्वा मार्गणीयानि[७]। तथैव पशुपक्षिसरीसृपप्रभृतिभिरपि भेषजानि विज्ञातव्यानि। ते सहजबुद्धया ज्ञात्वा हितकराण्यदन्ति। तद्यथा वराहो बलवर्धकानि कन्दानि खनित्वा भक्षयति नकुलश्च सर्पविष-प्रणाशिनीमोषधिं वेत्ति। सर्पा बिलेशया वा दीर्घायुष्करीमोषधिं

---

१. अग्नेर्घासो अपां गर्भो या रोहन्ति पुनर्णवाः। अथर्व० ८।७।८।

२. ओषधीनां परां भूमिर्हिमवान् शैलसत्तमः।
तस्मात् फलानि तज्जानि ग्राहयेत् कालजानि तु॥
चरके चिकित्सास्थाने अभयामलकीयरसायनपादे अ० १।३७।

३. या रोहन्त्याङ्गिरसीः पर्वतेषु समेषु च।
ता नः पयस्वतीः शिवा ओषधीः सन्तु शं हृदे॥ अथर्व० ८।७।१७।

४. सोम ओषधीनामधिराजः। गो० ब्रा० उत्तरगोपथ १।१७।
सोमो वै अकृष्टपच्यस्य राजा। तै० ब्रा० १।६।१।११, ३।६।१७।

५. अश्वत्थो दर्भो वीरुधां सोमो राजामृतं हविः।
व्रीहिर्यवश्च भेषजौ दिवस्पुत्रावमर्त्यौ॥ अथर्व० ८।७।२०।

६. चरके सूत्रस्थाने २५।३८।

७. द्र० सुश्रुते सूत्रस्थाने ३६।१०।

विदन्ति[1]। अतो ये येविहंगमा मृगाश्च या या विषनाशयित्रीर्दूरदृष्टि-कारिणीः स्फूर्तिदायिनीरोषधीर्विदन्ति तास्ताः सर्वास्तेभ्यो ज्ञातव्या विज्ञाय च रक्षणादिषु योज्याः[2]। तथैव ग्राम्यपशुभ्यो गोभ्योऽजाभ्योऽविभ्यश्चोषधयो विज्ञातव्याः[3]। कुशला भिषजो यावतीरोषधीर्विदन्ति तावती रोगोपचारेषु योजयन्ति[4]।

**( च ) ओषधिसेवनविधि :—**

वेदेऽमृतस्यौषधेर्बलं पुरुषं पाययितव्यमित्युपदिश्यते[5]। आयुर्वेद-दृष्टचा बलशब्देनोषधेः सारः स्वरसः कषायो वा ग्रहीतुं शक्यते। कासाञ्चिदोषधीनां वटी प्रयुज्यमाना व्याघ्र इव रोगान् हन्ति[6]।

**( छ ) ओषधिनिघण्टु :—**

स्थालीपुलाकनयेन भेषजवेदात् कासाञ्चिदोषधीनां रोगनिवारकत्वं प्रस्तूयते—शंखभस्मना सदैवोदरशूलदाहादिश्चिकित्स्यते[7]। दर्भेणेर्ष्या-क्रोधादिमानसरोगाः प्रणश्यन्ति[8]। मुञ्जेनास्रावरोगस्तस्य मुञ्जस्य शीतवीर्यत्वात्[9]। अपामार्गेण स्वाभाविके क्षुधातृषे रोगे हन्येते[10]।

---

१. वराहो वेद वीरुधं नकुलो वेद भेषजीम्।
सर्पा गन्धर्वा या विदुस्ता अस्मा अवसे हुवे ।। अथर्व० ८।७।२३।

२. याः सुपर्णा आङ्गिरसीर्दिव्या या रघटो विदुः।
वयांसि हंसा या विदुर्याश्च सर्वे पतत्रिणः।
मृगा या विदुरोषधीस्ता अस्मा अवसे हुवे ।। अथर्व० ८।७।२४।

३. यावतीनामोषधीनां गावः प्राश्नन्त्यघ्न्या यावतीनामजावयः।
तावतीस्तुभ्यमोषधीः शर्म यच्छन्त्वाभृताः ।। अथर्व० ८।७।२५।

४. यावतीषु मनुष्या भेषजं भिषजो विदुः।
तावतीर्विश्वभेषजीराभरामसि त्वामभि ।। अथर्व० ८।७।२६।

५. तस्यामृतस्येमं बलं पुरुषं पाययामसि। अथर्व० ८।७।२२।

६ वैयाघ्रो मणिर्वीरुधां त्रायमाणोऽभिशस्तिपाः।
अमीवाः सर्वा रक्षांस्यप हन्त्वधिदूरमस्मत् ।। अथर्व० ८।७।१४।

७. शङ्खेनामीवाममतिं शङ्खेनोतसदान्वाः।
शङ्खो नो विश्वभेषजः कृशनः पात्वंहसः ।। अथर्व० ४।१०।३।

८. अयं दर्भो विमन्युकः स्वाय चारणाय च।
मन्योर्विमन्युकस्यायं मन्युशमन उच्यते ।। अथर्व० ६।४३।१।

९. एवारोगं चास्रावं चान्तस्तिष्ठतु मुञ्ज इत्। अथर्व० १।२।४।

१०. क्षुधामारं तृष्णामारमगोतामनपत्यताम्।
अपामार्ग त्वया वयं सर्वं तदपमृज्महे ।। अथर्व० ४।१७।६–७।

अपामार्गस्योपयोगो योगिवराणां दैर्घ्यकालनैरन्तर्यपरमेश्वरोपासनायै क्रियते येन मध्ये क्षुत्पिपासादिवेगा नोदीरिता भवेयुः। कुष्ठो ज्वर-कासयक्ष्मादीञ्जयति[१]। पिप्पली प्रभूतविद्धव्रणस्य गभीरवेदनामपाक-रोति, दीर्घायुष्करी च भवति[२]। अतः पिप्पलीभी रसायनकल्पादि प्रयोगाः क्रियन्तेऽद्यतनीयैर्भिषग्वरैरपि। कासाञ्चिदोषधीनां नामानि भेषजवेदादुद्ध्रियन्ते दिग्दर्शनार्थम्—

| | | | |
|---|---|---|---|
| असिक्नी | नीलिनी | किलासः | अथर्व० १।२३।१-३। |
| रजनी | हरिद्रा | किलासः | अथर्व० १।२३।१। |
| आसुरी | सोमराजी (?) | किलासः | अथर्व० १।२४।१। |
| श्यामा | नीलिनी | किलासः | अथर्व० १।२४।४। |
| उपजीका | वम्रयः | आस्रावः | अथर्व० २।३।४। |
| बभ्रुः | सोमः | क्षेत्रियरोगः | अथर्व० २।८।३। |
| अर्जुनकाष्ठः | अर्जुनः | क्षेत्रियरोगः | अथर्व० २।८।३। |
| तिलाः | तिलमञ्जर्यः | क्षेत्रियरोगः | अथर्व० २।८।३। |
| पृश्निपर्णी | पृश्निपर्णी | कण्वरोगः | अथर्व० २।२५।१। |
| पाटा | पाठा | बलवर्धनार्थम् | अथर्व० २।२७।४। |
| ऋषभः | ऋषभकः | अपुत्रत्वम् | अथर्व० ३।२३।४। |
| वृषा | कपिकच्छुः | वाजीकरणम् | अथर्व० ४।४।२। |
| रोहिणी | रोहिणीः | अस्थिभग्नम् | अथर्व० ४।१२।१। |
| भद्रः | कृष्णसारिवा | क्षतम् पिच्चितव्रणम् | अथर्व० ४।१२।२। |
| अपामार्गः | अपामार्गः | भस्मकः | अथर्व० ४।१७।६,७। |
| अजश्रृङ्गी | अजश्रृङ्गी | कृमिरोगः | अथर्व० ४।३७।२। |
| गुल्गुलुः | गुग्गुलुः | कृमिरोगः | अथर्व० ४।३७।३। |
| पीला | पिप्पली | कृमिरोगः | अथर्व० ४।३७।३। |
| नलदी | जटामांसी | कृमिरोगः | अथर्व० ४।३७।३। |
| औक्षगन्धी | बला | कृमिरोगः | अथर्व० ४।३७।३। |
| प्रमन्दनी | धातकी | कृमिरोगः | अथर्व० ४।३७।३। |
| कुष्ठः | कुष्ठम् | शिरोनेत्ररोगः | अथर्व० ५।४।१०। |
| सिलाची | लाक्षा | व्रणम् | अथर्व० ५।५।१। |

१. उत्तमो नाम कुष्ठास्युत्तमो नाम ते पिता।
यक्ष्मं च सर्वं नाशय तक्मानं चारसं कृधि॥ अथर्व० ५।४।९।

२. पिप्पली क्षिप्तभेषज्य तातिविद्धभेषजी।
तां देवाः समकल्पयन्नियं जीवितवा अलम्॥ अथर्व० ६।१०९।१।

| | | | |
|---|---|---|---|
| प्लक्षः | प्लक्षः | ग्राही | अथर्व० ५।५।५। |
| अश्वत्थः | अश्वत्थः | ग्राही | अथर्व० ५।५।५। |
| खदिरः | खदिरः | ग्राही | अथर्व० ५।५।५। |
| धवः | धवः | गाही | अथर्व० ५।५।५। |
| न्यग्रोधः | न्यग्रोधः | ग्राही | अथर्व० ५।५।५। |
| पर्णः | पलाशः | ग्राही | अथर्व० ५।५।५। |
| अरुन्धती | लाक्षा | ग्राही | अथर्व० ५।५।५। |
| ताबुवम् | कटुतुम्बी | सर्पविषः | अथर्व० ५।१३।१०। |
| तस्तुवम् | कटुतुम्बी | सर्पविषः | अथर्व० ५।१३।११। |
| शूद्रा | प्रियङ्गुः | तक्मा | अथर्व० ५।२२।७ |
| गन्धारी | शठी | तक्मा | अथर्व० ५।२२।१४। |
| मूजवान् | सोमः | तक्मा | अथर्व० ५।२२।१४। |
| अङ्गम् | बोलः | तक्मा | अथर्व० ५।२२।१४। |
| मगधः | पिप्पली | तक्मा | अथर्व० ५।२२।१४। |
| शमी | शमी | पुत्रदाता | अथर्व० ६।११।१। |
| वाका | अगस्त्यः | अपची गण्डमाला | अथर्व० ६।२५।१। |
| केशवर्धनीः | भृङ्गराजः | केशवर्धनी दृहंणी च | अथर्व० ६।२१।३। |
| विषाणः | मृगविषाणम् | विषूची | अथर्व० ३।७।१। |
| अर्कः | अर्कः | क्लैब्यम् | अथर्व० ६।७२।१। |
| विश्वरूपा | अगरः | पशुरोगः | अथर्व० ६।५९।३। |
| सुभगा | शालपर्णी | पशुरोगः | अथर्व० ६।५९।३। |
| जीवला | सैंहपिप्पली | पशुरोगः | अथर्व० ६।५९।३। |
| चीपद्रुः | सरलः | लसीकाग्रन्थिशोथः | अथर्व० ६।१२७।२। |
| नितत्नि | सौराष्ट्रमृत्तिका | केश्या | अथर्व० ६।१३६।१। |
| कल्याणी | माषपर्णी | वाजीकरणम् | अथर्व० ६।१३९।३। |
| जीवन्ती | जीवन्ती | वयःस्थापकः | अथर्व० ८।२।६। |
| बजम् | अभ्रकम् | कृमिरोगः | अथर्व० ८।६।३। |
| पिङ्गः | हरितालः | कृमिरोगः | अथर्व० ८।६।६। |
| कुमारिका | बन्ध्याकर्कोटकी | सर्पविषः | अथर्व० १०।४।१४। |
| अपराजितः | अपराजिता | सर्पवृश्चिकविषः | अथर्व० १०।४।१५। |
| इन्द्रः | इन्द्रवारुणी | सर्पविषः | अथर्व० १०।४।१६। |
| मेहिः | अतिविषा | सर्पविषः | अथर्व० १०।४।१६। |
| पर्जन्या | दारुहरिद्रा | सर्पविषः | अथर्व० १०।४।१६। |

**( ज ) रोगचिकित्सा—**

निदानवर्जनमेव चिकित्सा भवति । विशेषतस्तु त्रिधातूनां वातपित्तश्लेष्मणां समीकरणमेवारोग्यविधानम् । विविधानां रोगाणां प्रतीकारो यथायोग्येन भेषजेन कर्तव्यः । यथोच्यते जलोदरो वरुणप्रकोपाज्जायते[1] तथैवोन्मादः पुराकृतदुष्कर्मणैनसा चोत्पद्यते भेषजेन चापि तस्य प्रतीकारः सम्भवति[2] । खालित्यस्य पालित्यस्य च चिकित्सा केश्यौषधीभी रसायनादिभिश्च भवति[3] । सपत्नीबाधनस्य वीरुधरूपं भेषजं भवति[4] । सुखप्रसवाय प्रसवोपाया वर्तितव्याः[5] । अस्थिभङ्गे पङ्गुत्वनिवारणार्थं शल्यचिकित्सा करणीया कदाचिल्लौहकाष्ठादिभिर्निर्मितानि कृत्रिमाङ्गान्यापि करणीयनि[6] । मूत्ररोधे शलाकाप्रवेशेन मूत्रं निःस्सारणीयम्[7] ।

**( झ ) स्वस्थवृत्तम्—**

आयुर्वेदे विस्तरशः स्वस्थवृतं समुपलभ्यते तेषाञ्च वेदेषु तस्य बीजमनुमीयते तद्यथा—व्याधेः समुच्छ्रयात् प्रागेव धीमता तथा कर्तव्यं येन व्याधिदुःखवर्जनं सुखञ्च स्यात् । व्याधेः कारणानि त्रिदोषप्रकोपणादीनि भवन्ति । तेषां प्रकोपणहेतुर्मिथ्याहारविहारः । स

---

१. अयं देवानामसुरो विराजति वशा हि सत्या वरुणस्य राज्ञः ।
ततस्परि ब्रह्मणा शाशदान उग्रस्य मन्योरुदिमं नयामि ॥
अथर्व० १।१०।१ ।

२. दैवेनसावुन्मदितमुन्मत्तं रक्षसस्परि ।
कृणोमि विद्वान् भेषजं यदानुन्मदितोऽसति ॥अथर्व० ६।१११।३ ।

३. केशा नडा इव वर्धन्तां शीर्ष्णस्ते असिताः परि । अथर्व० ६।१३७।३ ।

४. इमां खनाम्योषधिं वीरुधां बलवत्तमाम् ।
यया सपत्नीं बाधते यया संविन्दते पतिम् ॥ ऋ० १०।१४५।१ ।

५. यथा वातो यथा वनं यथा समुद्र एजति ।
एवा त्वं दशमास्य सहावेहि जरायुणा ॥ ऋ० ५।७८।८ ।

६. सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ।
ऋ० १।११६।१५ ।

आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुः ।
ऋ० १।११७।१७ ।

७. प्र ते भिनद्मि मेहनं वर्त्रं वेशन्त्या इव ।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ अथर्व० १।३।७ ।

त्याज्य एव। कालजानां दोषप्रकोपणकारणानां यथाकालं निर्हरणं कर्तव्यम्। वसन्ते श्लेष्माणं शरदि पित्तं वर्षासु च वायुं निर्हरेत्[1]। अपरश्च व्याधीनां हेतुः प्रज्ञापराधोऽपि भवति। तन्निवारणाय सद्वृत्तं पालनीयं सदाचरणीयञ्च[2]।

**( ञ ) जनपदोध्वंसप्रतीकारः—**

एकेनैव व्याधिना युगपदसमानप्रकृत्याहारदेहबलसत्त्वसात्म्यवयसां परिषङ्गः जनपदोध्वंसपदेनोच्यते[3]। जनपदोध्वंसकराणां रोगाणां मूलमधर्मस्तेन देशकालानिलानां वैगुण्यमुपजायते[4]। तदधर्मवर्जनेन सत्यदयादानसद्वृत्तानुवर्तनेनायुषः परिपालनं भवितुमर्हति। भेषजेनोपपाद्यमानेन च तेभ्योऽभयं जायते। वरेण्यधर्मस्य धारणेन शतायुषं राष्ट्रे च शौर्यबलौजसादयो भवन्ति[5]। मर्त्याः शुभाचरणेनाकालमृत्युं जयन्त्यमृतत्वञ्चाप्नुवन्ति[6]। ते धर्मात्मानो न कदापि नश्यन्ति[7]। अधार्मिका ब्रह्मद्वेषिणोऽधर्मेण द्युलोकस्थान् सूर्यचन्द्रमसौ वायुजलकणादीन् विकृत्याभिसन्तापयन्ति जनान्[8]। यदि पाप्मा अस्मान् न

---

१. हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत्।
   वर्षासु शमयेद् वायुं प्राग्विकारसमुच्छ्रयात्॥ सुश्रुते सूत्रस्थाने ६।३८।

२. नरो हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः।
   दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः॥
   मतिर्वचः कर्म सुखानुबन्धं सत्वं विधेयं विशदा च बुद्धिः।
   ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नानुतपन्ति रोगाः॥
   चरके शारीरस्थाने २।४६,४७।

३. द्र० चरके विमानस्थाने ३।५।

४. द्र० चरके विमानस्थाने ३।२४।

५. इमं बिभर्मि वरणमायुष्मान्छतशारदः।
   स मे राष्ट्रं च क्षत्रं च पशूनोजश्च मे दधत्॥ अथर्व० १०।३।१२।

६. अघशंसदुःशंसाभ्यां करेणानुकरेण च।
   यक्ष्मं च सर्वं तेनेतो मृत्युं च निरजामसि॥ अथर्व० १२।२।२।

७. मर्त्योऽयममृतत्वमेति। अथर्व० १८।४।३७।
   अमृता वयम्। व्यहं सर्वेण पाप्मना वियक्ष्मेण समायुषा।
   अथर्व० ३।३१।११।

८. ब्रह्म वा यो निन्दिषत्......ब्रह्मद्विषं द्यौरभिसन्तपाति।
   अथर्व० २।१२।६।

जहाति तदाऽस्माभिरेव स त्याज्यो भवति[1]। एवं सूर्यस्य वायुजल-कालादीनामवैगुण्येनैव मर्त्यः सर्वमायुर्व्यश्नुते[2]।

भवन्ति चात्र—

आरोग्यचर्चा प्रथमं क्रमेण शरीरयन्त्रं पुरुषार्थसिद्धिः।
शारीरशास्त्रं विविधाङ्गयुक्तं क्रियाविकारा विविधाः प्रदिष्टाः ॥१॥

काले ह्यकाले च जनस्य मृत्योर्विवेचनं रोगनिदानमुक्तम्।
वातादिदोषाः कृमयो विषश्च नामानि लिङ्गान्यथ भेषजानि ॥२॥

स्वस्थस्य वृत्तं प्रतिपाद्य सर्वं सामूहिकार्थं जनताहितार्थम्।
रोगप्रतीकारमुपायमुक्त्वा वेदात् प्रसिद्धा निखिला चिकित्सा ॥३॥

---

१. यो नः पाप्मन् जहासि तमु त्वा जहिमो वयम्। अथर्व० ६।२६।२।

२. इन्द्र जीव सूर्यं जीव देवा जीवा जीव्यासमहम्।
सर्वमायुर्जीव्यासम् ॥ अथर्व० १९।७०।१।

# ४. शैक्षणिकमधिकरणम्

## ( १ ) विद्यास्वरूपात्मकं वृत्तम्

( क ) **शिक्षास्वरूपम्—**

'शिक्ष विद्योपादाने' इति धातोर्भावे घञ् प्रत्यये स्त्रीप्रत्यये च 'शिक्षा' इत्येतत् पदं निष्पद्यते। साऽधिगमाध्ययनज्ञानाभिग्रहणस्याकाङ्क्षायां प्रयुज्यते। या शिक्षा सैव विद्या। विद्ययैव धर्मो ज्ञायते। धर्मं ज्ञात्वैव पुरुषार्थचतुष्टयस्य सिद्धिः। चतुर्षु वर्णेषु बुद्धिप्रधानत्वात् ब्राह्मणा एव श्रेष्ठतमाः। अथ चापि शरीरबलाद् बुद्धिबलमेव गरीयः। तच्च विद्ययैव साध्यते। चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति। आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेन चेति[1]। अयमेव श्रवणमनननिदिध्यासनसाक्षात्कारश्चेतिचतुर्विधः।

तेन विद्याध्ययनेनैव च वाक् संस्कृता जायते। संस्कृता धारिता वागेव च पुरुषं समलङ्करोति। शिक्षितया वाचैव सर्वे मनोरथाः सिध्यन्ति! विद्याध्ययनेन शिक्षिता जाता सा वाक् त्रिविधा। ज्ञानप्रकाशिकोपदेशाख्या ब्राह्मणैः, मही महती ज्येष्ठा कुतर्केण ह्यखण्डनीया सर्वसुखा नीतिः क्षत्रियैः, इडा पठनपाठनप्रेरिका धनधान्यवतीभूमिप्रापयित्री वैश्यैश्चेति त्रिविधा देव्यः सुखप्राप्त्यर्थं मनुष्यैः स्वीकार्या येनाऽविद्यानाशो विद्याज्योतिश्च प्रकाशेत[2]।

एवं सर्वैर्मनुष्यैर्विद्याभाषणाभ्यां युक्ता क्रियाकुशला सर्वोपकारिणी वाक् सदैव सम्भावनीया[3]। नराः सुप्रशस्तया वाचा प्रज्ञया च सूर्यवत् सुप्रकाशिता भूत्वा जगति कल्याणकरा भवितुं प्रभवन्ति[4]। शिक्षितया

---

१. महाभाष्यम् १।१।१।

२. द्र० दयानन्दभाष्यम्। इळा-सरस्वती मही तिस्रो देवीर्मयोभुवः।
बर्हिः सीदन्त्वस्रिधः॥ ऋ० १।१३।९।

३. पावका नः सरस्वती वाजेभिर्वाजिनीवती०। ऋ० १।३।१०।

४. आ भारती भारतीभिः सजोषा इळा देवीर्मनुष्येभिरग्निः।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवी र्बहिरेदं सदन्तु॥
ऋ० ७।२।८।

प्रज्ञयैव गृहाश्रमसुखं प्रवर्द्धते[1]। सा वाक् नित्योपयोगेषु व्यवहारेषु सर्वदा सर्वैः घृत इव स्निग्धा सुमधुरा च प्रयोक्तव्या[2]। यथा नद्यः सिन्धुमलङ्कुर्वन्ति तथैव विद्याविनययुक्ता वाचो नरान् सुशोभयन्ते[3]। यथा प्रजाजनाः शिक्षिता स्युस्तथैव राजा राजपुरुषाश्च सुसंस्कृताभिर्विद्यायुक्ताभिः सत्यभाषणोज्ज्वलिताभिर्मधुराभिर्वाग्भिः प्रजापालनादीन् व्यवहारान् सततं साध्नुयुः[4]। अधीनस्थेभ्यः कर्मकरेभ्यो भृतिभरेभ्यः श्रमिकेभ्यो दासेभ्यश्चापि कोमलगुणयुक्ता वाक् प्रयोक्तव्या[5]। सा वाक् वधूरिव संरक्षणीया सम्भजनीया च[6]। एवं सुशिक्षिता वाक् सदैव मधुरा भवति। ततः सुशिक्षितजनस्य जिह्वाग्रे जिह्वामूले च माधुर्यमुपजायते[7]।

**( ख ) शिक्षाया अपरिहार्यत्वम्—**

अतो विद्याध्ययनं सर्वैरपरिहार्यरूपेणाङ्गीकर्तव्यम्। स्वापत्यानि शैशव एव प्रशिक्षयितुं गुरवे समर्पणीयानि। ये न समर्पयेयुस्ते राज्ञा दण्डनीयाः[8] स्युर्येन सर्वे जनाः शिक्षिता ब्रह्मचारिणश्च स्युः। यदा राजैतादृशं नियमं प्रकल्पयति तदैव तस्य प्रजाजनाः सर्वे सुसंस्कृता जायन्ते। यथा कुमारा विद्यामधीयीरन् तथा कुमार्योपि बहुविज्ञान-

---

१. प्र सू महे सुशरणाय मेधां गिरं भरे नव्यसीं जायमानाम्।
ऋ० ५।४२।१३।

२. घृतात् स्वादीयो मधुनश्च वोचत। ऋ० ८।२४।२०।

३. तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे।
त्वां गिरः सिन्धुमिवावनी०। ऋ० ५।११।५।
विरप्शिने वज्रिणे शंतमानि वचांस्यासा स्थविराय तक्षम।
ऋ० ६।३२।१।

४. या ते काकुत्सुकृता वरिष्ठा यया शश्वत्पिबसि मध्व ऊर्मिम्।
ऋ० ६।४१।२।

५. अमर्त्यं चिद्दासं मन्यमानमवाभिनदुक्थैर्वावृधानाः। ऋ० २।११।२।

६. तां जुषस्व गिरं मम वाजयन्तीमवाधियम्।
वधूयुरिव योषणम्॥ ऋ० ३।६२।८॥

७. जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम्। अथर्व० १।३४।२।

८. द्र० दयानन्दभाष्यम्। यः शश्वतो अदाशुषो गयस्य प्रयन्तासि सुष्वितराय वेदः। ऋ० ७।१९।१।

यतीनां विदुषीणां सकाशात् विद्यामधीत्य विद्यासुशिक्षायुक्ता भवन्तु[1]। ता एव विद्यासुशिक्षायुक्ता नार्यो धन्या याः कुमारीः शिक्षयन्ति[2]। एवं विद्वांसः कुमारान् विदुष्यश्च कुमारीः ब्रह्मचर्येण सुशिक्षया शिक्षयेयुः।

अविद्ययैव सर्वाणि दुःखान्याविर्भवन्ति विद्यया च तिरोभवन्ति। सैवाविद्या प्रज्ञापराधपदेनोक्ता। तस्य प्रज्ञापराधस्य प्रस्तारभेदात्—१३८२४६६५ भेदा भवन्ति[3]। विद्वांसो विद्यया सुखदुःखरूपलोकव्यवहारे समा जायन्ते। अविद्वांसश्चाज्ञा विद्याहीना भूत्वा कौलिका हालिका भवन्ति। एवं दैहिकश्रमेण कृच्छ्रमाजीविकामर्जयन्ति[4]। तस्या अविद्याया नाशो विद्याध्यनेन जायते।

विद्याध्ययनकाले च गुरुः शिष्यमुपनीय सर्वप्रथममक्षरज्ञानमेव शिक्षयति। ततः प्रसङ्गप्राप्तमक्षरविज्ञानमेव प्रथमं निरूप्यते।

### (ग) अक्षरज्ञानम्—

सर्वविधसुखाय विद्याध्येतव्येति नात्र विप्रतिपत्तिः। तदर्थं पूर्वं तावदक्षराभ्यासः करणीयः। अक्षरं न क्षरति न क्षीयते वाक् क्षयो भवति वाचोऽक्ष इति वा[5]। यन्न सञ्चलति न वा प्रणश्यति, वाचो निवासो यत्र तदक्षरमित्युच्यते। अक्षराण्येव वर्णपदेनाभिधीयन्ते। यदा नादो वक्त्रमुपेत्य मुखे कण्ठतालुमूर्धदन्तौष्ठादिषु स्थानेषु प्रविभज्यते तदा स वर्णत्वमापद्यते[6]। यद्यप्यनन्तपारं किल शब्दशास्त्रम्। तथा चोक्तं पतञ्जलिमुनिना—महान् शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा विभिन्ना

---

१. अम्बितमे नदीतमे देवितमे सरस्वति।
अप्रशस्ता इव स्मसि॥ ऋ० २।४१।१३।
इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति। ऋ० २।४१।१८।

२. द्र० ऋ० ६।४८।१२।

३. द्र० चरके शारीरस्थाने १।६८–१०९।

४. इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः।
त इमे वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः॥
ऋ० १०।७१।९।

५. नि० १३।१२।

६. पाणिनीय शिक्षा पृ० १।

एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं, नवधाथर्वणो वेदो वाकोवाक्यमितिहासाः पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः[1]। तथाप्येकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति, इति[2]। चत्वारो वेदा विषयवस्तुदिशा त्रयीविद्येति नाम्ना व्यवह्रियन्ते। चतुर्णां वेदानां सारश्चतुर्विंशत्यक्षरा गायत्री श्रूयते। गायत्र्याः सारस्तिस्रो महाव्याहृतयः। तिस्रो महाव्याहृतयोऽप्येकस्मिन्नोङ्कारेऽन्तर्भाव्यन्ते। तस्यौङ्कारस्यैकाक्षरस्यैवायं सर्वः प्रपञ्चः। तदक्षरं ब्रह्म शब्दब्रह्म वोच्यते[3]।

यथा लोके दृश्यमानः प्रपञ्चोऽयं परब्रह्मण एव तथा शब्दशास्त्रे शब्दब्रह्मणोऽकारवर्णस्यैवायं प्रपञ्चः। यथा परब्रह्म विज्ञाय निखिलं जगद्विज्ञातं भवति तथाऽक्षरं विज्ञाय निखिलं शब्दशास्त्रं विज्ञातं भवति। अतोऽक्षरज्ञाने प्रयतितव्यम्।

### ( घ ) शब्दस्वरूपम्—

शब्दानां तेषामर्थानां तज्जन्यप्रत्ययानाञ्च परस्परमध्यासाद् यदा शब्दार्थप्रत्ययानां सङ्करो भवति तदा तेषां प्रविभागे युगपद् धारणाध्यानसमाधिभिः सर्वभूतध्वनीनां ज्ञानं जायते[4]। कल्पादौ ब्रह्मणा सर्वध्वनीनामर्था ज्ञानञ्चर्षिभ्यः कृपया प्रदत्तम्। अखिलभाषामूलभूतानामजादिस्वराणां कवर्गादिव्यञ्जनानाञ्चादिमो नादो विश्वगगनमण्डलं प्रतिध्वनयन् ऋग्वेदीयश्रुतित[5] एव प्रससार सर्वतः प्राक्। अस्यां हि श्रुतौ प्रधानानां स्वराणां प्रमुखव्यञ्जनानाञ्चोपदेश ऐदम्प्राथम्येनाऽऽदिगुरुणा कृतः। तथाहि 'अग्नि' इत्यत्र अ, इ, ईडे

---

१. महाभाष्ये पस्पशाह्निके १।१।

२. महाभाष्ये पस्पशाह्निके प्रदीपव्याख्यायां १।१।

३. द्वे ब्रह्मणि हि मन्तव्ये शब्दब्रह्म परञ्च यत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ त्रिपुरोपनिषत्।
तमक्षरं ब्रह्म परं पवित्रं गुहाशयं सम्यगुशन्ति विप्राः।
स श्रेयसा चाभ्युदयेन चैव सम्यक् प्रयुक्तः पुरुषं युनक्ति ॥
पाणिनीयशिक्षा पृ० १।

४. द्र० योगसूत्रम् ३।१७।

५. अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम् ॥ ऋ० १।१।१।

इत्यत्र दीर्घ ईकारः, एकारश्च, 'पुरोहितम्' इत्यत्र उकारः, ओकारश्च, 'ऋत्विजम्' इत्यत्र ऋकारस्योपदेशः। तदिदं स्वरोपदेशो दिङ्मात्रम्। एवमेव व्यञ्जनानाम्। वर्गाणां तृतीयस्याक्षरस्य कोमलत्वं मधुरत्वं वा सर्वत्र सुप्रथितं सङ्गीताचार्यैश्चाप्यङ्गीकृतम्। तदेवं कुचुटुतुपुमध्य-पतितानां तृतीयाक्षराणां ग, ज, ड, द, ब इत्येतेषामुपदेशोप्यस्यामेवर्चि प्रव्यक्तमवलोक्यते।

साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य मन्त्रान्सम्प्रादुः[1]। निदर्शनार्थम्—

कः कमनीयो भवति सुखो भवति क्रमणीयो वा तद्यथा कः कमनो क्रमणो वा सुखो वा इति[2]। गकारमनक्तेर्वा दहतेर्वा[3]। सत्यपदे तानि ह वा एतानि त्रीण्यक्षराणि सत्तियम् इति। तद् यत् 'सत्' तदमृतमथ यत् 'ति' तन्मर्त्यमथ यत् 'यम्' तेनोभे यच्छति[4] नियामयति।

भर्ग इत्यस्यार्थः—'भ' इति भासयतीमाँल्लोकान्। 'र' इति रञ्जयतीमाँल्लोकान् 'ग' इति गमयतीमाँल्लोकान्[5]। मख इत्येतद्यज्ञनामधेयं छिद्रप्रतिषेधसामर्थ्यात्। छिद्रं खमित्युक्तम् तस्य मेति प्रतिषेधः। मा यज्ञे छिद्रं करिष्यतीति[6]। नाकम् 'कम्' इति सुखनाम तत् प्रतिषिद्धं प्रतिषिध्येत[7]।

अ = प्रतिषेधः। आ = सम्यक्। ई = गतौ। उ = अथ, तथा। ऋ = गतौ। ऌ = गतौ। क = सुखम्। ख = आकाशः। ग = गतौ। च = पुनः। ज = उत्पत्तौ। झ = नाशः। त = पारम्। थ = स्थितौ। दा = दाने। धा = धारणे। न = निषेधे। पा = रक्षणे। भा = भासने। मा = माने। य = यः। रा = दाने। वा = गतौ। स = सह। ह = निश्चये॥ तथैव यास्केनापि वर्णानामर्था व्याख्याताः[8]। एवं प्रत्येकस्य वर्णस्य स्वकीयोऽर्थः।

---

१. द्र० नि० १।२०।
२. नि० १०।२२।
३. नि० ७।१४।
४. छान्दोग्योपनिषत् ८।३।५।
५. गो० ब्रा०।
६. गो० ब्रा० २।२।५।
७. नि० २।१४।
८. नि० १।३–५।

वर्णास्त्रिषष्टिश्चतुः षष्टिर्वा[1] सर्वत्र प्रथितास्तथापि तेषु सप्तदशैव मुख्याः। यत आम्नाये अक्षराणां सप्तदश देवता एव कीर्तिताः[2]। 'अ इ उ ऋ ऌ' इत्येताः केवलमाभ्यन्तरप्रयत्नेनैवोच्चार्यन्ते। एते स्वयं राजन्त इति स्वराः[3]। "क ग च ज ट ड त द प ब" एते स्थान-प्रयत्नाभ्यामुच्चार्यन्त इति व्यञ्जनाः। एतेषां स्वराणां व्यञ्जनानाञ्च स्थानानि क्रमेण कण्ठतालुमूर्धदन्तौष्ठा आभ्यन्तरतो बाह्याश्च विद्यन्ते[4]। अनुस्वारविसर्गौ च स्वरव्यञ्जनानां मध्यस्थौ। एते सप्तदशवर्णा एव। अवशिष्टास्त्वेतेषां संयोगेनैव जायन्ते। तद्यथा—अ+इ=ए। अ+उ=ओ। अ+ऋ=र। अ+ऌ=ल। वर्गाणां प्रथमतृतीयाभ्यां हकारयोगेन द्वितीयचतुर्थाक्षरे जायेते। यथा क+ह्=ख। ग+ह्=घ इत्येवं सर्वत्र योजनीयम्। स्वराणामुच्चारणा-वसरे कालमात्राभेदेन १, २, ३ मात्राभिः ह्रस्वदीर्घप्लुतभेदेन द्वाविंशतिस्वरा भवन्ति। ञ म ङ ण न ँ ँ इत्येते वर्गाक्षरैः—सहाऽनुस्वारयोगेनानुनासिका वर्णा भवन्ति। ह श ष स इत्येते च विसर्जनीययोगेन जायन्ते। एतेषां चतुर्णां स्थानमपि मुखे पूर्ववत्क्रमेणा-भ्यन्तरतो बाह्यपर्यन्तं भवति। अकारेण सह हकारयुक्त विसर्जनीयो भवति। विसर्गेणैव सकारो जायते[5]। स एव टवर्गेण षकारश्चवर्गेण च शकारो भवति[6]। इकारेण अकारयोगे य, उकारेण अकारयोगे व,[7] ऋकारेण अकारयोगे र, ऌकारेण अकारयोगे ल भवति। एष त्रिषष्टिवर्णानामुत्पत्तिक्रमः[8]। एतत् सप्तदशानां वर्णानां प्रस्तार-मात्रम्। सप्तदशवर्णाश्चापि अकारवर्णस्यैव प्रस्तारमात्रम्। अतः अकारस्यार्थाः—अखिलं, सर्वं, पूर्णं, व्यापकः, अव्ययः अखण्डो वा। अयं स्वकीयप्राधान्येनाऽपरेषां वर्णानामभावमपि दर्शयति ततोऽभावः शून्यो वाप्यकारस्यैवार्थौ। यथाऽकारवर्णस्य स्वकीयोऽर्थस्तथाऽन्येषां वर्णानामपि तदत्र निदर्श्यते—

---

१. पाणिनीयशिक्षा सूत्र ३। आपिशलि शिक्षा ४।
२. यजु० ६।३१-३४।
३. महाभाष्यम्। पा० १।२।२६।
४. द्र० वर्णोच्चारणशिक्षा।
५. विसर्जनीयस्य सः। पा० ८।३।३४।
६. स्तोःश्चुना श्चुः। पा० ८।४।४०। ष्टुना ष्टुः। पा० ८।४।४१।
७. इकोयणचि। पा० ६।१।७७।
८. पाणिनीय शिक्षा प्रथमप्रकरणम्।

इ—मतुप्प्रत्ययार्थः, गतिः,[1] अन्तिकम्[2]।
ए (अ+इ)—गत्याभावः, निश्चलम्, पूर्णम्, अव्ययः।
उ—उपरि, दूरम्,[3] असौ, तथा च, विनिग्रह[4] इत्येवमादयः।
ओ (अ+उ)—नान्यः, नापरः, तदेव।
ऋ—सत्यम्, गतिः,[5] बहिः।
ऌ—सत्यम्, गतिः, अन्तः।
ञ, म, ङ, ण, न, ँ—न, अभावः, संकोचः, निषेधः[6]।
क—बन्धनम्[7], बलवान्, बृहत्, प्रभावशाली, सुखम्[8]।
ख—आकाशः, अन्तरिक्षम्, अवकाशः, विवृतः, छिद्रम्[9]।
ग—गमनम्[10], अपाकरणम्, स्थानत्यागः, विप्रयोगः[11]।
घ—रोधः[12], स्थितिः, ऐकाग्र्यम्।
च—पुनः, पश्चात्, अनु, अपरः, अन्यः, भिन्नः, अपूर्णः अङ्गहीनः,

---

१. ई गतौ (भ्वादि०), ई० गतिव्याप्तिप्रजननकान्त्यसनखादनेषु (अ०)
२. इतः।
३. उतः।
४. द्र० नि० १।५।
५. ऋ गतिप्रापणयोः (भ्वा०), ऋ० गतौ (जु०), ऋ गतौ (दि०)।
६. मा इति प्रतिषेधः। नेति निषेधः।
७. कील बन्धने (भ्वा०), कच बन्धने (भ्वा०), कच काचि दीप्तिबन्धनयोः (भ्वा०), कथ वाक्यप्रबन्धे (चु०), कुथ संश्लेषणे (चु०), कुश कुस संश्लेषणे (दि०), कूण कून संश्लेषणे (चु०), कुच संकोचने (तु०)।
८. कड कडि मदे (भ्वा०), केला विलासे (रु०), कुर्द क्रीडायाम् (भ्वा०), क्रीडृ विहारे (भ्वा०), कित निवासे रोगापनयने च (भ्वा० चु०)।
९. खड खडि भेदने (चु०), खनु अवदारणे (भ्वा०) खुडि खण्डने (चु०)।
१०. गम्लृ गतौ (भ्वा०), गाङ् गतौ (भ्वा०) गूरी हिंसागत्योः (दि०)।
११. गु गू पुरीषोत्सर्गे (तु०)।
१२. घट संघाते (चु०), घुट घुड प्रतिघाते (तु०), घिणि घुणि घृणि ग्रहणे (भ्वा०)।

खण्डः,[१] समुच्चयः[२] ।

छ—छाया, आच्छादनम् , छत्रम् , परिच्छदः, अखण्ड[३] इत्यादयः ।

ज—प्रादुर्भावः, जनित्वम्[४], उत्पत्तिः, नवत्वम् , गतिः[५] ।

झ—नाशः[६] ।

ट—मध्यमः, साधारणः, निर्बलः, संकोचः, इच्छाविरुद्धः[७] ।

ठ—निश्चयः,[८] प्रगल्भता, पूर्णता ।

ड—निश्चितः, निश्चलः,[९] धारितः,[१०] चेतनः ।

ढ—ढुण्ढनम्[११] ।

त—तलभागः,[१२] अधः, इतः, आधारः,अवारः, तटः, अन्तभागः[१३] ।

थ—स्थितिः,[१४] आधेयः, उपरि, उतः, पारः ।

द—गतिः,[१५] दानम्[१६], अल्पोभावः ।

---

१. चट भेदने ( चु० ), चुट छेदने ( भ्वा० तु० ) ।

२. नि० १।४ । द्र० यजु० १८।२४ ।

३. छद संवरणे ( चु० ), छदि संवरणे ( चु० ), छुड संवरणे ( चु० ), छद अपवारणे ( चु० ) ।

४. जनी प्रादुर्भावे । ( दि० ) ।
जन जनने । ( जु० ) ।

५. जुङ् ज्युङ् गतौ (भ्वा०), जुड गतौ बन्धने च (तु०), जुन गतौ (तु०)।

६. झॄ वयोहानौ ( क्र्० ) झॄष् वयोहानौ ( दि० ) झष हिंसार्थः (भ्वा०)
झर्झहिंसापरिभाषणतर्जनादिषु ( भ्वा० तु० ) ।

७. टकि बन्धने ( चु० ) ।

८. ष्ठा० गतिनिवृत्तौ ( भ्वा० ), ष्ठल स्थाने ( भ्वा० ) ।

९. डप डिप संघाते ( चु० ) ।

१०. स्थुड संवरणे ( तु० ) ।

११. ढुढि अन्वेषणे ( भ्वा० ) ।

१२. तल प्रतिष्ठायाम् ( चु० ) ।

१३. तीर कर्मसमाप्तौ ( चु० ) ।

१४. ष्ठा ( स्था ) गतिनिवृत्तौ ( भ्वा० ) ।

१५. टुदु गतौ ( भ्वा० ), दक्षगतिहिंसनयाः । ( भ्वा० ) ।

१६. दद दाने ( भ्वा० ), डुदाञ् दाने ( जु० ), दाण् दाने ( भ्वा० ), दायृ दाने ( भ्वा० ), दासृ दाश्रृ दाने ( भ्वा० ) ।
दाति प्रियाणि चिद्वसु । ऋ० ४।८।३ ।

ध—अदानम् , धारणम्[1] ।
न—निषेधः, उपमार्थो वा[2] ।
प—रक्षणम्[3], वर्धनम्[4], पोषणम्[5], पवित्रीकरणम्[6] ।
फ—अनावरणम् , स्फुटनम्[7] ।
ब—प्रवेशः,[8] तिरोहणम्[9], समागमनम्[10] ।
भ—प्रकटीकरणम्[11], व्यक्तम्[12], बहिः, प्रकाशः[13] ।
म—प्रतिषेधः[14] ।

---

१. डुधाञ् धारणपोषणयोः ( जु० ), धि० धारणे ( तु० ), धृञ् धारणे ( भ्वा० ), धीङ् आधारे ( दि० ) धृङ् अवस्थाने ( तु० ) ।

२. नक नाशने ( चु० ), णश अदर्शने ( दि० ) ।
नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्याये च । नि० १।४ ।

३. पा रक्षणे ( भ्वा० ), पल पाल रक्षणे ( चु० ) ।

४. पुंसः अभिवर्धने ( चु० ), पूष वृद्धौ ( भ्वा० ), ओप्यायी वृद्धौ ( भ्वा० ), प्यैङ् वृद्धौ ( भ्वा० ), पीव स्थौल्ये ( भ्वा० ), पूर्ण संघाते ( चु० ), पूल संघाते ( भ्वा० चु० ), पोथृ पर्याप्तौ (भ्वा०) ।

५. पुष पुष्टौ ( भ्वा० ), पूरी आप्यायने ( दि० ), प्रीङ् प्रीणने (दि०), प्रीञ् तर्पणे कान्तौ च ( क्र० ), प्रा पूरणे ( अ० ), पर्व पुर्व पूरणे ( भ्वा० ), पृ पॄ पालनपूरणयोः ( अ० ), पृ पॄ पूरणे ( चु० ) ।

६. पूङ् पवने ( भ्वा० ), पूञ् पवने ( क्र० ), पल्पूल लवनपवनयोः ( चु० ) ।

७. ञिफला विशरणे ( भ्वा० ), फुल्ल विकसने ( भ्वा० ) ।

८. बुल निमज्जने ( चु० ) ।

९. विल संवरणे ( रु० ) ।

१०. बध बन्धने ( भ्वा० ), बन्ध बन्धने ( क्र० ) ।

११. भाज पृथक्कर्मणि ( चु० ) ।

१२. भजि भासार्थः भाषार्थो वा ( चु० ), भृशि: भासार्थः भाषार्थो वा ( चु० ), भाष व्यक्तायां वाचि ( भ्वा० ) ।

१३. भा दीप्तौ ( अ० ) भासृ दीप्तौ ( भ्वा० ), भ्रेजृदीप्तौ ( भ्वा० ), टुभ्राजृ, डुभ्राशृ टुभ्लाशृ दीप्तौ ( भ्वा० ) ।

१४. मन स्तम्भे ( चु० ), मा माङ् माने ( अ० जु० ) । द्र० नि० १।५ ।

य—पूर्णगतिः,[1] यत्, भिन्नवस्तु ।
र—दानम्,[2] रमणम्[3] ।
ल—आदानम्,[4] रमणम्[5] ।
व—अन्यः,[6] पूर्णभिन्नः,[7] अथवा, गतिः,[8] गन्धः, विचारणा[9] ।

---

१. यभ मैथुने ( भ्वा० ), यम उपरमे ( भ्वा० ), युज समाधौ ( दि० ), युज संयमने ( चु० ), युजिर् योगे ( त० ), युञ् बन्धने ( क्र० ), यौटृ यौडृ बन्धने ( भ्वा० ) ।

२. रा दाने ( अ० ), रासति दानकर्मा निघ० ३।२० । ऋ० ६।४६।८ ।

३. रख रखि रग रगि गत्यर्थाः ( भ्वा० ), रघि गत्यर्थः ( भ्वा० ), रण गत्यर्थः ( भ्वा० ), रय् गतौ ( भ्वा० ), रवि गत्यर्थः, रहि गतौ ( भ्वा० ), रि गतौ ( तु० ), रिख गत्यर्थः ( भ्वा० ), रिगि गत्यर्थः ( भ्वा० ), रिवि गत्यर्थः ( भ्वा० ), रुठि गतौ ( भ्वा० ), रेपृ गतौ ( भ्वा ), रेवृ प्लवगतौ ( भ्वा० ), रञ्ज रागे ( भ्वा०, दि० ), रभ राभस्ये ( भ्वा० ), रुच दीप्तावभिप्रीतौ च ( भ्वा० ) ।

४. ला आदाने ( अ० ) ।

५. लगे संगे ( भ्वा० ), लल ईप्सायाम् ( चु० ), लल विलासे (भ्वा०) लड विलासे ( भ्वा० ) । ओलस्जी व्रीडायाम् ( तु० ), लस श्लेषण-क्रीडनयोः ( भ्वा० ), लुट लुठ संश्लेषणे ( तु ), लख लखि लगि लिगि गत्यर्थाः ( भ्वा० ) आलिङ्गति । लघि गतौ ( भ्वा० ) ।

६. वट वटि विभाजने ( चु० ), वडि विभाजने ( भ्वा० ), वठि वडि विभाजने ( चु० ), वृङ् संभक्तौ ( क्र० ), युष दाहे विभागे च ( दि० ) ।

७. वर्ध छेदनपूरणयोः ( चु० ), ओव्रश्चू छेदने ( तु० ), विचिर पृथग्भावे ( रु० ), विजिर् पृथग्भावे ( जु० ) ।

८. वकि कौटिल्ये गतौ च ( भ्वा० ), वख वखि वगि गत्यर्थाः (भ्वा०), वघि गत्याक्षेपे ( भ्वा० ), वज व्रज गतौ ( भ्वा० ), वञ्चु गत्यर्थः ( भ्वा० ), वभ्र गत्यर्थः ( भ्वा० ), वय गतौ (भ्वा०), वलगु गत्यर्थः ( भ्वा० ), वस्क गत्यर्थः ( भ्वा० ), वेणृ वेनृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ( भ्वा० ), वेलृ वेल्ल चलने ( भ्वा० ), वी गति-व्याप्तिप्रजनकान्त्यसनखादनेषु ( अ० ), वेवीङ् वेतिना तुल्ये ( अ० ), वा गतिगन्धनयोः ( अ० ), व्यथभयसञ्चलनयोः (भ्वा०), व्यय गतौ ( भ्वा० ), विच्छ् गतौ (त०), ओविजीभयचलनयोः ( त० ), वज मार्गसंस्कारगत्योः ( चु० ), वात सुखसेवनयोः गतौ च ( चु० ), वरण गतौ ( क्र० ) ।                ९ द्र० नि० १।४ ।

ष—ज्ञानम्[1] ।
श—प्रकाशः[2] ।
स—सह[3], शब्दः[4], तत् ।
ह—वाक्[5] । विनिग्रहार्थीयः[6] ।

---

१. ष्वस्क गत्यर्थः । ( भ्वा० ) ।

२. शुभ दीप्तौ ( भ्वा० ), शुभ शुम्भ शोभार्थे ( तु० ), शीक भासार्थः भाषार्थो वा ( चु० ), शच व्यक्तायां वाचि ( भ्वा० ), शुभ शुम्भ भाषणे हिंसायाञ्च ( भ्वा० ), शल्भ कत्थने ( भ्वा० ), शीभृ कत्थने ( भ्वा० ), श्लाघृ कत्थने ( भ्वा० ), शम आलोचने ( चु० ), शंसु स्तुतौ ( भ्वा० ), शठ श्लाघायाम् ( चु० ), शाडृ श्लाघायाम् ( भ्वा० ), शोणृ वर्णगत्योः ( भ्वा० ), श्विता वर्णे ( भ्वा० ), श्विदि श्वैत्ये ( भ्वा० ) ।

३. समित्येकीभावे । नि० १।३ ।
षम्ब सम्बन्धने ( चु० ), साम्ब सम्बन्धने ( चु० ), षिञ्बन्धने ( स्वा० ), स्कभि प्रतिबन्धे ( भ्वा० ), स्कम्भु स्तम्भु प्रतिबन्धे ( पा० सौत्रः ३।१।८२ ), ष्टभि प्रतिबन्धे ( भ्वा० ), षगे संवरणे ( भ्वा० ), ष्टगे संवरणे ( भ्वा० ), स्थगे संवरणे ( भ्वा० ), स्थुड संवरणे ( तु० ), स्फुड संवरणे ( तु० ), षच समवाये ( भ्वा० ), षप समवाये ( भ्वा० ), स्तृञ् आच्छादने (भ्वा०), स्तॄञ् आच्छादने ( क्र० ), स्पश स्पर्श ग्रहणसंश्लेषणयोः ( चु० ), सूत्र वेष्टने विमोचने च ( चु० ), स्पृश संस्पर्शने ( तु० ), सम्बर संभरणे ( क्र० ), षर्ज अर्जने ( भ्वा० ), षिल उञ्छे ( तु० ), स्कुञ् आप्रवणे ( क्र० ), ष्टक प्रतिघाते ( भ्वा० ), ष्टुभु स्तम्भे ( भ्वा० ), ष्टचै वेष्टने ( भ्वा० ), ष्वञ्ज परिष्वङ्गे ( भ्वा० ) । सजूः, साकम् , सार्द्धम् ।

४. ष्टन शब्दे ( भ्वा० ), ष्टन देवशब्दे ( चु० ), स्वन शब्दे ( भ्वा० ), स्यमु शब्दे ( भ्वा० ), स्वृ शब्दोपतापयोः ( भ्वा० ), ञिष्विदा अव्यक्ते शब्दे ( भ्वा० ), ष्टचै शब्दसंघातयोः ( भ्वा० ), स्वर आक्षेपे ( चु० ) सुभ सुम्भभाषणे हिंसायाञ्च । ( भ्वा० ) ।

५. ह्लप ह्लप व्यक्तायां वाचि ( चु० ), ह्लस ह्लप शब्दे ( भ्वा० ), ह्वेञ् स्पर्धायां शब्दे च ( भ्वा० ) ।

६. नि० १।५ ।

क्ष—बन्धज्ञानम्, अज्ञानम्, निर्जीवः, नाशः[1], मृत्युः[2]।

त्र—अधः पर्यन्तम्, दानम्, सर्वस्वदानम्[3], अखिलम् समग्रम्।

ज्ञ—अजन्मा, नित्यः, कर्म, ज्ञानम्[4]।

अक्षराणां योगेन बहवो भावा प्रादुर्भवन्ति। अनेकाक्षराणां धातूनां बहवोऽर्था भवन्ति[1]। यथा ईडस्तुतौ इत्यत्र चोदनार्थोऽपि गृह्यते। इमे धातवो वैज्ञानिकाः स्वाभाविकाश्च सन्ति। एवमेव प्रत्यया विभक्ति-लिङ्गवचननिदर्शकाः अव्यया उपसर्गा निपाताश्चापि वर्णार्थं द्योतयन्ति। निदर्शनानि चात्रोदाह्रियन्ते—

भग्—भ = प्रकाशः, ग = गतिः। अर्थात् गतिमान् प्रकाश = ऐश्वर्यम्।

आप्—आ = समन्तात्, प = रक्षणम्। अर्थात् सर्वतो रक्षकः = व्यापकः।

णश्—ण प्रतिषेधः, श = प्रकाशः। अर्थात् प्रकाशप्रतिषेधः। अदर्शनम्।

अद्—अ अभावः, द = दानम् अर्थात् दानाऽभावः, धारणम् उदरे निक्षेपः = भक्षणम्।

भू—भ = प्रकाशः, ऊ = दूरपर्यन्तम्। अर्थात् दूरपर्यन्तं प्रकाशः सदैव व्यक्तम्, नित्यं विद्यमानम् = सत्ता।

आप्लृ—आ = समन्तात्, प = रक्षणम्, लृ = अन्तर्गतिः अर्थात् सर्वतोऽन्तर्रक्षितः = व्याप्तिः।

चर्—च = पुनः पुनः, र = बहिर्गतिः अर्थात् पुनः पुनः बहिर्गतिः = चरणम्।

मर्—म = प्रतिषेधे, र = रमणम् अर्थात् रमणाऽभावः, क्रियाऽभावः। अस्तित्वप्रतिषेधः = मरणम्।

हु—ह = अभावः, उ = दुरपर्यन्तम् अर्थात् दूरपर्यन्तमभावः, सर्वथानाशः = दानम्, दहनम्।

मखः—म = प्रतिषेधे, ख = छिद्रम् अर्थात् त्रुटिहीनता, त्रुटिहीनम् श्रेष्ठतमं कर्म = यज्ञः।

---

१. क्षि क्षये ( भ्वा० )।

२. क्षि हिंसायाम् ( भ्वा० ), क्षण क्षिणु हिंसायाम् ( त० ) क्षदभक्षण-हिंसनयोः ( भ्वा० ) क्षीञ् हिंसायाम्। ( भ्वा० )।

३. त्रैङ् पालने ( भ्वा० )।

४. ज्ञप अवबोधनमारणतोषणनिशामनेषु (चु०), ज्ञा अवबोधने (क्र०)।

हन्—ह = निश्चयः, न = प्रतिषेधे अर्थात् निश्चयेन प्रतिषेधः, सर्वथाऽभावः = हिंसा ।

यज्—इ = गतिः, अ = पूर्णः, ज = प्रादुर्भावः, उत्पत्तिः अर्थात् पूर्णगतिरुत्पादनम् = देवपूजा, संगतिकरणम्, दानम् ।

अस्य संधिविज्ञानस्य द्वावाधारौ वर्णमैत्री मुखसुखञ्च । समस्थानवत्सु वर्णेषु मैत्री भवति । रेफेण + स = ष । ऋकारेण सह + स = ष । यथा—कष्टम्, रुष्टः, पुष्टः, ऋषिः, वर्षा, वृषः । चकारेण सह स = श । यथा—पश्चात्, निश्चितः, पुनश्च । वर्गाणां वर्णाः स्वकीयेनैवानुनासिकेन सह संयुञ्जन्ति यथा—गङ्गा, चञ्चलः, पण्डितः, दन्ताः, शम्भुः । येषां वर्णानां स्वकीया अनुनासिका न सन्ति तेऽनुस्वारेण सहैव युञ्जन्ति यथा—संसारः, वंशः, हंसः ।

सुखोच्चारणार्थं यथा—सच्चरित्रम्, बृहज्जातकम्, सदिच्छा । वर्गस्य तृतीयाक्षरं हकारयोगेन चतुर्थाक्षरं भवति यथा बृहद् + हवनः = बृहद्धवनः । अग्नि + आधानम् = अग्न्याधानम् । मनः + कामना = मनस्कामना । अतएव महर्षिकणादेनोपदिष्टं वैशेषिकसूत्रे "बुद्धिपूर्वा वाक्यकृतिर्वेदे" ।*

### ( ङ ) वेदस्वरूपम् :—

अथर्ववेदस्यैकादशतमे काण्डे वर्णितं यत्पुरुषदेहे नानाविधा देवाः प्राविशन् तत्रेमे चत्वारो वेदा अप्यनुप्राविशन्[२] । एतेन ज्ञायते पुरुष-सृष्ट्याः सहैव विद्यासृष्टिरपि सम्भूता । य एव वेदास्ता एव विद्याः । विद्यापदेन वेद एव गृह्यते । तत्राम्नायेष्वपि द्विविधा विद्या व्याख्याता पराऽपराभेदात्[३] । या अक्षरं पुरुषं वेदयित्री सा परा । या चानक्षरं नाशवन्तं पदार्थं वेदयित्री साऽपरा । यैहिकस्यामुष्मिकस्य च सुखस्य साधनभूता सा विद्या । सैवाऽभ्युदयनिःश्रेयसप्रापयित्री । सा विद्या धीपदेनापि प्रोच्यते । धिया एव विप्रा जायन्ते[४] । धर्माधर्मौ यद्वेदयति तद्विद्याया विद्यात्वम् । "धर्माधर्मौ त्रय्यामर्थानर्थौ वार्तायां नयापनयौ दण्डनीत्यां, बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति

---

* तु० वैदिकसम्पत्ति अक्षरविज्ञानविषयः ।

१. ६।१।१ ।

२. शरीरं ब्रह्म प्राविशदृचः सामाऽथो यजुः । अथर्व० ११।८।२३ ।

३. द्वे विद्ये वेदितव्ये परा चैवाऽपरा च । मुण्डकोपनिषदि १।१।४ ।

४. धिया विप्रो अजायत । यजु० २६।१५ ।

व्यसनेऽभ्युदये च बुद्धिमवस्थापयति प्रज्ञावाक्यक्रियावैशारद्यञ्च करोति"। एषा वर्णानामाश्रमाणां स्वधर्मेऽवस्थापनादुपकरोति[1]। तादृश्या विद्याया दातारोऽन्नदातृभ्योऽपि भूयः श्लाघ्या भवन्ति[2]। ता विद्या मनुष्यस्थाः सत्यो न कदापि नश्यन्ति। व्यये कृते नित्यं वर्धन्ते। न तस्करास्ताश्चोरयितुं प्रभवन्ति। एवं जन्मजन्मान्तरेष्वपि तिष्ठन्ति[3]। एवं वेदविद्यां पावमानीं योऽध्येति तस्मै सा वेदवाक् सरस्वती सर्वं क्षीरं सर्पिर्मध्वादीन्यैहिकानि निःश्रेयसादीनिपारलौकिकानि च प्रापयति[4]।

विविधविद्याज्ञापनाय वेदानां चत्वारो विभागा विद्यन्ते। तत्र-ऋग्वेदे विज्ञानविषयः परमेश्वरादारभ्य तृणपर्यन्तपदार्थेषु साक्षाद्बोधान्वयत्वात्। यजुर्वेदे विदितगुणानां पदार्थानां सकाशात् क्रियया-ऽनेकविद्योपकारग्रहणाय विधानम्। सामवेदे ज्ञानक्रियाविद्ययोर्दीर्घविचारेण फलावधिपर्यन्तं विद्याविचारः। एवमथर्ववेदे त्रयाणां वेदानां मध्ये यो विद्याफलविचारो विहितोऽस्ति तस्य पूर्तिकरणेन रक्षणोन्नती विहिते[5]। आरोग्यविषयश्च प्रतिपादितः। सर्वा विद्या वेदादेव प्रसृतास्तस्य व्याख्यानरूपा एव। ता एव कालक्रमेण काश्चित् विकृतिरूपेऽपि जाताः। स एव वेदः सर्वसत्यविद्यानां निधानमस्ति यद्यत् किञ्चिद् भूगोलमध्ये पुस्तकान्तरेषु हृदयान्तरेषु वा सत्यविद्याविज्ञानमभूत्, भवति, भविष्यति च तत् सर्वं वेदादेव प्रसृतमिति विज्ञेयम्। साङ्गोपाङ्गेषु वेदेषु चतुर्दश विद्या उपन्यस्ताः। चत्वारो वेदा ऋग्यजुःसामाथर्वाख्याः, षडङ्गानि शिक्षाव्याकरणकल्पनिरुक्तछन्दोज्योतिषाख्यानि षड्दर्शनान्युपनिषदश्चत्वार उपवेदा आयुर्वेद-

---

१. कौ० १।१।१, १।१।२।

२. वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद्ददन्नः।
अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः॥
ऋ० ६।२९।५।

३. न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति।
ऋ० ६।२८।३।

४. पावमानीर्यो अध्येत्यृषिभिः सम्भृतं रसम्।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम्॥
साम० उ० ५।२।८।२, ऋ० ९।६७।३२।

५. द्र० दयानन्दः, ऋ० भा० भू०, पृ० ४१-४२, ३४२।

धनुर्वेदगान्धर्ववेदार्थवेदाख्याश्चतुर्दशविद्या भवन्ति[1]। नैव वेदभिन्न-ग्रन्थाऽध्ययनेन सत्यासत्यविवेको जायते। येनाविद्यायाः परिहारो विद्यायाश्च प्रकाशः सम्भवेत्[2]। स वेदो गुरुमुखाच्छ्रोतव्योऽध्येतव्यश्च[3]।

## ( २ ) शिक्षाविधिवृत्तम्

सा विद्या केन प्रकारेण बालकेभ्यः प्रदेया येन ते सद्यो विद्वांसो भूयासुरिति विचार्यते—

( क ) **शिक्षाप्रणाल्य :—**

साम्प्रतिके युगे यया शिक्षाप्रणाल्या बालकाः शिक्ष्यन्ते तामेव स्वल्पभेदेन शिक्षाशास्त्रिणोऽपि प्रायो मन्यन्ते। तत्र शिक्षकस्याध्यापन-शैल्यामेव बहुधा विभेदः। परन्तु या वैदिकयुगे प्रणाल्यासीत् साऽतः सर्वथा भिन्ना। अद्यत्वे बहवो विश्वविद्यालयास्तदधीना महाविद्यालया विद्यालयाश्च। तत्र विद्यालयेषु प्रधानाध्यापको महाविद्यालयेषु च प्राचार्योऽध्यापकान् व्यवस्थापयति। तेभ्योऽध्यापकेभ्यो नियतकाले नियतविषयानधीयते छात्राः। तत्र च शुल्करूपेण धनमपि प्रयच्छन्ति।

तादृशेषु विविधशिक्षावत्सु महाविद्यालयेष्वधीताश्छात्रा उच्चोपाधिं धारयन्तो लोके मानमासादयन्तोऽपि सर्वकारभृत्यतामेवापेक्षन्ते प्रायशः, न स्वतन्त्रव्यवसायमभिनन्दन्ति। तेषां शिक्षाप्राप्तेरुद्देश्यं सर्वकारभृत्यताप्राप्तिरेव। प्राचीनकाले त्वतो नितरां भिन्नैव शिक्षा-प्रणाल्यासीत्।

पुरा किल नाद्यतनसदृशा विश्वविद्यालया आसन्। अरण्यभवे-ष्वाश्रमेषु मुनयो निःशुल्कं विद्यामध्यापयन्ति स्म। विद्यार्थिनो भिक्षयैव स्वजठरमप्यानुषङ्गिकरूपेण पूरयन्ति स्म। वनेषु निवसन्तो गृहस्था विद्यार्थिभ्यस्तेषां गुरुभ्यश्च भिक्षाप्रदानेनात्मन अहोभाग्यान् धन्यांश्च मन्यन्ते स्म। तादृशेष्वाश्रमेषु धनस्य भूषादिकस्य वा न किञ्चित् स्थानमासीत्। समागते छात्रे गुरवस्तस्य विद्याधिकारित्वं

---

१. द्र० दयानन्दः, ऋ० भा० भू०, पृ० २७२–२७५।

२. योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ मनु० २।१६८।

३. यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति नहि वेद सुकृतस्य पन्थाम्॥
ऋ० १०।७१।६।

परीक्ष्योपनीय विद्यामध्यापयन्ति स्म । प्रत्यहञ्चाधीतविषयस्य परीक्षां कुर्वन्ति स्म । तान् स्वानुशासनेन दोषानुरूपञ्च दण्डप्रदानेनानुशासति स्म । अधीतविद्याश्च्छात्राः स्वगुरवे प्रीत्या दक्षिणां समाहरन्ति स्म । तत्र विद्यात्रयेषु ते धर्मार्थकाममोक्षप्रदां चतुर्विधां विद्यामधीयते स्म । धर्मविद्यया धर्मं, व्यवहारविद्ययाऽऽजीविकां, कामविद्यया ज्येष्ठाश्रमम्, मोक्षविद्यया च परमेश्वरप्राप्तिरूपममृतफलमासादयन्ति स्म । छात्राणामुपाधिस्तेषां गुरुरेव भवति स्म । तेषां विद्या नैकाङ्ग्यासीदपितु सर्वाङ्गीणाऽऽसीत् । न भृत्यता तदा प्रशस्यते स्म । केवलं शूद्रा एव त्रयाणां वर्णानां भृत्यतां कुर्वन्ति स्म ।

तस्याश्च शिक्षाप्रणाल्या भारतस्य प्राचीनसाहित्ये स्वरूपमुपलभ्यते[1], वेदेषु चापि तस्या मूलमभिलक्ष्यते । तदेवाऽत्र यथाशक्यं प्रदर्श्यते ।

पुरुषः शिक्षां विद्यां गृहीत्वैव मनुर्जायते । मातुर्गर्भेण तु जातः पशुरेव भवति[2] । तदस्या विद्यायाश्चत्वार्यधिष्ठानानि । आचार्यः, अन्तेवासी, विद्या, प्रवचनमिति । तेष्वाचार्यः पूर्वरूपमन्तेवासी उत्तररूपम्, विद्या सन्धिः, प्रवचनं सन्धानमित्यधिविद्यम्[3] । यथा राज्यस्य सप्ताङ्गेषु प्रजा एव राज्यस्यालम्बनभूतास्तथैवाचार्यस्य शिष्या एव विद्याध्ययन आधारभूतास्ततोऽत्र पूर्वं शिष्यस्वरूपमेव विचार्यते ।

## ( ख ) शिष्यस्वरूपम् :—

अध्यापने कृतबुद्धिराचार्यः शिष्यमेवादितः परीक्षेत । अधिकारिगुणपरीक्षणे जन्मना वर्णस्य न प्राधान्यं यथा ब्राह्मणाः विद्याधिकारिणस्तथैव शूद्रा निषादा अपि[4] । शूद्रकुलोत्पन्ना अपि विद्याधिकारिगुणसम्पन्ना द्विजाः कार्याः । दासा अप्यार्याः करणीयाः[5] ।

---

१. द्र० कादम्बरी, अगस्त्याश्रमवर्णनम् । जाबाल्याश्रमवर्णनम् ।

२. वितिष्ठन्तां मातुरस्या उपस्थानात् नानारूपाः पशवो जायमानाः ।
अथर्व० १४।२।२६ ।

३. तैत्तिरीयोपनिषदि शिक्षावल्ल्याम् ३ ।

४. यथेमां वाचं कल्याणीमावदानि जनेभ्यः ।
ब्रह्मराजन्याभ्या॰ँ शूद्राय चार्याय च स्वाय चारणाय च ॥
यजु० २६।२ ।

५. यया दासान्यार्याणि वृत्राकरो वज्रिन्त्सुतुका नाहुषाणि ।
ऋ० ६।२२।१० ।

तत्र च शिष्यगुणेषु प्रशान्तमार्यप्रकृतिमक्षुद्रकर्माणमृजुचक्षुर्मुखनासावंशं तनुरक्तविशदजिह्वमविकृतदन्तौष्ठममिन्मिणं धृतिमन्तमनहङ्कृतिं मेधाविनं वितर्कस्मृतिसम्पन्नमुदारसत्वं तद्विद्यवृत्तं तत्त्वाभिनिवेशिनमव्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतवेशमव्यसनिनमर्थतत्त्वभावकमकोपनं शीलशौचाचारानुरागदाक्ष्यप्रादक्षिण्योपपन्नमध्ययनाभिकाममर्थविज्ञाने कर्मदर्शने चानन्यकार्यमलुब्धमनलसं सर्वभूतहितैषिणमाचार्यसर्वानुशिष्टिप्रतिपत्तिकरमनुरक्तमेव गुणसमुदितमध्याप्यमाहुः[१]।

सुगुप्तं रक्ष्यमाणैव विद्या मनुष्येभ्यः सुखप्रदा वीर्यंयुक्ता च भवत्यनधिकारिभ्यः प्रदीयमाना चोभाभ्यां गुरुशिष्याभ्यां निर्वीर्या भवति। उक्तञ्चापि यास्केन—'तस्मान्नानुपसन्नायानिदंविदे वा। नित्यं ह्यविज्ञातुर्विज्ञानेसूयोपसन्नाय तु निर्ब्रूयाद्यो वाऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा''[२]। स चास्मिन् विषयेऽन्येषां वचनमप्युद्धरति। गुरुणाऽध्यापिताः सन्तो ये विप्रा विद्वांसो जाता गुरुं नाभिनन्दन्ति, मनसा वाचा कर्मणा वा यथा हि ते गुरोर्भोजयितारः पालयितारो वा न भवन्ति तथैव तद् गुरोः श्रुतं ज्ञानं तान् न पालयति[३]। तेषाञ्च विद्या मरुभूमौ वृष्टिरिव निष्फला जायते नैव सा दातुः कल्याणाय, अथ चापयशस्करी भवति। तत एव विद्या कमनीयरूपिणी भूत्वा संयतात्मानं विदितसर्ववेदवेदाङ्गं विप्रं विद्वांसमागतवती, आगत्य चावोचत्। यदहं तव सुखनिधिरस्मि तस्मात् त्वं मां त्रायस्व। केन प्रकारेण? यन्निन्दकायानम्रायासंयताय मां नोपदिश, तथा सती खल्वहं वलवती भविष्यामि[४]।

---

१. द्र० चरके विमानस्थाने ८।६।
द्र० याज्ञवल्क्यशिक्षाप्रकीर्णाधिकारे ५।६८–११३।

२. नि० २।३।

३. अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्॥
द्र० नि० २।४।

४. विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्॥
नि० २।४।

अतो यो विद्याग्रहणेच्छुर्भवति तस्मै भव्यायार्द्रचित्तायोदाराय दुष्टगुणकर्मस्वभावहीनाय विद्या प्रदेया[१]। आचार्यैरग्निनेव ब्रह्मचर्यव्रतेन तप्तेभ्यो विद्यार्थिभ्यो जिज्ञासुभ्यः शीतोष्णसुखदुःखहर्षशोकनिन्दास्तुतिद्वन्द्वं सोढृभ्यः सत्याचारिभ्यो वागधिष्ठात्री देवी विद्या देया[२]। दण्डवज्जडबुद्धयो न विद्याप्राप्तिभाजनानि। श्रीमद्भ्यो वसिष्ठेभ्यो धीमद्भ्य एव विद्या देया[३]। येऽशुद्धाहारविहारा लम्पटाः पिशुनाः कुसङ्गिनः सन्ति ते विद्यां नाधिगच्छन्ति ये च पवित्राहारा जितेन्द्रिया यथार्थवक्तारः सत्सङ्गिनः पुरुषार्थिनः सन्ति त एव विद्यासु समुन्नता जायन्ते, यतो विषयासक्तानां हृदयं रेणुकाकूप इव तमोमयं तिष्ठति[४]।

एवं ये विद्याभिलाषिणो हंसा इव स्वाभीष्टं सुदूरमपि स्थानं यान्ति,[५] संयमयुक्तेन हर्षमोहरहितेनान्तःकरणेन च गुरूनभ्युपगच्छन्ति ते गुरुभिः सुशिक्षिताभिर्वाग्भिर्विद्याभिश्च प्रयत्नेनाध्यापनीया एव सन्ति[६]। सः शिष्यो ब्रह्मण आदेशमाचरन् ब्रह्मचारिपदेनोच्यते।[७] स ब्रह्मचर्यतपसा ब्रह्म साक्षात्कुरुते[८]। तपसैव पूर्वसमुद्राद्ब्रह्मचर्याश्रमा-

---

१. द्र० ऋ० १।१२६।६।

२. अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः।

ऋ० ५।४३।७।

३. द्र० दयानन्दभाष्यम्।

दण्डा इवेद् गो अजनास आसन् परिच्छिन्ना भरता अर्भकासः।
अभवच्च पुर एता वसिष्ठ आदित्तृत्सूनां विशो अप्रथन्त॥

ऋ० ७।३३।६।

४. न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुपयन्ति ता अभि।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य विचरन्ति यज्वनः॥

ऋ० ६।२८।४।

५. आहंसासो न स्वसराणि गन्तन मधोर्मदाय मरुतः समन्यवः।

ऋ० २।३४।५।

६. द्र० दयानन्दभाष्यम्—युवां यज्ञैः प्रथमा गोभिरञ्जत ऋतावाना मनसो न प्रयुक्तिषु। भरन्ति वा मन्मना संयता गिरोऽदृप्यता मनसा रेवदाशाथे॥ ऋ० १।१५१।८।

७. ब्रह्मचारीष्णंश्चरति–०। अथर्व० ११।५।१

८. द्र० अथर्व० ११।५।१०।

द्युत्तरसमुद्रं गृहस्थाश्रममाप्नोति[१]। स ज्ञानाम्भसि स्नात एव स्नातको जायते[२]। अहर्निशं विद्याप्राप्त्यर्थमतिशयश्रमतपोहेतुत्वाद् बभ्रुः पिङ्गलश्च जायते। लोके चापि दृश्यते यावदेव दिवाकरो घोरं तपति तावदेव सम्यक् वर्षते। ब्रह्मचर्याश्रमो ग्रीष्मऋतुरूपो गृहाश्रमश्च वर्षारूपः।

एवंविधगुणसम्पन्नश्छात्रो गुरुमुपासेत[३]। यथाऽऽयुर्वेदे चतुष्पादेषु भिषगेव प्रधानत्वेनाम्नातस्तथाऽधिविद्य आचार्यस्यैव प्राधान्यम्। मातृमान् पितृमानाऽऽचार्यवान् पुरुष एव विद्यामधिगच्छति[४]। तत्र चाचार्यः कीदृक्गुणवानुपासनीय इत्यपि विचारणीयः।

**( ग ) आचार्यस्वरूपम् :—**

पर्यवदातश्रुतं दक्षं शुचिं सर्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमुपस्कृतविद्यमनहङ्कृतम् अनसूयकम् अकोपनम् क्लेशक्षमं शिष्यवत्सलं योगिनं ज्ञापनसमर्थमध्यापकमुपासीत[५]। अघायुमरातिं वा नार्चयेत्[६]। ते च गुरवः प्राचार्यसदृशमनूचानं विद्वांसं पृच्छेयुर्वयं कथमध्यापयेम ? स तान् शिक्षयेत, यथैते प्राप्तविद्याः सुशिक्षिता जितेन्द्रिया धार्मिकाः स्युस्तथा भवन्तोऽध्यापयन्तु[७]।

एवं पुरुषस्य द्वे जन्मनी भवतः। शरीरतो विद्यातश्च। तत्र चाचार्यो विद्यातस्तं जनयति तदस्य श्रेष्ठं जन्म भवति। मातापितरौ तु शरीरमेव जनयतः[८]। तौ चास्य ब्रह्मचारिणः पितरावाचार्यं

---

१. द्र० अथर्व० ११।५।६।

२. तानि कल्पद् ब्रह्मचारी सलिलस्य पृष्ठे तपोऽतिष्ठत् तप्यमानः।
समुद्रे स स्नातो बभ्रुः पिङ्गलः पृथिव्यां बहु रोचते॥
अथर्व० ११।५।६

३. उपास्यामसि यो गुरुः। अथर्व० ६।४२।२।

४. शत० ब्रा० १४।६।१०।२।

५. ये देवानां यज्ञिया यज्ञियानाँ मनोर्यजत्रा अमृता ऋतज्ञाः।
ते नो रासन्तामुरुगाय०। ऋ० ७।३५।१५।

६. यो नो अग्ने अररिवाँ अघायुररातीवा मर्चयति द्वयेन।
मन्त्रो गुरुः पुनरस्तु सो अस्मा०। ऋ० १।१४७।४।

७. द्र० दयानन्दभाष्यम्। ऋ० १।१४७।१।

८. आपस्तम्बधर्मसूत्रे १।१।१६–१८।
तु० शत० ब्रा० ११।५।४।१२।

प्रार्थयेते, यदिमं पुष्करस्रजं गर्भरूपं कुमारमाधत्त। येनायं पशुरूपं विहाय पुरुषो भूयात्[१]। पुष्करस्रगिति किम् ? पुष्करपदं जलवाचकम्। मातुर्गर्भे शिशुर्जले निमज्जन् वसति। तत्र च यया प्रणालिकया युक्तः स श्वासप्रश्वासमाहारं वा गृह्णाति सा प्रणाली स्रग्रूपा भवति। आचार्योदरे च ब्रह्मचारी ज्ञानाम्भसि निमज्जन् यज्ञोपवीतस्रजं धारयति। तत उभयत्र स पुष्करस्रगित्युच्यते। ब्रह्मचार्यध्ययनकाम आचार्यमुपैति। स आचार्यश्च मृत्युः, वरुणः, सोमः, ओषधयः पय इति पञ्चसंज्ञाभिराचक्ष्यते[२]।

द्वयोर्जन्मनोर्मध्ये मृत्युर्जायत एव। आचार्यो ब्रह्मचारिणः पितृगृहमोक्षहेतुत्वान्मृत्युरूपः। स पुराकृतं दैवमर्जितसंस्कारांश्च विनिहत्य ज्ञानं प्रयच्छति ततो मृत्युरुच्यते। यदन्तर्यामिरूपेण मनोगतभावान् गूढरहस्यानभिजानाति तदा वरुणो जायते। वरुणोऽपि सर्वेषां निगूढभावानभिजानाति[३]। यदाचार्यो दौर्हृदिनीव शिष्यस्य हृदयगुहाधिष्ठितान् भावान् सहृदयेन जानाति कुपथाच्चापवारयति तदा वरुणरूपो भवति। अन्तेवास्यपि सहृदयमाचार्यं वृणोति। तदा स वेदनानां शमनहेतुत्वाद्ब्रह्मचारिणे ओषधिरूपमवाप्नोति। स एव च सोमरूपः। एवमाचार्यस्य सोमरूपेण तुष्टः पुष्टो ब्रह्मचारी स्वकीयं सर्वस्वमाचार्यायार्पयति तदा गुरुस्तस्मै पयःरूपो जायते। यथा माता शिशुं पयसा पृणाति तथाऽऽचार्यो ज्ञानामृतपयोश्रेणिभिस्तं भूयोभूयः स्नपयति तर्पयति च।

ये वयोवृद्धा ज्ञानवृद्धा अलोलुपा आत्मशक्तिसम्पन्ना अदम्भिता ऋजवो धृतिमन्तः सत्यवाचो वेदाध्ययननिरता दक्षाः सर्वभूतानुकम्पका आस्तिकाः शुचिसम्पन्नाश्च स्युस्त एवाऽऽचार्यपदमलङ्कुर्वन्ति[४]। त एव विनेयेषु ज्ञानमाधातुं समर्था भवन्ति[५]। एवञ्च य आचारं ग्राहयति, आचिनोत्यर्थान्, आचिनोति बुद्धिमिति वा स एवाचार्यः[६]।

---

१. आधत्त पितरं गर्भं कुमारं पुष्करस्रजम्।
यथो ह पुरुषोऽसत्॥ यजु० २।३३।

२. अथर्व० ११।५।१४।

३. द्र० अथर्व० ४।१६।६।

४. तु० वायुपुराणे ५६।२६।

५. द्र० व्यासभाष्यम् योगसूत्रे २।३८।

६. नि० १।२।

गुरुशिष्ययोर्मध्यवर्तिनी सन्धिर्विद्येति प्रतिपादिता । पूर्वोत्तर-रूपाभ्यां विना सन्धिर्न जायते । यथा पूर्वोत्तराक्षरयोर्या सन्धिर्जायते तथैवाचार्याऽन्तेवासिनोर्मध्ये विद्यया सन्धिर्जायते । सन्धिविरहिते देशे नान्तेवासी नैव चाचार्यस्तिष्ठति । एतयोः स्थितिश्च गुरुकुल आश्रमे विद्यालये वा भवति । सन्धिशैथिल्ये विद्याऽऽश्रमधर्मस्यैवाभावो भविष्यति ।

तत एवैवंविधानां गुरूणां ताद्दशशीलोपेताः शिष्या आश्रममासाद-यन्ति तत्र च विद्यामभ्यस्यन्ति, त ओषधयो यथा गदं घ्नन्ति तथाऽ-विद्यानिवारकाः सूर्यवद्धर्मप्रकाशका भूमिवद्विश्वम्भरा भवन्ति[1]। तत्राध्यापकाः शिष्याश्चाहर्निशं विद्यामुपदिशेयुरधीयीरँश्च । दिवा-नक्ताध्ययनेनैव स्वल्पायुषि सर्वा विद्या अधीत्य पूर्णविद्वांसो भवन्ति[2] ।

**( घ ) अनुशासनम्—**

ये शिष्या अधीतविषयं न स्मरेयुः शरारवो वा स्युस्ते गुरुभिर्दण्ड-नीयाः । यथा कुम्भकारः कुम्भं ताडनेन शोभनगुणवन्तं मनोज्ञं रूपवन्तं करोति, तक्षा च तीक्ष्णायुधेन काष्ठं तनूकृत्य गुणवन्तं रथं करोति तथैवाध्यापकाः शिष्यं ताडनेन परिष्कुर्वन्ति[3] । न दण्डनेन विना विद्योन्नतिर्धर्मोन्नतिर्वा सम्भवति । दण्ड एव धर्मपदेनापि प्रोच्यते तत एवानुशास्ति पतञ्जलिः—

"सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः"[4] अतो वेदाध्यापको भ्रुकुटीं वक्रां विधाय यदा प्रचोदयति तदा शिष्याः सभ्या धार्मिका विद्वांसश्च जायन्ते[5] ।

---

१. द्र० दयानन्दभाष्यम् ।
या यो योनिं देवकृतं ससाद क्रत्वा ह्यग्निरमृताँ अतारीत् ।
तमोषधीश्च वनिनश्च गर्भं भूमिश्च विश्वधायसं बिभर्ति ॥
ऋ० ७।४।५ ।

२. शचीभिर्नः शचीवसू दिवानक्तं दशस्यतम् । ऋ० १।१३९।५ ।
त्रिंशद्धामा विराजति वाक् पतङ्गो अशिश्रियत् ।
प्रतिवस्तोरहर्द्युभिः ॥ अथर्व० ६।३१।३ ।

३. धिया रथ न कुलिशः समृण्वति । ऋ० ३।२।१ ।

४. महाभाष्यम् ८।१।८ ।

५. द्र० दयानन्दभाष्यम् ऋ० ४।१।१ ।

गुरवो विद्यार्थिभ्यो निष्कपटतयाऽखिला विद्याः प्रत्यहमध्याप्य परीक्षायै तदधीतं शृणुयुर्यतोऽधीतं विषयं विद्यार्थिनो न विस्मरेयुर्विद्यार्थिनश्च प्रत्यहमधीत्याभ्यस्य विद्यां स्वगुरवे श्रावयेयुर्येन विद्योन्नतिर्भवेत्[1]।

पुरा किल एवमेवाध्ययनाध्यापनक्रमः प्रसृतआसीदयमेव च वैदिकशिक्षाविधिः।

## ( ३ ) विद्याफलात्मकं वृत्तम्

सदाचरणेन सर्वाणि सुखानि जायन्ते तत् सद्वृत्तं विद्ययैव ज्ञायते। सद्वृत्तानुष्ठानमेव विद्यायाः फलत्वेनाम्नायते। तदात्महितं चिकीर्षता सर्वेण सर्वं सर्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम्। तद् ह्यनुतिष्ठन् युगपत् सम्पादयत्यर्थद्वयमारोग्यमिन्द्रियजयञ्च[2]। यदाप्तानामनुकरणं तदेव सदाचारः सद्वृत्तं वा। सर्वदा प्राणिमात्रस्य शं मनसा वाचा कर्मणा वाऽभिलषितव्यम् इत्ययमर्थो वेदेषु बहुश उपदिश्यते[3]। तत्र हि द्विपदे चतुष्पदे च शं प्रार्थ्यते। मात्रे पित्रे गोभ्यः पुरुषेभ्यः समस्ताय जगते वा स्वस्ति काम्यते[4]। तत्र च सद्वृत्तस्यानुष्ठाने कीदृशी दिनचर्या भवितव्या इत्येव तावत्पूर्वं विचार्यते।

**( क ) प्रातर्जागृतिः—**

यदा मनुष्या निद्रास्था भवन्ति तदा न किमपि भोक्तव्यं द्रव्यं

---

१. ओ षू णो अग्ने शृणुहि त्वामीळितो देवेभ्यो ब्रवसि।
यज्ञियेभ्यो राजभ्यो यज्ञियेभ्यः० ऋ० १।१३९।७॥
बोधा मे अस्य वचसो यविष्ठ॰महिष्ठस्य प्रभृतस्य स्वधावः।
ऋ० १।१४७।२।

२. चरके सूत्रस्थाने ८।१८।

३. अस्माकं देवा उभयाय जन्मने शर्म यच्छत द्विपदे शं चतुष्पदे।
अदत् पिबदूर्जयमानमाशितं तदस्मे शंयोररपो दधातन॥
ऋ० १०।३७।११।

४. स्वस्ति मात्र उत पित्रे नो अस्तु स्वस्ति जगते पूरुषेभ्यः।
विश्वं सुभूतं सुविदत्रं नो अस्तु ज्योगेव दृशेम सूर्यम्॥
अथर्व० १।३१।४।
अथ या भद्रा तानि नः प्रजाया अरातिं नयामसि। अथर्व० १।१८।१।
दमे दम सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे।
ऋ० ६।७४।१।

प्राप्तुमर्हन्ति। जागृताः सन्त एव भोक्तुं प्रभवन्ति तत उषःकाले रजन्याश्चतुर्थे याम [1]उद्बुध्याऽऽवश्यककर्मशौचादिभिर्निवर्त्य वाग्यतः दन्तपवनं भक्षयेत्[2]। पुनः प्राक् शुद्धवायुदेशे रथैरश्वैर्वा भ्रमणं कुर्याद्येनारोग्यं बलमानन्द आयुश्च वर्धते[3]।

ब्राह्ममुहूर्ते सदेश्वर उपासनीयः। नैवालस्ये उषसः कालः कदाचिद् वृथा नेयः। यत उषा प्रत्यहं श्येनीव वृकीव चास्माकमायुः कृन्तति[4]। ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी। यादृशा बाल्ये संस्काराः क्रियन्ते तथैव सर्वमायुर्व्यत्येति। एवं यथाप्रातर्ब्राह्ममुहूर्तमेति तथैव सर्वमहः क्षपयति शुभं वाऽशुभं वा। यः सूर्योदयेऽपि शयानो भवति तस्य वर्च उद्यन् सूर्यो हरति[5]। ये चोषसः प्राक् शयनादुत्थाय परमेश्वरं ध्यायन्ति ते द्योमन्तो धार्मिका बलिनश्च जायन्ते[6]। त एव पुष्कलां लक्ष्मीमाप्नुवन्ति दारिद्र्यञ्च व्यपोहन्ते[7]। प्रातर्जागरूका एवान्न-दुग्धादिकं भोग्यं पदार्थजातमश्नुवन्ति[8]।

---

१. आकीं सूर्यस्य रोचनाद् विश्वान् देवाँ उषर्बुधः।
विप्रो होतेह वक्षति॥ ऋ० १।१४।९।

२. याज्ञवल्क्यशिक्षा ३४।

३. आ वां वहिष्ठा इह ते वहन्तु रथा अश्वास उषसो व्युष्टौ।
ऋ० ४।१४।४।

४ पुनः पुनर्जायमाना पुराणी समानं वर्णमभिशुम्भमाना।
श्वघ्नीव कृत्नुर्विज आ मिनाना मर्तस्य देवी जरयन्त्यायुः॥
ऋ० १।९२।१०।

५. उद्यन्त्सूर्य इव सुप्तानां द्विषतां वर्च आददे। अथर्व० ७।१३।२।

६. ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः। ऋ० १।११३।११।
दिदृक्षन्त उषसो यामन्नक्तोर्विवस्वत्या महि चित्रमनीकम्।
विश्वे जानन्ति महिना यदागादिन्द्रस्य कर्म सुकृता पुरूणि॥
ऋ० ३।३०।१३।

यन्मरुतः समरसः स्वर्णरः सूर्य उदितेमदथा दिवो नरः।
न वोऽश्वाः श्रथयन्ताह सिस्रतः सद्यो अस्याध्वनः पारमश्नुथ॥
ऋ० ५।५४।१०।

७. प्रबोधयोषः पृणतो मघोन्यबुध्यमानाः पणयः ससन्तु।
रेवदुच्छ मघवद्भ्यो मघोनि रेवत् स्तोत्रे सूनृते जारयन्ती॥
ऋ० १।१२४।१०।

८. गव्यं यव्यं यन्तो दीर्घाहेषं वरमरुण्यो वरन्त॥ ऋ० १।१४०।१३।

**( ख ) ब्राह्ममुहूर्ते उपासना—**

ये रात्रेश्चतुर्थे यामे स्तुतिप्रार्थनोपासनयेश्वरं शुभगुणानैश्वर्यञ्च याचन्ते ते पुरुषार्थेनैतन्नूनमाप्नुवन्ति[१]। प्रभातकाले सर्वे प्राणिनो हृष्यन्ति[२]। ततः प्रभातकाल एव स्तुतिः कार्या[३]। उषसः प्रागेव च वेदमन्त्रा उच्चार्याः[४]। यः श्रीकामः स्यात् सुप्त एव समस्तलोकेऽ-प्रबुद्धे जुहोति[५]। सन्ध्याञ्चानुतिष्ठति[६]। यः प्रातःकालमारभ्य विद्यां ददाति स श्रीमान् गोमान् हिरण्यवान् दीर्घायुः पुण्यश्लोकश्च जायते[७]। याश्च स्त्रियः स्वपतीन् सूर्योदयात् प्राक् चेतयन्ति सर्वदा विज्ञानञ्च प्रयच्छन्ति ता एव देशकुलभूषणा भवन्ति[८]।

**( ग ) वस्त्रधारणम्—**

मनुष्यैः सदा शोभनैर्वस्त्रैः शरीरमाच्छाद्य साधुवेषेण वर्तितव्यम्। तन्निर्मलाम्बरधारणं काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं, प्रहर्षणं श्रीमत्पारिषदे शस्तं भवति[९]। यज्ञयागादिकर्मकरणे लोकव्यवहारे च

---

१. ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात्।
आयतीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः॥
ऋ० ३।६१।६।

२. विश्वे अस्या व्युषि महिनायाः संयद् गोभिरङ्गिरसो नवन्त।
ऋ० ५।४५।८।

३. तद्वो अद्य मनामहे सूक्तैः सूर उदिते। ऋ० ७।६६।१२।

४. सत्यमन्त्रा अजनयन्नुषासम्। ऋ० ७।७६।४।

५. प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अनुष्टम्।
ऋ० ५।७७।२।

शयाने श्रीकामस्य प्रातः। कातीयश्रौतसूत्रे ४।१५-१६।

६. उष उषो हि वसो अग्रमेषि त्वं यमयोरभवो विभावा।
ऋ० १०।८।४।

७. सुगुरसत् सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति।
यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति॥
ऋ० १।१२५।२।

८. एषा जनं दर्शता बोधयन्ती सुगान् पथः कृण्वती यात्यग्रे।
बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अन्धान्॥
ऋ० ५।८०।२।

९. द्र० चरके सूत्रस्थाने ५।९५।

न कदापि नग्नैर्भाव्यम् प्रत्युत वस्त्रैः शरीरमाच्छाद्य सुखमेधितव्यम्[1]। तानि वस्त्राणि स्थूलानि छिद्ररहितानि दोषहीनानि भाव्यानि[2]। प्रशस्तवस्त्राभरणवेशाः शुभाचारा मनुष्याः प्रशंसनीया भवन्ति[3]। सौम्यं वै वासो भवति[4]। वस्त्रैः शरीरस्याच्छादनाय बृहस्पतिरुपदिदेश[5]। एवं स्वक्षेमाय गवाञ्च परिरक्षणाय वासांसि धारणीयानि[6]। सर्वे पशवो रोमशत्वग्युक्ता अनग्नाः सन्ति। पुरुष एव लोमहीनो नग्नो भवत्यतः क्षतात् त्राणार्थं वस्त्राणि धारणीयान्येव[7]। वस्त्रधारणेन कथं गवां रक्षणमित्याशङ्कायामुपाख्यानमिदं श्रूयते—"अथ वासः परिधत्ते सर्वत्वायैव स्वामेवास्मिन्नेतत्त्वचं दधाति। या ह वा इयं गोस्त्वक् पुरुषे हैषाग्रऽआस। ते देवा अब्रुवन्। गौर्वा इदं सर्वं बिभर्ति हन्त येयं पुरुषे त्वग्गव्येतां दधाम। तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षिष्यन्त इति। तेऽवछाय पुरुषम्। गव्येतां त्वचमदधुस्तयैषा वर्षन्तं हिमं घृणिं तितिक्षते। अवछितो ह वै पुरुषः। तत अस्य यत्रैव क्व च कुशो वा यद्वा विक्रुन्तति तत एव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्वास एव तस्मान्नान्यः पुरुषाद्वासो बिभर्त्येतां ह्यस्मिंस्त्वचमदधुस्तस्मादु सुवासा एव बुभूषेत् स्वया त्वचा समृध्या इति तस्मादप्यश्लीलं सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति। नो हान्ते गौर्नग्नः स्यात्। वेद ह गौरहमस्य त्वचं बिभर्मीति सा बिभ्यती त्रसति त्वचं य आदास्यत इति तस्मादु गावः सुवासमुपैव

---

१. द्र० दयानन्दभाष्यम्। सत्तो होता न ऋत्वियस्तिस्तिरे बर्हिरानुषक्। अयुज्रन् प्रातरद्रयः॥ ऋ० ३।४१।२।

२. युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः। ऋ० १।१५२।१।

३. शुक्रा वसानो अर्षति। ऋ० १।१३५।२।

४. तै० ब्रा० २।२।५२।

५. बृहस्पतिः प्रायच्छद् वास एतत् सोमाय राज्ञे परिधातवा उ। अथर्व० २।१३।२।

६. परीदं वासो अधिथाः स्वस्तयेऽभूर्गृष्टीनामभिशस्तिपा उ। अथर्व० २।१३।३।

७. एषा त्वचां पुरुषे संबभूवानग्नाः सर्वे पशवो ये अन्ये। क्षत्रेणात्मानं परिधापयाथोऽमोतं वासो मुखमोदनस्य॥ अथर्व० १२।३।५१।

निश्रयन्ते[१] ।"

## ( घ ) क्षौरम्—

यथा शिष्टसमुदाये वस्त्राणि धारणीयत्वेनोपदिष्टानि तथैव दीर्घायुषे चक्षुरिन्द्रियसामर्थ्याय च श्मश्रुलोमानां वपनोपदेशः क्रियते[२] । क्षौरेण पापोपशमनं हर्षो लाघवञ्च भवति । शुभं मुखञ्च सम्पद्यते[३] । ये च शीर्षण्याः केशास्ते शोभनरूपेण कर्तनोया एव न वपनीयाः[४] ।

## ( ङ ) सुवर्णरत्नादिधारणम्—

आम्नायेषु सुवर्णरत्नादीनां धारणं प्रशस्यत्वेन निरूपितम् । अनेन शोभनो[५] दीर्घायुः[६] श्रीमाँश्च भवति । कर्णालङ्कारस्य विधानञ्चापि दृश्यते[७]ऽथ च रत्नधारणमवश्यत्वेन प्रकीर्तितम्[८] । हिरण्यधारणेन बलमायुरोजः सौभाग्यञ्च प्रवर्धते[९] ।

---

१ शत० ब्रा० ३।१।२।१८–१७ ।

२. अदितिः श्मश्रु वपत्वाप उन्दन्तु वर्चसा ।
चिकित्सतु प्रजापतिर्दीर्घायुत्वाय चक्षसे ।। अथर्व० ६।६८।२ ।

३. येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।
तेन ब्रह्माणो वपते दमस्य गोमानश्ववानयमस्तु प्रजावान् ।।
अथर्व० ६।६८।३ ।

शुभं मुखं मा न आयुः प्रमोषीः । अथर्व० ८।२।१७ ।

४. द्र० शत० ब्रा० ५।५।३।६ ।

५. शुभे रुक्मं न दर्शतम् । ऋ० १।११७।५ ।

६. बृहद्वयो दधिरे रुक्मवक्षसः । ऋ० ५।५५।१ ।
सुजातासो जनुषा रुक्मवक्षसो दिवो अर्का अमृतं नाम भेजिरे ।
ऋ० ५।५७।५ ।

७. उत नः कर्ण शोभना पुरूणि धृष्णवा भर ।
त्वं हि शृण्विषे वसो । ऋ० ८।७८।३ ।

८. प्राता रत्नं प्रातरित्वा दधाति । ऋ० १।१२५।१ ।
आदिद्रत्नं धारयन्त द्युभक्तम् । ऋ० ४।१।१८ ।
कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि । ऋ० ७।१६।६ ।

९. नैनं रक्षांसि न पिशाचाः सहन्ते देवानामोजः प्रथमजं ह्येतत् ।
यो बिभर्ति दाक्षायणं हिरण्यं स जीवेषु कृणुते दीर्घमायुः ।।
अथर्व० १।३५।२ ।

**( च ) भक्ष्याभक्ष्यम्—**

तत्रेदमाहारविधिविधानमरोगाणामातुराणां वा केषाञ्चित् काले प्रकृत्यैव हिततमं भुञ्जानानां भवति—उष्णं स्निग्धं मात्रावज्जीर्णे वीर्याविरुद्धमिष्टे देशे इष्टसर्वोपकरणं नातिद्रुतं नातिविलम्बितमजल्पन्नहसंस्तन्मना भुञ्जीत, आत्मानमभिसमीक्ष्य सम्यक्। मात्राशी स्यात्। यावद्ध्यशनमशितमनुपहत्य प्रकृतिं यथाकालं जरां गच्छति तावदस्य मात्राप्रमाणं वेदितव्यम्। मात्रावद्ध्यशनमशितमनुपहत्य प्रकृतिं बलवर्णसुखायुषा योजयत्युपभोक्तारमवश्यमिति[1]।

मात्रानिरूपणे यावत् त्रिविधं कुक्षौ स्थापयेदवकाशांशमाहारमुपयुञ्जानः। तद्यथा—एकमवकाशांशं मूर्तानामाहारविकाराणामेकं द्रव्याणामेकम्पुनर्वातपित्तश्लेष्मणाम्। एतावतीं ह्याहारमात्रामुपयुञ्जानो नामात्राहारजं किञ्चिदशुभं प्राप्नोति[2]।

अध्यशनं ह्यपूजितं भवति[3]। प्रचण्डबुभुक्षायां जातायामेव भोक्तव्यं येन जाठराग्निज्वालयाऽशितं यथाकालं सम्यक् जीर्येत[4]। न्यायोपार्जितं निमृष्टं सिद्धमेवान्नं सर्वे भुञ्जीरन्[5]। वानस्पतिकमन्नञ्च भोक्तव्यम्[6]। शरीरबलबुद्धिपुष्ट्यै आत्मोन्नत्यै च गोः पयः सेव्यमन्नेन सह संस्कृत्य पायसादिकञ्च सेवनीयम्[7]।

**मांसवर्जनम्—**

शरीरपुष्टये बलवृद्ध्यै च गोघृतं श्रेयस्करं न तु मांसम्। आत्मो-

---

१. द्र० चरके विमानस्थाने १।२८।

२. चरके विमानस्थाने २।३।

३. अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम्।
अपुण्यं लोकविद्विष्टं तस्मात्तत् परिवर्जयेत्॥ मनु० २।५७।

४. अग्नेः पिब जिह्वया सोममिन्द्र०। ऋ० ३।३५।९।

५. कृता धाना अत्तवे ते हरिभ्याम्। ऋ० ३।३५।७।

६. अयमस्मान् वनस्पतिर्मा च हा मा च रीरिषत्। ऋ० ३।५३।२०।

७. यत्ते सोम गवाशिरो यवाशिरो भजामहे।
वातापे पीब इद्भव। ऋ० १।१८७।९।
करम्भ ओषधे भव पीवो वृक्क उदारथिः।
वातापे पीब इद् भव॥ ऋ० १।१८७।९।
तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम। ऋ० १।१८७।११।

न्नतये तु मांसं बाधाकरमतो न कदापि सेवनीयम्[1]।

यदन्नं भोक्तव्यं तत् सुष्ठु संस्कृत्य विपाच्यैव पक्वान्नं भोक्तव्यं नाममदनीयम्[2]। हविःशेषं प्राशनीयम्। यदेव सुसंस्कृतमन्नं तदेव स्वादु-भवति रोचते च। यद्रुचिरं तदेव शरीरं पुष्णाति रक्षति च[3]। येन पीतेन वाग्बुद्धितनुर्वर्धेत, ये च शास्त्राणि सङ्गृहीतानि स्युस्तदेव सेवनीयं[4] न च मतिनाशकं सुरासदृशं द्रव्यम्[5]।

**( छ ) सदाचारः—**

सदैव गुरुं पितरमाचार्यमन्यं वाऽदरणीयं जनं दक्षिणतः स्थापयित्वा स्वयं वामपार्श्वे स्थातव्यम्[6]। सर्वेषु क्षुद्रप्राणिष्वपि समदृष्टया वर्तितव्यम्। सर्वं स्वसदृशमभिमन्येत। न कस्यचिदात्मा महान् क्षुद्रो वा वर्तते। सर्वे समाः। ततः क्षुद्रजनेऽपि पक्षपातं विहाय सर्वेषां हिताय वर्तितव्यम्[7]। न कदाचिदप्यात्मनः शरीरस्य परशरीरस्य वा हिंसा कर्तव्या। यथा परःशरीरहिंसास्तथैवात्महिंसाऽपि[8]। सर्वैः साकं सख्य-

---

१. ये चार्वतो मांसभिक्षामुपासते उतो तेषामभिगूर्तिर्न इन्वतु।
यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि॥
ऋ० १।१६२।१२-१३।

२. यदूवध्यमुदरस्यापावति य आमस्य क्रविषो गन्धो अस्ति।
सुकृता तच्छमितारः कृण्वन्तूत मेधं शृतपाकं पचन्तु॥
ऋ० १।१६२।१०।

३. स्वादो पितो मधो पितो वयं त्वा ववृमहे।
अस्माकमविता भव। ऋ० १।१८७।२।
स्वादुष्किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायम्।
ऋ० ६।४७।१।
अयं मे स्वादुरिह मदिष्ठ आस० ऋ० ६।४७।२।

४. अयं मे पीत उदियर्त्ति वाचमयमनीषामुशतीमजीगः। ऋ० ६।४७।३।

५. अनृतं पाप्मा तमः सुरा। शत० ब्रा० ५।१।२।१०।
अभिमाद्यन्निव हि सुरां पीत्वा वदति। शत० ब्रा० १।६।३।४।
सुरां पीत्वा रौद्रमनाः। शत० ब्रा० १२।७।३।२०।

६. अभि प्रेहि दक्षिणतो भवा नो०। अथर्व० ४।३२।७।

७. यदीमर्भ महति वा हितासो बाधे मरुतो अह्वाम देवान्।
ऋ० ६।५०।४।

८. स्वयं रिपुस्तन्वं रीरिषीष्ट। ऋ० ६।५१।७।

भावेन वर्तनात् सुखं जायते[१]। अहिंसामहाव्रतेन च हिंस्रप्राणिनोऽपि तं प्रति वैरभावं त्यजन्ति[२]। बहुमित्रवान् शत्रुभिर्निरोद्धुमशक्यो जायते अतो यानि कानि शतानि मित्राणि कर्तव्यानि[३]। ऐश्वर्यशालिनः स्तोमैरुक्थैश्च स्तोतव्याः परं न कदापि चाटुकारिता कार्या[४]। सर्वेषां गुणदोषान् विज्ञायैव गुणप्रशंसा दोषनिन्दा च कार्या[५]। त एव सखायो भवति ये विपदि सखीन्न जहति[६]।

यथैवेश्वरः कश्चिदपि नाभिद्रुह्यति तथैव सर्वैर्मनुष्यैरनुष्ठातव्यम्[७]। ये सर्वेषु प्राणिषु सख्यभावेन वर्तन्ते त एव सर्वेषां सदैवानुकरणीया भवन्ति[८]। ये सखायः स्वसखीनामानन्दं जनयन्ति[९] तेषां स्तुतिं कुर्वन्ति[१०] तेभ्योऽन्नानि प्रयच्छन्ति तेषां कृतज्ञा भवन्ति त एव बहुसखिवन्तो भवन्ति[११]। यः सखा सुक्षत्रः सुखप्रदोऽस्ति स एव सर्वतोऽधिकमभिनन्दनीयो नमस्यश्च भवति[१२]। उदासीनैः सहापि मैत्री करणीया[१३]।

---

१. इन्द्र हवन्ते सख्यं जुषाणाः। ऋ० ३।४३।२। द्र० यजु० ३६।१८।

२. द्र० अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः। योगसूत्रम् २।३५।

३. न त्वा गभीरः पुरुहूत सिन्धुर्नाद्रयः परिषन्तो वरन्त।
इत्था सखिभ्य इषितो यदिन्द्रा दृढं चिदरुजो गव्यमूर्वम्॥
ऋ० ३।३२।१६।

४. युधेन्द्रो मह्ना वरिवश्चकार देवेभ्यः सत्पतिश्चर्षणिप्राः।
विवस्वतः सदने अस्य तानि विप्रा उक्थेभिः कवयो गृणन्ति॥
ऋ० ३।३४।७।

५. द्र० ऋ० ३।३९।१।

६. द्र० ऋ० ३।४३।४।

७. मा नो मर्ता अभिद्रुहन् तनूनामिन्द्र गिर्वणः। ऋ० १।५।१०।

८. असाम यथा सुषखाय एना०। ऋ० १।१७३।९।

९. प्र व इन्द्राय मादनं हर्यश्वाय गायत।
सखायः सोमपाव्ने॥ ऋ० ७।३१।१।

१०. तस्मा एतत् पन्यतमाय जुष्टमग्नौ मित्राय हविराजुहोत।
ऋ० ३।५९।५।

११. वयं मित्रस्यावसि स्याम सप्रथस्तमे।
अनेहसस्त्वोतयः। सत्रावरुण शेषसः॥ ऋ० ५।६५।५।

१२. अयं मित्रो नमस्यः सुषेवो राजा सुक्षत्रो अजनिष्टवेधाः।
ऋ० ३।५९।४।

१३. त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः। ऋ० ५।३।१।

ये सुहृदोऽमङ्गलाचरणयुक्ता भवेयुस्ते तिरस्करणीयाः[१]। सज्जनानामेव मैत्री स्थिरा दृढा च भवति न दुष्टानाम्[२]। एवं पुरुषेण शत्रुरहितेन भाव्यम्[३]। मित्रवानेव राजाऽपि शत्रून् जेतुं प्रभवति[४]।

एवं विद्याध्ययनेन सद्वृत्तानुष्ठानेन च त्रिविधमज्ञानमपहृत्य ज्ञान-कर्मोपासनात्मकं त्रिविधं ज्ञानमुपैति। स चक्षुष्मान्निव लोके कृत्या-कृत्यमवेक्षते। सदैवाधर्माचरणं परित्यज्य धर्मं चरति। धर्मेण विवेकी जायते। विवेकेन दीक्षामाप्नोति, दीक्षया पुष्कलदक्षिणां सङ्गच्छति। दक्षिणया श्रद्धां, श्रद्धया च सत्यमाप्यते[५]। विद्यया कातरता दारिद्र्यं मूढता क्षुधा तृषा दुष्टसङ्गः पीडा वा निवर्तते[६]। विद्यया एव सुवीरः आयुष्मन्तश्च भवन्ति[७]। तयैव जीवः परमानन्दमाप्नोति[८]। व्यवहार-विद्यया चेहलोकसुखं याति। तदत्र जगति मूढो मूढतरो मूढतमो विद्वान् विद्वत्तरो विद्वत्तमोऽनूचानश्चेति सप्तविधा मनुष्या भवन्ति[९]। वैदिकशिक्षया शिक्षिता नरा न दुःखं भजन्ते॥

---

१. सखायस्ते विषुणा अग्न एते शिवासः सन्तो अशिवास अभूवन्।
ऋ० ५।१२।५।

२. ते हि स्थिरस्य शवसः सखायः सन्ति धृष्णुया०। ऋ० ५।५२।२।
दूणाशं सख्यं तव०। ऋ० ६।४५।२६।

३. अनमित्रं नो अधरादनमित्रं न उत्तरात्।
इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि॥ अथर्व० ६।४०।३।

४. सखिभिः सखीयन् ० ऋ० ६।३२।३।

५. व्रतेन दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम्।
दक्षिणां श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥ यजु० १९।३०।

६. मा नो अग्नेऽवीरते परादा दुर्वाससेऽमतये मा नो अस्यै।
मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आजुहूर्थाः॥
ऋ० ७।१।१९।

७. महो नो अग्ने सुवितस्य विद्वान् रयिं सूरिभ्य आ वहा बृहन्तम्।
येन वयं सहसावन्मदेमाविक्षितास आयुषा सुवीराः॥
ऋ० ७।१।२४।

८. न सोममिन्द्रमसुतो ममाद०। ऋ० ७।२६।१।
द्र० ऋ० ४।३३।४।

९. सप्त मे सप्त शाकिन एकमेका शता ददुः॥ ऋ० ५।५२।१७।

भवन्ति चात्र—

शिक्षाधिकारे प्रथमं स्वरूपं प्रदर्श्य वाचो महिमा सुसिद्धः ।
विद्याऽनिवार्या सुखदुःखमूला सैवागता वापि न चागता वा ॥१॥

शिक्षाविधिं विस्तरशो निरूप्य गुणा गुरूणामथवा वटूनाम् ।
गुरोः कुलानां नियमानुशिष्टिः परीक्षणं चाप्युपहारदानम् ॥ २ ॥

सद्वृत्तमन्ते प्रतिबुध्य सद्यः स्नानादिसन्ध्यामवधाय नित्यम् ।
क्षौरादिना साधुसुवेशधारी चरेत्स धर्माचरणं सुविज्ञः ॥ ३ ॥

# ५. वैज्ञानिकमधिकरणम्

पृष्ठभूमिः—

सम्प्रति विज्ञानं विमृश्यते । यद्यपि केचन विद्वांसो वेदाः कर्मकाण्ड-प्रतिपादका ब्रह्मप्रतिपादका वेत्येवं मन्यन्ते तथाप्यन्यैर्मनीषिभिर्युक्ति-प्रमाणाभ्यामेतत् प्रतिपादितं यद्, वेदेषु न केवलं यज्ञादिकर्मकाण्डस्यैव विधानमपितु ज्ञानविज्ञानयोः समस्तस्यापि मानवकर्तव्यस्य शिल्प-विद्यादिकस्य च बीजं विद्यते, तेषामेव सरणिमनुसृत्यात्र विज्ञानान्य-नुसन्धीयन्ते । चत्वारो वेदा ज्ञानकर्मोपासनाविज्ञानात्मकाः सन्त्येकैकं प्रधानविषयमवलम्ब्य । वर्तमाने युगे परितो विज्ञानस्य घण्टाघोषः प्रतिध्वन्यते । तच्चास्मदीयनैत्यिकव्यवहारेषु सुतरां प्रयुज्यत एव । प्रथमं तावद्विचार्यते वेदेषु विज्ञानमस्ति न वा ? । अस्ति चेत्तर्हि किमद्यतनविज्ञानसदृशं विसदृशं वा न्यूनं वाऽधिकं वा ।

वैदिकवाङ्मये ज्ञानं विज्ञानं चैतौ द्वौ शब्दौ सम्प्रयुज्येते । सामान्य-रूपेण जायमानो बोधो ज्ञानं विविधोपकरणैस्साक्षात्कृत्य सिद्धान्त-रूपेण निदर्शनं विज्ञानमिति[1] । मोक्षविषयकाः परमेश्वरविषयका विचारा ज्ञानम् शिल्पशास्त्रभौतिकपदार्थविषयकविचारा विज्ञानम्[2] । अथापि सर्वपदार्थानां जगति दृश्यमानानां मूलकारणदर्शनं ज्ञानम् तच्च शास्त्रेण योगादिना वा लभ्यते । एकस्य मूलकारणस्य सर्व-पदार्थेषु विस्तारदर्शनं विज्ञानम् । यथैकस्य सुवर्णपदार्थस्य विविध-कटकाङ्गुलीयकाभरणादिषु रूपेषु दर्शनं विज्ञानम् । विज्ञानान्यपरि-संख्येयानि तेषु कानिचिदेवात्र स्थालीपुलाकनयेन निरूपयिष्यन्ते ।

## ( १ ) जीवविज्ञानात्मकं वृत्तम्

साधारणमनुष्याणां प्राथमिकीयं जिज्ञासा यत्पुरुषाः प्राणधारिणः स्वस्वक्रियाव्यवहारेषु संयुक्तास्सन्ति सहसैव किं संजायते ? यदेते जडा इवाभान्ति अपरैश्चोच्यते मृता इति ? कस्मिन् प्रतिष्ठितेऽयं चेष्टते

---

१. द्र० गिरधरशर्माचतुर्वेदी, वैदिकविज्ञान और भारतीयसंस्कृति पृ० ७४ ।

२. मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः । अमरकोशः ।

निर्गते च म्रियते। यदा कश्चिज्जनो म्रियते, सर्वैरूद्यते यदस्माच्छरीराच्चेतनो वियुक्तः। इदं पञ्चमहाभूतसमवायिशरीरं जडं विद्यते। अस्यामेकादशेन्द्रियात्मिकायामयोध्यापुर्यां शेते वसत्ययं जीव इति निर्वचनाज्जीवः पुरुषसंज्ञां लभते। एष जीवो द्रष्टृ–श्रोतृ–घ्रात्रादिभिर्विशेषणैः प्रोच्यते। अयमेव क्षेत्रज्ञो धर्माधर्मनिमित्तेन त्रिविधयोनिषु तिर्यग्मानुषदेवेषु सञ्चरति। जीवस्वरूपं वेदेषु बहुधा निर्दिष्टम्[1]। अस्मिन् जगति जडश्चेतनश्चेति द्वौ पदार्थौ स्तः। तयोर्जडः स्वस्वरूपमन्यस्वरूपञ्च न जानाति चेतनश्च स्वस्वरूपमन्यच्च जानाति। द्वावप्यनुत्पन्नाववनाशिनौ च। जडस्य संयोगेन शरीरं प्राप्तश्चेतनो जीवः संयोगेन वियोगेन च स्वस्वरूपं न जहाति किन्तु स्थूलसूक्ष्मदेहसंयोगेन स्थूलसूक्ष्म इवाभाति। कूटस्थः सन् यादृशोऽस्ति तादृश एव भवति। यदायं विविधयोनिषु जायमानो बाह्यविषयान् द्रष्टुमिच्छति तदा तदाकारं ज्ञानमस्य जायते। याश्चास्य शरीरे असंख्या नाड्यः सन्ति ताभिरयं हृदिस्थो जीवो शरीरस्य जगतश्च वृत्तं ज्ञानवाहिनोभिर्नाडीभिः तत्क्षणमेव वेत्ति। विविच्य च स्वादेशान् स्वेच्छयाऽऽदेशवाहिनीभिर्नाडीभिर्गमयति। कर्मेन्द्रियाणि च व्यापारेषु संयोजयति। पूर्णेषु भोगेषु जातेषु शरीरादुत्क्रम्य श्येनवदुड्डीय यमलोकमेति। अस्य जीवस्य शरीरान्तःप्रतिष्ठितस्य सुखदुःख इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः संकल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणा भवन्ति। एतैर्गुणैरयमभिलक्ष्यते[2]। बहुधा श्रूयते जीवविषय अस्ति न वेति विचिकित्सा जनानाम्। अस्य द्वे प्रत्यक्षे भवतः बाह्यप्रत्यक्षमन्तःप्रत्यक्षञ्च। तत्र प्रथममैन्द्रियिकप्रत्यक्षं बाह्यमिन्द्रियैर्लभ्यते द्वितीयमान्तरिकं प्रत्यक्षं योगिभिर्योगसमाधिभिः क्रियते। प्रत्यक्षस्य लक्षणं कपिलमुनिना सांख्यशास्त्रे प्रतिपादितम्[3]। इन्द्रियमिति पदस्यार्थं पाणिनिमुनिर्मुखस्थानीये व्याकरणेऽङ्गे प्रतिपादयति 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्र-

---

१. द्रप्सश्चस्कन्द पृथिवीमनुद्यामिमञ्च योनिमनुयश्च पूर्वः।
समानं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः॥
अथर्व० १८।४।२८।

अजो ह्येको जुषमाणोऽनुशेते० श्वेताश्वतरोपनिषदि ४।५।

२. सुश्रुते शारीरस्थाने १।१७।

३. द्र० सांख्यसूत्रे १।८९–९०।

सृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा'[1] अस्येतादृशस्य जीवस्य शरीरसंयोगे स जीवः पुरुषसंज्ञां लभते निर्गते च मृत इति ।

## ( २ ) प्रकृतिविज्ञानात्मकं वृत्तम्

तस्य जीवस्य देहकरणोपादानमस्य च सर्गस्य निमित्तभूतं किमिति प्रश्न उज्जृम्भते । सर्वस्य कार्यस्य किञ्चित्कारणं भवत्येव यथा कुम्भकारो मृत्तिकया कुम्भं करोति तथा परमेश्वरः केन द्रव्येणामुं सर्गमकल्पयत् । अत्रोच्यते सर्वभूतानां कारणमकारणं सत्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम[2] । तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम् । तस्मादव्यक्तान्महत्तत्वमुत्पद्यते तल्लिङ्गमेव, तल्लिङ्गाच्च महतस्तल्लक्षण एवाहङ्कार उत्पद्यते । स त्रिविधो वैकारिकस्तैजसो भूतादिरिति । तत्र वैकारिकादहङ्कारात्तैजससाहाय्यात् तल्लक्षणान्येवैकादशेन्द्रियाण्युपलभ्यन्ते । तद्यथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्हस्तोपस्थपायुपादमनांसीति । तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाण्युभयात्मकं मनः । भूतादेरपि तैजससाहायात्तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते । तद्यथा शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति, तेषां विशेषाः शब्दस्पर्शरसरूपगन्धास्तेभ्यः पञ्चमहाभूतानि व्योमानिलानलजलोर्व्यः । तैः पञ्चमहाभूतैर्देहिनां देहः सर्गश्च कल्प्यते । प्रकृतिरेवैषाऽचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिणी च विद्यते । सा प्रकृतिरजा नाम्नोच्यते[3] । तस्याः प्रकृतेरष्टपुत्रा महदहङ्कारतन्मात्रापञ्चमहाभूतात्मका जाताः[4] । एतैः करणैः सृष्टिः सृष्टा ।

## ( ३ ) परमेश्वरविज्ञानात्मकं वृत्तम्

तस्याः प्रकृतेर्नियामकः क इति शंकायां सत्यां स परमेश्वर एव यः सर्गं ससर्ज[5] । स विभुः स्थूलसूक्ष्मकारणरहितो नाड्यादिबन्धन-

---

१. पा० ५।२।६३ ।

२. त्रिधातवः परमा अस्य गावो० । ऋ० ५।४७।४ ।

३. अजारे पिशङ्गिला० । यजु० २३।५६ ।

४. अष्टौ पुत्रासो अदितिर्ये जातास्तन्वस्परि देवा० । ऋ० १०।७२।८ ॥

५. अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद ।
ऋ० १०।१२९।७ । ( अग्रिमे पृष्ठे )

विरहित: पवित्र: सर्वशक्तिमान् न्यायकारी दुष्टानां पराभविता जीवेभ्य: पापपुण्यफलप्रदायको जगन्नियन्ता धारयिता चास्ते। स एव देवाधिदेवो ज्येष्ठो देवैरुपास्योऽस्ति[1]। लोके केचिदास्तिका नास्तिकाश्चापरे। परमास्तिकेष्वपि परमात्मविषये विविधा धारणा: सन्ति। स च परमेश्वर: सर्वेषां गुरु: सखा[2] पिताऽजो दयालुश्चास्ति। यदि सर्वे तं पितामहं मन्येरन् न तदा किमप्याकुलतां वहेरन्। कर्मकरणेषु जीवा: स्वाधीना: फलेषु च पराधीना:। जीवेभ्य: पापपुण्यफलप्रदायकोऽपि स एव, केचिदेनं शिवं केचित् विष्णुं केचिद् ब्रह्माणं संवदन्ते। स एक एव एकाधिपतिर्दुष्टेभ्यो भयङ्कर: पुण्यकर्मिभ्य: सखा विद्यते[3]। गुणभेदान्नामभेदेन प्रोच्यते। स एवास्तिकेभ्यो नास्तिकेभ्यश्चान्नं प्रयच्छति तस्य प्रसादेनैव सर्वे जीवन्ति श्वसन्ति च[4]। न काचित् कृति:कर्त्रा विना दृश्यतेऽत: सृष्टिप्रलयकर्ता स एव। स श्रवणचतुष्टयेन (श्रवणमनननिदिध्यासनसाक्षात्कारै:) साक्षात् कर्तव्य:[5]।

## (४) सृष्टिविज्ञानात्मकं वृत्तम्

इदं दृश्यमानं जगत् परमेश्वर: कथं व्यरचयत्? केन च क्रमेणेयं सृष्टि: प्रादुर्भूता? क उ स वृक्ष आस यतो द्यावापृथिवो निष्टतक्षु:[6]। सृष्टे: प्रागिदं जगत् कीदृगासीत्? कल्पादौ मनुष्या: कथं जाता:?

---

यस्य द्यौरुर्वी पृथिवी च मही यस्याद उर्वन्तरिक्षम्। अथर्व० २।८।४।
यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहु:।
यस्येमा:प्रदिशो यस्य बाहू०। ऋ० १०।१२१।४, द्र० अथर्व० ४।२।५।

१. न स जीयते मरुतो न हन्यते न स्रेधति स व्यधते न रिष्यति।
ऋ० ५।५४।७।

२. सखा पिता पितृतम: पितॄणाम्। ऋ० ४।१७।१७।

३. एकं सद्विप्रं बहुधा वदन्ति। ऋ० १।१६४।४६।

४. मया सो अन्नमत्ति यो विपश्यति य: प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि॥
ऋ० १०।१२५।४।
यो भोजनं च दयसे वर्धनम्। ऋ० २।१३।६।

५. द्र० आध्यात्मिकाधिकरणम्।

६. किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षु:।
ऋ० १०।८१।४, द्र० ऋ० १०।१२९।६।

केन प्रकारेण चेदं धान्यसस्यादिकं सम्भूतम्? अस्य सर्गस्य किमधिष्ठानमासीदित्येवं[1] विधा सर्वेषां जिज्ञासा जायते। तदस्या जिज्ञासाया उत्तर आम्नायेषु लभ्यते। तद्यथा—सृष्टेः प्राक् नासदासीत् शून्यमाकाशमासीत् नो सदासीत् नायं विराट्रूप आसीत्। नासीद्रजो न व्योमा परो यत्। इदं जगत् तुच्छ्येन प्रकृत्याऽऽच्छादितमासीत्। सर्वत्र प्रगाढतम एव सम्बभूव, अप्रज्ञानीयश्च सलिलं सूक्ष्मरूपेण सर्वत्र व्याप्तमाप आसन्[2]। तस्मिन् काले प्रजापतिर्ह वा इदमग्र एक एवास[3]। स एक एवाद्वितीयो बभूव[4]। सोऽकामयत भूय एव स्यात् प्रजायेतेति[5] स आभ्योद्भ्योऽधिप्रजायेयेति सोऽनया त्रय्या विद्यया सहापः प्राविशत्[6]। स तपोऽतप्यत, तस्माच्छ्रान्तात्तेपानादापोऽसृज्यन्त तस्मात् पुरुतप्तादापो जायन्ते। अद्भ्यः फेनः, फेनात् मृदः, मृदः सिकताः, सिकताभ्यः शर्कराः, शर्कराभ्योऽश्मानः, अश्मभ्योऽयः, अयसो हिरण्यं प्रजायत। एवमद्भ्य एवैतत् सर्वमसृजत[7]। ता आपश्चतुरवस्थाका भवन्ति। या आपो द्युलोकादूर्ध्वस्थितयोर्महो जन इत्यनयोर्लोकयोर्व्याप्तास्ता अम्भ आख्याः। अन्तरिक्षे व्याप्ता मरीचयः। पृथिव्युत्पादने क्षमा भरपदेन भूमौ प्रवहमानाश्चापः पदेनोच्यन्ते[8]। भरपदेन प्रोक्तं

---

१. किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत्।
यतो भूमिं जनयन् विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः॥
ऋ० १०।८१।२।

२. ऋ० १०।१२९।३। द्र० दयानन्दः ऋ० भा० भू० पृ० ११५–११६।

३. शत० ब्रा० २।५।१।१।

४. आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास।
ऋ० १०।१२९।२।

एकं वा इदं विबभूव सर्वम्। द्र० गो० ब्रा० पूर्वार्चिके १।१–२।

५. शत० ब्रा० ६।१।२।१।

६. शत० ब्रा० ६।१।१।१०।

७. शत० ब्रा० ६।१।३।१–५। ६।१।१।८–१३।

८. आत्मा वा इदमेक एवाग्र आसीत्......। स इमान् लोकानसृजत। अम्भोमरीचिर्मरमापोऽदोम्भः परेण दिवं द्यौः प्रतिष्ठा अन्तरिक्षं मरीचयः। पृथिवी मरो या अधस्तात्ता आपः॥ ऐतरेयोपनिषत् १।१।२।
या आपो दिव्याः पयसा मदन्त्यन्तरिक्ष उतवा पृथिव्याम् ०।
अथर्व० ४।८।५।
या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः।
समुद्रार्थाः याः शुचयः पावकास्ता आपो०॥ ऋ० ७।४९।२।

जलमेव प्रागासीत्। तेनैवेमा अन्यतत्वसंमिश्रणादापः प्रादुर्भूताः। ताभिरद्भिश्चेयं पृथिवी विरचिता। अन्तरिक्षं द्यौश्च समुद्भूते[1]।

अद्भ्यः कथमुत्पद्यते पृथिवी इत्यत्र विचार्यते जलस्योपरि वायुः सरति। यदा कदाचिज्जलप्रवाहमुपरि प्रक्षिप्य मरुदन्तः प्रविशति तदा तज्जलं बुद्बुदाकारं जायते। नष्टे सति वायौ बुद्बुदा अपि प्रणश्यन्ति। परन्तु यदा जलस्य स्तरो घनीभूतो जायते, स च वायवे मार्गं न प्रयच्छति तदा वायोरौक्ष्याज्जलस्य स्नैग्ध्याद्विरुद्धगुणवतोः संघर्षणादुभौ पदार्थौ तिरोहितौ भवतः। अपरश्च तृतीयः पदार्थः संजायते तं फेननाम्नाऽऽचक्षते। फेनस्योपरि सूर्यरश्मिप्रतापाद् वायौ संमिश्रितानि चिक्कणतत्त्वान्यपि फेने समाविशन्ति। एवमावापोद्वापाभ्यां मृत्स्नोत्पद्यते। सैव मृत्स्ना वायुसंघर्षणात् सूर्यरश्मीनाञ्च प्रतापात् सिकतारूपमवाप्नोति। सा सिकता क्रमेण शर्करा भवति पाषाणरूपञ्च धारयति। तामेव शर्करामग्निर्धातुरूपां करोति, एवं कल्पादौ पृथ्वी प्रादुर्भूता[2]। सा भूमिर्ब्राह्मणेषु पुष्करपर्णनाम्नोच्यते[3]। पुष्करेण समुद्रेण जातेति पुष्करपर्णा। यदेयं भूमिर्जाता तदा साऽऽर्द्रा शिथिला पिलिप्पिला चासीत्। तां दिशोऽनुवातः समवहत्[4]। स वायुः पृथ्वीपिण्डमावृत्य तिष्ठति संघातरूपञ्च कुरुते ततोवराहपदेनोच्यते। वराह एव पृथिवीमुज्जघान[5]। वराहः 'वृ' 'अह' द्वाभ्यां धातुभ्यां निष्पद्यते। एवं

---

१. आपो अग्रे विश्वमावन् गर्भं दधाना अमृता ऋतज्ञाः। अथर्व० ४।२।६
द्र० शत० ब्रा० ११।५।८।१–२।

२. आपो वा इदमग्रे सलिलमासीत्। तस्मिन प्रजापतिर्वायुर्भूत्वा चरत् स इमामपश्यता वराहो भूत्वा हरत्तां विश्वकर्मा भूत्वाव्यमार्ट् सा प्रथत सा पृथिव्यभवत्तत्पृथिव्यै पृथिवीत्वम्। तै० सं० ७।१।५।१।
इयं वै पृथिवी भूतस्य प्रथमजा। शत० ब्रा० १४।१।२।१०।
द्र० शत० ब्रा० ६।१।१।१२।
तु० गिरधरशर्माचतुर्वेदी, "वैदिकविज्ञान एवं भारतीयसंस्कृति" पृ० ११४–११५।

३. इयं वै पुष्करपर्णमियमु वै प्रतिष्ठा। शत० ब्रा० ६।७।१।१२।

४. सा हेयं पृथिवी अलेलायद् यथा पुष्करपर्णमेवम्।
तां दिशोऽनुवातः समवहत्। तै० ब्रा० १।१।३।

५. इत्यग्र आसीद् द्वितीयवती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री।
तामेमूष इति वराह उज्जघान। शत० ब्रा० १४।१।२।११।

कालक्रमेण सा भूमिः कच्छपपृष्ठाभा जाता[१]। तदानीं तत्रौषधय आसन् "कल्वाली कृता हैव पृथिव्यास"[२]। तथा च ब्राह्मणेऽपि इयं वा अलोमिके वाग्र आसीत्[३]। ओषधिवनस्पतयो वै लोमानि[४]। एवमाकाशमादित्यादिकं लोकलोकान्तरानन्यान् जडपदार्थञ्च प्रजापतिर्व्यरचयत्[५]। पुनः जङ्गमजगत्।

अत्र द्वे मते समुपलभ्येते। हिरण्यमयेनाण्डेन जलेषु जातेन पुरुष उत्पन्नः। स आत्मानं द्वेधाऽपातयत्। ततः पतिश्च पत्नी चाभवताम्। तस्य पुरुषस्य मिथुनात् सृष्टिर्जाता, रूपान्तरेण चान्ये पशुपक्षिणोपीत्येके[६]। अपरे च पूर्वं प्रजापतिसंकल्पादेवैते वायव्या आरण्या ग्राम्याश्च पशवो जाताः[७] पुनर्लोकलोकान्तराणामुत्तमे शिखरे त्रिविष्टपे मर्त्यान् ससर्ज[८]।

कथं ससर्जेति जिज्ञासायां स्मरणीयेयं श्रुतिः—'माता भूमिः पुत्रोऽहं पृथिव्याः[९] मम माता जननी पृथिव्यस्ति सोऽहं तस्याः पुत्रोऽस्मि। सैव सर्वमनुष्याणां प्रतिष्ठात्री[१०]। तस्यां प्रतिष्ठिता नरा

---

१. द्र० महाभारते शान्तिपर्वणि ३००।६।

२. शत० ब्रा० २।२।४।३।

३. ऐ० ब्रा० २४।२२।१।

४. जै० ब्रा० २।५४।

५. ऋ० १०।१९०।१–३।

६. द्र० शत० ब्रा० ११।१।६।१–२।
द्र० सायणभाष्यम्। आपो वत्सं जनयन्तीर्गर्भमग्रे समैरयन्।
तस्योत जायमानस्य उल्व आसीद्धिरण्ययः॥ अथर्व० ४।२।८।

७. पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये। यजु० ३१।६।
तस्मादश्वा अजायन्त ये के चोभयादतः। यजु० ३१।८।
ओषधीरनु पशवः पशूननु मनुष्याः। मैत्रायणीसंहिता ३।१।५।

८. उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि। नारायणोपनिषत् २।३६।
त्रयः सुपर्णा उपरस्य मायू नाकस्य पृष्ठे अधि विष्टपि श्रिताः।
स्वर्गलोका अमृतेन विष्टा०। अथर्व० १८।४।४।
द्र० दयानन्दः, सत्यार्थप्रकाशसमुल्लासः ८ पृ० २२४।

९. अथर्व १२।१।१२।

१०. भूमे मातर्नि धेहि मा भद्रया सुप्रतिष्ठितम्। अथर्व० १२।१।६३॥

मा व्यथामाप्नुवन्तु[१]। मा चाधो निपतन्तु भुवने शिश्रियाणाः[२]। प्रतिक्षणं सा भूतान् प्रतिष्ठापयति। या भूमेः स्थैर्यं गुरुत्वं काठिन्यं प्रसवसामर्थ्यं गन्धो गुरुत्वं शक्तिः संघातो विद्यते सैव प्रतिष्ठापदेनोच्यते[३]। मातेव वेयं मनुष्यान् बिभर्ति[४]। सैव रत्नानामोषधीनां भोग्यजातानां प्रसवभूमिस्ततो गृभिपदेनाप्युच्यते[५]। सा यवतण्डुलगोधूमसदृशान्नेन मनुष्येभ्यः पयः प्रयच्छति। यथा माता पुत्रं पयसा पृणाति तथा भूमिरपि[६]। सर्वभूतानामुदरे भरणादेव सा विश्वधायस्पदेनोक्ता[७]। सेयं मही महती परिदृश्यमाना पृथिवी भूतानां भूतजातानां प्राणिनां गर्भमादधे धारयति। पार्थिवशरीराणि गर्भे बिभर्तीत्यर्थः[८]।

कल्पादौ न किञ्चित् बीजमासीत्। न चाबीजाज्जायते किञ्चित्, ततः शङ्क्यमेतेषां मनुष्याणां पशूनां वा भूतानां कः पिता का च माताऽऽसीत्? इत्यत्र श्रुतिरेव ब्रवीति—'तन्माता पृथिवी तत् पिता द्यौः'[९] पृथिवी तेषां माताऽऽसीत् तया जायमानत्वात्। द्यौश्च पिता सोमरूपबीजनिषेकात्।

त एते मनुष्याः कस्यामवस्थायां जाताः। यदि हि परमेश्वरः शिशूनुत्पादयाञ्चकार नहि तर्हि तेषां कश्चित् भर्ताऽऽसीत्, न च शिशवः स्वकीयं भरणं विधातुं क्षमाः। ततोऽवबुध्यते युवकानेव स ससर्ज। ते च युवकाः शरीरतो जन्महेतुत्वात् विद्यातश्चापरजन्महेतुत्वाज्ज्ञानविज्ञानयुता द्विजा आसन्। नहि तदा कश्चिन्मर्त्य एतान्

---

१. अथर्व० १२।१।२८।

२. अथर्व० १२।१।३१।

३. महाभारते शान्तिपर्वणि २५४।३।

४. शत० ब्रा० ५।३।१।४।

५. विश्वस्वमातरमोषधीनाम्। अथर्व० १२।१।१७।
गृभिरोषधीनाम्। अथर्व० १२।१।५७।

६. द्र० सा नो भूमिः विसृजतां माता पुत्राय मे पयः।
अथर्व० १२।१।१०।

७. अथर्व० १२।१।२७।

८. यथेयं पृथिवी भूतानां गर्भमादधे। अथर्व० ६।१७।१।

९. यजु० २५।१७।

जायमानान् दृष्टवान्[१]। ते सर्वे परमेश्वरस्य मानसपुत्राः समानवयसो ब्रह्मणः पुत्रत्वात् भ्रातरः पृथिवीमुद्भिद्य जाताः[२]। तेषां युवशिशूनां वर्णनं रुचिरमाम्नायेष्वपि दृश्यते। तद्यथा यस्तरुणशिशुर्जात एव वदन् विचचार। स (धातवे)=पयःपानाय न मातरमभ्येति यतस्तस्य मातुर्नैव कुचौ स्तः। स पृथिव्यां परमेश्वरस्य ज्ञानं गृहीत्वा तस्य दूतरूपेणाचरत्[३]। यथा मण्डूका उद्भिदा अण्डजाश्च सन्ति तथा मनुजा अपि कल्पादावुद्भिदाः पश्चाच्च जरायुजाः सम्भूताः[४]। मण्डूकस्य शरीरं—मनुजसदृशमेव। तत एव शल्यचिकित्सां ज्ञातुकामा मण्डूक-शरीरेण मनुजशरीरमभिजानन्ति। उक्तञ्चापि—तत्र शरीरं द्विविधं योनिजमयोनिजञ्च। सन्त्ययोनिजाः वेदलिङ्गाच्च[५]।

मण्डूकसाम्येन च मनुजसाम्यमपि साधयन्त्येके। द्वयोराचार-व्यवहारेषु साम्यम्। मण्डूकशब्दो 'मडि भूषायां हर्षे च' धातोः सिध्यति, विभजनं चाप्यस्यैवार्थः। मण्डयति भूषयति विभजते श्रुतिपदं वेदवाक्यं वा निर्विचिकित्सं स मण्डूकः। अथवा मण्डयति स्वरोच्चारणेन वेदमन्त्रान् भूषयतीति मण्डूकः। मण्डनं मण्डः तदस्यास्तीति मण्डम्। मण्डं भूषितं वक्त्युच्चारयति विवृणोति वाऽर्थं

---

१. को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति।
ऋ० १।१६४।४।

२. ते अज्येष्ठासो अकनिष्ठास एते संभ्रातरो वावृधुः सौभगाय।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः॥
ऋ० ५।६०।५।

ते अज्येष्ठा अकनिष्ठास उद्भिदोऽमध्यमासो महसा वि वावृधुः
सुजातासो जनुषा पृश्निमातरो दिवो मर्या आ नो अच्छा जिगातन॥
ऋ० ५।५९।६।

३. चित्र इच्छिशोस्तरुणस्य वक्षथो न मातरावप्येति धातवे।
अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं चरन्॥
ऋ० १०।११५।१।

४. इन्द्रगोपमण्डूकप्रभृतयः उद्भिजाः। सुश्रुते १।२९।
अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः।
यानि चैवं प्रकाराणि स्थलजान्यौदकानि च। मनु० १।४४।

५. वेदान्तसूत्रम् ४।२, ५, १०, ११।

यः स मण्डूकः[1]। मण्डूकसूक्तस्य प्रथममन्त्रेणापि मण्डूकैर्मनुष्याणां साम्यमवबुध्यते । तद्यथा—

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः।
वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥[2]

संवत्सरपर्यन्तं शयमाना व्रतचारिणो ब्राह्मणाः पर्जन्यसंतर्पितां वाणीं मण्डूकवदवादिषुः । कल्पादौ सर्वे मनुष्या ब्राह्मणा आसन् । ब्रह्म जानातीति ब्राह्मणः[3]। ते सर्वे ब्रह्म = वेदं जानन्ति स्म ततो ब्राह्मणाः । ते व्रतानुष्ठानं कर्म कुर्वन्ति स्म ततो व्रतचारिणः[4]। संवत्सरपर्यन्तं ते पृथिव्यां गर्भे ऊषर्देहनिर्माणहेतुत्वात् । तत्र तेषां द्वे जन्मनि बभूवतुः । शरीरतो विद्यातश्च । सम्पन्ने देहेऽधिगतायाञ्च विद्यायां ते पर्जन्यजिन्वितां ( पर्जन्य एकतो मेघवाची अपरतश्च हृदयाधिष्ठितस्य वेदज्ञानस्य वाचकः । मण्डूकाः पर्जन्येन प्रेरितां वाचं ब्राह्मणाः वेदज्ञानजनितहर्षेण प्रेरितां वाचं मण्डयन्ति भूषयन्ति हर्षयित्वा सम्यक् वदन्ति ) वाचं प्रवादिषुः[5]।

एवं यथा युवतिः स्वयौवनकाल उत्तमान् पुत्राञ्जनयति तथा सर्गादौ सर्वरसपरिपूर्णा युवतिर्भूमिः स्वगर्भात् प्रजापतिसङ्कल्पेन मानसपुत्रान् सुषाव । यथा वनस्पतयो मण्डूका वाऽवनिमुद्भिद्य जायन्ते तथा कल्पादौ मानवा अपि समुद्भूताः[6]। सृष्टिविषय एतद्विधा विचाराः सन्ति मनीषिणाम् । इत्येव सृष्टिविषये वैदिकसिद्धान्त इति दिक् ।

## ( ५ ) लोकानां परिक्रमणधारणाकर्षणविज्ञानात्मकं वृत्तम्

इमे लोकाः सूर्यचन्द्रपृथिव्यादय एकस्मिन् स्थान एव स्थिताः

---

१. मडि भूषायां हर्षे च । विभजने च । वच परिभाषणे ।

२. ऋ० ७।१०३।१ ।

३. द्र० वज्रसूची ( प्राचीनप्रबन्धः )
उद्धृत कुसुमलता, "पुरुषसूक्त का विवेचनात्मक अध्ययन" ( शोधनकार्यम् ) पृ० २५६

४. व्रत इति कर्मनामसु पठितम् । द्र० निघ० २।१ ।

५. द्र० कुसुमलता, "पुरुषसूक्त का विवेचनात्मक अध्ययन" पृ० २५६–२६२ ।

६. तु० ऋ० १०।१८।१०–१२, अथर्व० १८।३।४९–५४ ।

सन्त्याहोस्वित् भ्रमन्ति। यदि चावस्थितास्तर्हि केनाधारेण केनावलम्बनेन गगने स्थिताः ? यदी चलास्तर्हि कथं परिभ्रमन्ति ?

वेदाध्ययनेन विज्ञायते यदीमे लोकाः सर्वे स्वमक्षमुपरि केचिच्च ग्रहं परितो भ्राम्यन्ति। यथा पृथिवीगोलोऽन्तरिक्षे क्रामति तथाऽन्येऽपि लोकाः। तत्र भूमेर्माता जलं जलेन जायमानत्वात्[1], अन्तरिक्षे व्याप्नुवति जले तस्या गर्भरूपेणावस्थानाच्च। पिता चादित्योऽग्नि-गर्भत्वात्[2]। यस्माज्जायते स तस्य पुत्ररूपो भवति। सा भूमिः स्वस्याक्षोपरि पितरमादित्यञ्च परितो भ्रमति[3]। एवमादित्यस्या-न्तरिक्षं माता तस्याऽन्तरिक्षेऽवस्थानान्मरुच्च पिता आदित्याय विद्युत्-प्रदानात्। नहि सूर्यस्य स्वकीया दीप्तिर्भवत्यपितु स्वाक्षे भ्रमणात् तत्रस्थस्य वायोः संघर्षणाद्विद्युदुत्पद्यते तेन वैद्युतेनान्तरिक्षं विद्योतते[4]। स आदित्योऽन्तरिक्षं मातरं मरुमण्डलञ्च पितरं प्राप्नुवन् स्वाक्ष एव भ्रमति नान्यं कमपि ग्रहमभितस्तस्य सूर्यस्य वातो बलम्[5]। चन्द्रमा जलं मातरमग्निञ्च पितरं प्राप्नुवन् स्वाक्षं पृथ्वीञ्च परितो भ्रमति। अद्भिश्चन्द्रमसि शैत्यमुपजायतेऽग्निना च दीप्तिः[6]। योऽयं मरुदस्ति स महतः सूर्यलोकस्य भ्रमणार्थं महतीं कक्षां निर्मितवान्[7]। सोऽयं सूर्य-

---

१. अद्भ्यः पृथिवी। तैत्तिरीयोपनिषदि २।१।

२. तु० गिरधरशर्मा चतुर्वेदी, वैदिकविज्ञान और भारतीय संस्कृति पृ० ११–१४।
यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी।
शत० ब्रा० १४।६।४।२१।

३. या गौर्वर्तनिं पर्येति निष्कृतं पयो दुहाना व्रतनीरवारतः।
सा प्रब्रुवाणा वरुणाय दाशुषे। ऋ० १०।६५।६।
आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः।
ऋ० १०।१८६।१।

४. तु गिरधरशर्मा चतुर्वेदी, "वैदिक विज्ञान और भारतीय संस्कृति" पृ० १७२–१७३।

५. वातात् विष्णोर्बलमाहुः अक्षराद्दीप्तिरुच्यते। तै० आ० १।८।४।

६. त्वं सोम पितृभिः संविदानोऽनुद्यावा पृथिवी आततन्थ।
ऋ० ८।४८।१३।

७. उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ।
अपदे पादा०। ऋ० १।२४।८।

लोके वायोरिन्धनेनैव प्रदीप्यते । न च कस्यचिल्लोकस्य कस्यचिल्लोकान्तरेण सह संगोऽस्ति । किन्तु सर्वेऽन्तरिक्षस्थाः सन्तः स्वां स्वां कक्षां परिभ्रमन्ति । तस्य वायोः प्रसादेनैवायं मित्रः सूर्यो लोकानां धारयिता प्रकाशयिताऽऽकर्षयिता चास्ते[१] । स च आदित्यश्चुम्बकवदाकर्षणगुणं बिभर्ति[२] ।

यथाऽऽकर्षणगुणवान् विवस्वान् तथैव पृथिव्यपि गुरुत्वाकर्षणं वहति[३] । अस्यैव वर्णनमन्यत्रापि समुपलभ्यते तद्यथा—

"अनवर्णे इमे भूमी इयं चासौ च रोदसी ।
किं स्विदत्रान्तराभूतं येनेमे विधृते उभे ॥"

'विष्णुना विधृते भूमी[४] 'विष्णुरित्यादित्यः[५] । स विष्णुर्देवानां प्रथमस्त्रिभिःपादैर्मर्त्यान् पादेनैकेन चाऽमृतान् बिभर्ति[६] । अर्थादधःस्थेषु मर्त्यलोकेषु सूर्यप्रकाशस्त्रिगुणमात्रायामुपरिस्थेषु च स्वल्पमात्रायां विद्यते तत एवाह श्रुतिरेकेन पादेनाऽमृतान् त्रिभिश्च मर्त्यान् पोषयति[७]। सिद्धमिदं यत् मरुत्संयोगेनादित्या बलिनो भवन्ति ते च द्वादश सन्तो लोकलोकान्तरान् धारयन्ति । आकर्षणगुणेन चान्तरिक्षस्थाः सन्ति[८] । यथा चाह श्रुतौ—सविता यन्त्रैर्नियन्त्रणसाधनैः पृथिवीं निरालम्बनेऽन्तरिक्षे सूत्रैः कन्दुकमिवावलम्बयति । द्यां द्युलोकं दृढमुत्तानयति, अथ

---

१. मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुतद्याम् ।
ऋ० ३।५९।१ ।

२. यदा ते हर्यता हरी वावृधाते दिवे दिवे ।
आदित्ते विश्वा भुवनानि येमिरे ॥ ऋ० ८।१२।२८ ।
व्यस्तभ्नाद्रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ।
ऋ० ७।९९।३ ।

३. मल्वं बिभ्रती गुरुभृद् । अथर्व० १२।१।४८ ।

४. तै० आ० १।८।२ ।

५. अग्निर्देवानामवमो विष्णुस्तदन्तरेण सर्वाः देवताः । ऐ० ब्रा० १।१।१ ।

६. तु० गिरधरशर्मा चतुर्वेदी, 'वैदिक विज्ञान और भारतीय संस्कृति' पृ० १३ ।

७. निवेशयन्नमृतं मर्त्यञ्च । यजु० ३३।४३ ।

८. आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः ।
ऋ० १०।१६८।४ ।

सूक्ष्मेऽचलेऽन्तरिक्षे क्लेदयितारं मेघं भ्रामयति[१]।

## ( ६ ) अग्निविज्ञानात्मकं वृत्तम्

प्रजापतिर्ह वा इदमग्र एक एवास सोऽग्निमेव मुखाज्जनयाञ्चक्रे[२]। ऋग्वेदस्य प्रथमसूक्तेनैव चास्याग्नेर्विज्ञानं प्रतिपादितवान्। अग्नीतिपदेन चर्ग्वेदमुपचक्राम। तादृशोऽयं सर्वपदार्थजनक आकर्षणधारणप्रकाशनदहनज्वलनगुणवान् कथमुत्पद्यत इति विमृश्यते।

सोऽयं संघर्षणादग्निरुत्पद्यते यथा चोक्तम्—यदा काष्ठोपरि काष्ठं निधाय बाहुभिर्विलोडयन्ति तदा जातबलो जातवेदाः काष्ठतृणानि दहन् विशेषेण प्रकाशते[३]। उभे काष्ठे तेऽरणीसंज्ञके भवतः। अरण्योरग्निर्गर्भिणीषु गर्भ इव सम्यक् विद्यते[४]। सोऽग्निर्जगति त्रिधा विराजते। प्रथमोऽतिसूक्ष्मः कारणरूपेणावस्थितः। द्वितीयः सूक्ष्मो मूर्तद्रव्येषु व्याप्नोति, तृतीयः स्थूलस्सूर्यादिरूपवान् गार्हपत्यस्थश्चाग्निहोत्रादीनां यज्ञानां साधकः[५]। यो मूर्तद्रव्यव्यापी वर्तते सैव विद्युद्रूपेण विविधकार्याणि सम्पादयन् दृश्यते तेन ताम्ररजतादिधातुष्वन्तः प्रवेशितेन वैद्युतेनाग्निना सर्वे जना दूरदेशस्थं सन्देशं क्षण एव शृण्वन्ति। विद्युद्धि वायुयोगेन दूतवद् वृत्तमश्ववच्च यानं दूरं गमयति[६]। अग्निरेव विद्युतं जनयति[७]। विद्युता च कलायन्त्रचालितानि विविधानि यानानि शिल्पकलाकौशलानि च सम्पाद्यन्ते। न ह्यग्नेर्निखिलोपयोगानां निदर्शनमत्र शक्यं केवलं दिग्दर्शनार्थमृग्वेदस्य प्रथममण्डलस्य प्रथमसूक्तस्यादिमन्त्रस्यार्थमत्र[८] दिग्दर्श्यते येनाग्नेः प्राधान्यं तस्योपयोगित्वञ्च प्रकाशितः स्यात्।

---

१. सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत्।
अश्वामिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्ध सविता समुद्रम्॥
ऋ० १०।१४९।१।

२. शत० ब्रा० २।२।४।१।

३. यदी मन्थन्ति बाहुभिर्विरोचतेऽश्वो न वाज्यरुषो०। ऋ० ३।२९।६।

४. अरण्योर्निहितो जातवेदा गर्भ इव सुधितो गर्भिणीषु। ऋ० ३।२९।२।

५. ऋ० १।१६३।९।

६. ऋ० ४।७।११, ४।८।१, ७।१।१।

७. द्र० दयानन्दभाष्यम् ऋ० ७।१।४।

८. अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नाधातमम्। ऋ० १।१।१।

अत्राग्निपदेन भौतिकोऽग्निरपि गृह्यते । रूपगुणं दाहकमूर्ध्वगामिनं भास्वरमग्निमहमीळे तस्य गुणानामन्वेषणं कुर्वे । कलाकौशलयन्त्रयानचालनादिपदार्थविद्याया अग्निरेव मुख्यं कारणमस्ति । विनाग्निनेदृगुत्तमक्रिया नैव सिध्यत्यतः सर्वैर्विद्वद्भिः शिल्पिभिरग्नेः स्वभावगुणा यथावदध्यन्वेषणीयाः । पुरा ह्यार्यैर्याऽश्वविद्या शीघ्रगमनहेतुः सम्यक् सम्पादितेति श्रूयते साऽग्निविद्यैवासीत्[1] । आशुगमनहेतुत्वादश्वपदेनाग्निरप्युच्यते[2] । अयमेवाग्निर्वज्रः सर्वपदार्थोच्छेदकत्वात् स्वयमच्छेद्यत्वाच्चाश्ववद्विमानादियानानां शीघ्रं गमयितेति विज्ञायते । एषोऽग्निरश्वो भूत्वा देवेभ्यो विद्वद्भ्यः शिल्पविद्याविद्भ्यो मनुष्येभ्यः शिल्पविद्यासंगतं विमानादियानाख्यं यज्ञं वहति[3] । इत्थं शिल्पविद्यासमूहभूतस्य यज्ञस्याऽग्निरेव योनिः कारणम्[4] । अत एव सोऽग्निः पुरस्तात् विमानकलाकौशलक्रियाप्रचालनादिगुणमेनं शिल्पविद्यामयं यज्ञं दधातीति पुरोहितपदेनोच्यते । एवं विविधक्रियाजातस्य शिल्पविद्यादिक्रियाजन्यबोधसंगतस्य देवं व्यावहारिकविद्याप्रकाशकं सर्वशिल्पादिव्यवहारविद्याद्योतनार्हमृत्विजं तद्विद्यादिगुणानां दातारमादातारञ्च होतारं तद्विद्यानिष्ठानां शिल्पिनां रत्नैरतिशयेन पोषकं रत्नधातममग्निं विद्वांसः कर्मसूपयोजयन्ति[5] ।

अमुमेव मन्त्रं गिरधरशर्माऽऽचार्योऽपि व्याचष्टे[6] । सोऽयं भूतानां प्राणयिता वनस्पतीनाञ्च प्रवर्धयिता सर्वपदार्थानाञ्च जनयिता विद्यते[7] । अग्निर्वनस्पतीन् कथं वर्धयतीति जिज्ञासायामुच्यते—आदित्ये भवोऽग्निः सौराग्निपदेन व्याख्यायते । पादपानां पादेषु यज्जलमवसेच्यते तं रसं स्वभावत एवाऽऽदित्य आदत्ते । रसादानात् कार्श्यमापद्यमानास्तरवो लतारूपं भजन्ते । यथा यथा तरव अवनिभ्योऽन्यं रसं गृह्णन्ति तथा तथा मरीचिमाली मरीचिभी रसं गृह्णाति । तेनादानप्रदानेन वनस्पतयः फलन्ति । रसस्योर्ध्वसर्पणाद्वृद्धिस्तिर्यक्-

---

१. द्र० शत० ब्रा० २।१।४।१६ ।

२. अग्निर्वा अश्वः । शत० ब्रा० ३।६।२।५ ।

३. अश्वो ह एष भूत्वा देवेभ्यो यज्ञं वहति । शत० ब्रा० १।४।१।३० ।

४. अग्निर्वै योनिर्यज्ञस्य । शत० ब्रा० १।५।२।१४ ।

५. द्र० ऋग्वेदादिभाष्यभूमिकापरिशिष्टे पृ० ७ ।

६. वैदिक विज्ञान और भारतीय संस्कृति पृ० १६४–१७० ।

७. अग्निर्वै शर्माण्यन्नाद्यानि यच्छति । ऐ० ब्रा० २।५।४१ ।

सर्पणाच्च पुष्टिः पत्राच्छादनञ्च बीजापेक्षमेव रसादानमाकृतिश्च। उर्व्या रसः कृष्णनीलवर्णो भवति सूर्यस्योत्तापश्च रक्तपीतवर्णः[१]। उभयमिश्रणाद्धरितवर्ण उत्पद्यते ततो हरितवर्णा हरितरूपिणाः शाखिनो भवन्ति। यदा केनापि व्याघातहेतुना भूमेर्रसो वृक्षं नोपसर्पति तदा केवलमादित्यस्य प्रखरप्रतापात् क्षुपाः पीतवर्णा जायन्ते नीरसाश्च भवन्ति। एतेनावज्ञायते यदग्निना विना वनस्पतयो न जायन्ते[२]।

## ( ७ ) वायुविज्ञानात्मकं वृत्तम्

अथ वायुविज्ञानं निरूप्यते। तत्र वायोः किं स्वरूपमिति प्रथमं विवेच्यते। वायुरिति मध्यस्थानीदेवतासु पठितत्वात्[३] मध्येऽन्तरिक्षेऽवस्थितः कश्चिद् भौतिकः पदार्थः। वायुरिति शब्दो 'वागतिगन्धनयोः' धातोः सिध्यति। वाति प्रवहति गच्छति हिनस्ति च पदार्थानिति वायुः। अयमन्तरिक्षेऽवस्थितः सर्वपदार्थेषु स्वकीयगतिगुणेन व्याप्तो रक्षकश्चास्ते[४] गतिमत्वाच्च पदार्थान् स्वतन्त्रसत्तारूपेणावस्थापयति[५]। स एव जातवेदा, यच्च किञ्चिज्जगति दृश्यते तत्सर्वं वायुप्रभावेणैव[६]। मनुष्याणां नाकस्य कारणभूतोऽप्ययमेव[७]। स एष त्रिषु लोकेषु व्याप्त-[८]श्चक्षुर्भ्यामलक्ष्यः स्पर्शेन लक्ष्यते एवमयं द्विधा प्रवहति ब्रह्माण्डस्थः शरीरस्थश्च[९]। तस्यैवंभूतस्य वायोर्योनिरुत्पत्तिस्थानञ्च विचार्यते।

---

१. पिशङ्गं द्रापिं प्रतिमुञ्चते कविः०। ऋ० ४।५३।२।

२. तु० वैदिकविज्ञान और भारतीय संस्कृति पृ० १६४-१७०।

३. अथातो मध्यस्थाना देवतास्तासां वायुः प्रथमागामी भवति।
द्र० नि० १०।१।

४. ऋ० १।२।१।

५. अयं वै वायुर्योऽयं पवत एष वा इदं सर्वं विविनक्ति यदिदं किञ्च विविच्यते। शत० ब्रा० १।१।४।२२।

६. वायुर्वै जातवेदा वायुर्हीदं सर्वं करोति यदिदं किञ्च।
ऐ० ब्रा० २।५।३४।

७. अयं वै तार्क्ष्यो योऽयं पवत। एषः स्वर्गस्य लोकस्याभिवोढा।
ऐ० ब्रा० ४।३।२०।

८. वायुर्वा आशुस्त्रिवृत् स एष त्रिषु लोकेषु वर्तते।
शत० ब्रा० ८।४।१।९।

९. द्वाविमौ वातौ वात आसिन्धोरापरावतः। अथर्व० ४।१३।२।

वायव आम्नायेषु पृश्निमातर इति पदेन व्यपदिश्यन्ते[1]। पृश्निराकाशमन्तरिक्षं[2] माता, उत्पत्तिनिमित्तं येषां ते पृश्निमातरो वायवः। यथाऽपत्यानि मातरमभितः परिक्रामन्ति। तथैवेमे वायवोऽपि स्वमातृस्थानेऽन्तरिक्ष एव वसन्ति[3]। अन्तरिक्षस्याध्यक्षोऽपि वायुरेव[4]। स एव ब्रह्माण्डस्थोऽस्मत् पार्थिवाग्नेः साधकः। नैतेन विनाऽग्निः प्रज्वलति[5]। न चैवंभूतया विद्युता विना कस्यचित् पदार्थस्य वृद्धिः स्थितिर्वा सम्भवति। नहि वायुगणेन विना कथनं श्रवणं श्वसनं प्राणधारिणां प्राणनञ्चापि सम्भवन्ति। अयमेव सर्वेषां प्राणिनां प्राणयिता श्वासयिता च। पवनस्य योगेनैव शब्दोच्चारणसाधिका वाक् प्रवर्तते[6]। दृढगुणयुक्तानां वायूनां संयोगेनैव विस्तृतवेगस्वभावा विद्युदुत्पद्यते[7]। तथा च विद्युता लोकधारणं जायते ततो वायुरपि सूर्यादिलोकानन्तरिक्षे स्वकक्षायां धारयति[8]। यथा जीर्णावस्थां प्राप्तः कश्चिद्राजा रोगैः शत्रूणां भयेन वैजति। तथा मरुद्भिः परितो धारितः पृथिवीलोकः स्वपरिधौ प्रतिक्षणं भ्रमत्येवं सर्वे लोकाश्च। नहि वायुना विना कस्यचिल्लोकस्य स्थितिः भ्रमणं वा सम्भवति।

स एव सर्वविमानस्थानां धारणनिमित्तो गमनशीलश्चास्ति। अस्यैवाकर्षणगुणेन रथनेमिर्धार्यते[9]। स एवान्तरिक्षे स्थित ओषधीषु रसं जनयति[10] वृष्टिहेतुत्वात्। वायुनैव वृष्टिर्जायते[11]। वायव एव जलावयवान् घनीकृत्य घनाकारं मेघरूपं कृत्वा दिवसेऽन्धकारं जनयित्वा विद्युतमुत्पाद्य तया तान् छित्वा भूमिं प्रति निपात्य जलैरुर्वीं

---

१. ऋ० १।३८।४, ५।५७।२–३।

२. पृश्निम् = आकाशम्। द्र० दयानन्दः, ऋग्भाष्यम् ५।५७।२।

३. दिवि रुद्रासो अधि चक्रिरे सदः। ऋ० १।८५।२॥

४. वायुर्वान्तरिक्षस्याध्यक्षः। तै० ब्रा० ३।२।१।३।

५. ऋ० १।२३।७।

६. वायो तव प्रपृञ्चती धेना जिगाति दाशुषे। ऋ० १।२।३।

७. जयतामिव तन्यतुर्मरुतामेति धृष्णुया। द्र० दयानन्दः ऋग्भाष्यम् १।२३।११।

८. ऋ० १।२।५।

९. स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम्। ऋ० १।३८।१२।

१०. य आसिञ्चन्ति रसमोषधीषु०। अथर्व० ४।२७।२, ऋ० १।२।६।

११. ऋ० १।८५।८।

स्निग्धां विधायौषध्यादिसमूहाञ्जनयन्ति[1]। स वायुः शरीरस्य जगतश्च धारको वर्तते। तत एव वायोर्जगति प्राधान्यमस्ति।

## ( ८ ) शब्दविज्ञानात्मकं वृत्तम्

अथ शब्दविज्ञानं निदर्श्यते। शब्दैर्विना जनानां भुवनत्रयाणाञ्च सर्वे क्रियाव्यवहाराः शून्यतामुपगच्छेयुः[2]। शब्दा एव भाषाया मूलं तैरेव ज्ञानविज्ञानयोः प्रकाशो भावानां चाभिव्यक्तिर्जायते लोकव्यवहाराश्च सिध्यन्ति। यथा चोक्तम् यास्काचार्येण 'अणीयस्त्वाच्च संज्ञाकरणं व्यवहारार्थं लोके'[3]।

ते शब्दा नित्या अनित्या वा इत्ययं विषयो विविधेषु दर्शनेषु व्याकरणे च बहुशः प्रपञ्च्यते नात्रास्यावसरः। अत्र तु निरुक्तदिशा इदमेवाङ्गीक्रियते यच्छब्दा वियति व्याप्तिमन्तो नित्याश्च सन्ति। उच्चारणकालात् पूर्वमेवान्तरिक्षे विद्यन्ते तत एव ध्वनिग्राहककलायन्त्रमप्यन्तरिक्षस्थान् शब्दान् विद्युच्छक्त्या ग्रहीतुं प्रभवति। अनित्ये सति कथं ध्वनिग्राहकः शब्दं प्रतिसारयेत्।

शब्दमहत्त्वं श्रुतिरपि प्रतिपादयति तद्यथा—इमास्तिस्रो दिव्यगुणवत्यो देव्यो मर्त्येभ्यः सुखवर्षयित्र्यः सन्ति। या पठनपाठनप्रेरिका वाक् भवति सा 'इळा', या ज्ञानप्रकाशिका सा 'सरस्वती', या च सर्वथा पूज्या कुतर्केण ह्यखण्डनीया सर्वसुखा नीतिः सा 'मही' पदेनोच्यते। एतादृशीं त्रिविधां वाचमभिज्ञायैव मनुष्याः सुखमवाप्नुवन्ति[4]। तथैव च शब्दब्रह्मणः शबलस्वरूपमपि प्रतिपाद्यते[5]—

अस्य शब्दब्रह्मणश्चत्वारि शृङ्गानि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च भवन्ति। त्रयोऽस्य पादास्त्रयः काला भूत-

---

१. द्र० ऋ० १।२ ( निखिलं सूक्तम् )

२. इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥ काव्यादर्श १।४।

३. नि० १।२।

४. द्र० दयानन्दभाष्यम्। इळा सरस्वती मही तिस्रो देवीर्मयोभुवः।
बर्हिः सीदन्त्वस्रिधः। ऋ० १।१३।९।

५. चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥
ऋ० ४।५८।३।

भविष्यद्वर्तमानाः। द्वे शीर्षे द्वौ शब्दाऽऽत्मानौ नित्यः कार्यश्च। याः सप्तविभक्तयस्ते सप्तहस्तासः। त्रिधा बद्धस्त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति। वृषभः सुखस्य वर्षको रोरवीति शब्दायते। स महादेवो महान् दिव्यगुणवान् देवो मर्त्यान् मनुष्यानाविवेश प्राप्नोति, अर्थात् भावाभिव्यञ्जिका वाग् मर्त्येष्वेव विराजते। सा वाक् परमात्मना चतुर्धा सृष्टा। ओङ्कारो महाव्याहृतयश्चेत्यार्षम्, नामाख्यातोपसर्गनिपाताश्चेति वैयाकरणाः, मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीत्येके, पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः। तत एव मनुष्या वैखरीं वाचं वदन्ति। तासु चतसृषु वाक्षु साधारणजनास्तुरीयं वाचमेव जानन्ति मनीषिणश्च चतस्र एव जानन्ति[1]। अतः शब्दा ज्ञातव्याः प्रयोक्तव्याश्च।

## (९) दूरसंचार–आकाशवाणी–दूरदर्शनविज्ञानात्मकं वृत्तम्

वेदेषु बहूनां सूक्तानां मरुतो देवताः समुपलभ्यन्ते। एतेषां मरुतां वर्णनं सर्वत्र बहुवचन एव दृश्यते। तत्र विचार्यते यदिदं दूरसञ्चाराख्यं यन्त्रं केन शक्तिना निर्मितं, ध्वनिं प्रहिणोति कथञ्चाकाशवाणीयन्त्रं ध्वनिं सारयति दूरदर्शनञ्च केनाधारेण रूपाणि चित्रयति। तत्र मरुद्विज्ञानस्य निदर्शनमावश्यकं प्रतिभाति।

### (क) मरुतां निर्वचनम्—

निघण्टौ मरुत्[2] इति मरुत[3] इति चाम्नायेते तत्र मरुत् हि हिरण्यं भवति कस्मात्? मितममितं वा रोचते मितममितं वा रोचयति मातेः पूर्वार्द्धं रौतेर्वोत्तरार्द्धम्। हिरण्यं ह्यग्न्यादितेजस्विपदार्थेभ्यो मितं भोगादिभ्यो मितं रोचते, अर्थिभ्यो दीयमानं लोकद्वयेऽपि कीर्तिं कारयति। अयमेवार्थिहस्तस्थो रौति रोचते च। यद्वा म्रियतेर्धातोर्रुति

---

१. नि० १३।६।

द्र० मैत्रायणीसंहिता १।११।५।

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥
ऋ० १।१६४।४५।

२. निघ० १।२, ३।७।

३. निघ० ३।१८, ५।५।

प्रत्यये रूपम्। म्रियन्तेऽनेन पुरुषा इति मरुत्। हिरण्यार्थं हि तस्कराः पुरुषं व्यापादयन्ति[1]।

मरुत इति पदनामसु पठिताः। मितं रुवन्ति विद्युदाविष्टं च शब्दं मितमेव व्यञ्जन्ति, अमितं वा बहुप्रकारं रुवन्ति स्तनयित्नुलक्षणं शब्दं कुर्वन्ति महदुच्चैर्द्रवन्ति महदन्तरिक्षं द्रवन्तीति वा मरुतः[2]।

अथवा मरुतो देवताः। मरुतो मितराविणो भवन्ति मितरोचिनो भवन्ति महद्द्रवन्तीति वा[3]। मितं संक्षिप्तमेकरसं ध्वनिं कुर्वाणाः, मितमेकरसं ज्वलयन्तः महदतीव द्रवन्तः सर्पन्तः सततं विचरन्ति। तादृशां मरुतां गणो मरुद्गणो वर्तते। तेषामाधारे सर्वे लोकाः क्राम्यन्ति तेषामाधारे विद्युत्प्रवाहाश्च व्रजन्ति वस्तुतस्तु ते विद्युन्मयशक्तिमन्तः सन्ति तेषामेषाग्र्भवति—

'आ विद्युन्मद्भिर्मरुतः स्वर्कैः रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः[4]॥

शतपथब्राह्मणे व्याख्यातम् "सप्त सप्त हि मारुतो गणः"[5]। इयमेवर्चा च निरुक्तशास्त्रे व्याख्याता[6]। अस्या अयमर्थः—हे मरुत्स्तराः। यूयं विद्युद्युक्तैः स्वर्कैः सुगमनैः स्वच्छनैः सुप्रशंसनीयैः स्वर्चिभिः सुदीप्ततरङ्गैः स्वकीयरमणयोग्यै रथरूपैर्मेघैरागच्छत। अस्त्रशक्तिमद्भिरश्वैरिव पतनसाधनवद्भी रथैरायात। अथ चाऽस्मभ्यं वर्षिष्ठेन वृष्टया प्रवृद्धमन्नं सम्पादयत। यूयं सुमायाः कल्याणकर्माणो यद्वा कल्याणप्रज्ञावन्तः पक्षिण इव त्वरितमागच्छत अत्र मरुतां वृष्टिकरणाय (मरुतो वै वर्षस्येशते[7]) विद्युन्मन्त ऋष्टिमन्तो रथा

---

१. दुर्गभाष्यम् निघ० १।२।

२. दुर्गभाष्यम् निघ० ५।५।

३. नि० ११।१३।

४. ऋ० १।८८।१।

५. शत० ब्रा० २।५।१।१३।

द्र० अथ ये ते मारुता रश्मयस्ते सप्त सप्तकपाला भवन्ति।
सप्त सप्त हि मारुताः गणाः। शत० ब्रा० ६।३।१।२५।

द्र० आ रोदसी आपृणोदोत मध्यं पञ्च देवाँ ऋतुशः सप्त सप्त।
ऋ० १०।५५।३।

६. नि० ११।१४।

७. शत० ब्रा० ६।१।२।५।

द्र० तां न इषमूर्जं धत्तं मरुतः सं रराणाः। यजु० १७।१।

उक्तास्ते खल्वालङ्कारिकत्वेन । विद्युत् हि मरुतामनुव्रजति । पूर्वं मरुतो रुवन्ति तदा विद्युद्विद्योतते तत एव विद्युद्रथवन्त इमे । तदीदृगेव वर्णितं यास्केन[1]। प्रथमगणस्य मरुतां मेघस्य पातयितॄणां समुदाहरणार्थमिदं मनुष्याणामुपयोगार्थमन्यस्तरवर्तिनां मरुतां कार्यं पृथिव्यादि भ्रामणम्[2] ।

सम्प्रत्यत्र विवेच्यते यत्ते मरुतः कति कीदृग्गुणवन्तः सन्ति कुत्र च तेषां वासः कश्च तेषामुपयोगो व्यवहारेषु नित्यनैमित्तिकेषु सम्भवति ।

ते मरुतस्तरङ्गाः[3] सन्ति रश्म्यर्थेष्वपि युज्यन्ते[4]। ते बहवोऽसंख्याताः सन्तोऽपि सप्त सप्त गणेषु विभक्ताः । यथा चोक्तम्—"सप्त सप्त हि मारुताः गणाः"[5] । येऽग्निरूपाः प्रकाशस्य तरङ्गरूपा भूत्वैकस्मात्स्थानादन्यं स्थानं गच्छन्ति यथा सूर्यात् पृथिवीमायान्ति ते तरङ्गास्तस्य प्रकाशस्य रश्मय उच्यन्ते। रश्मयस्तरङ्गा वा नात्र कश्चिद्विभेदः । अतो रश्मयोऽपि सप्तविधा एव भवन्ति[6]। रश्मिनामसु सप्तऋषय इति पदं पठितम्[7]। यस्य मूलं निगमेषु बहुत्रोपलभ्यते[8]।

---

१. मनुष्यवद्देवताभिधानम् नि० १।२ ।
द्र० ब्रह्ममुनिभाष्यम् । मनुष्या अपि शत्रुहननाय संग्रामे विद्युन्मद्भिः ऋष्टिमद्भिः रथैर्गच्छन्तु । नि० ११।१४ ।

२. येषामज्मेषु पृथिवी जुजुर्वां इव विश्पतिः । भिया यामेषु रेजते ।
ऋ० १।३७।८ ।
आ ये विश्वा पार्थिवानि पप्रथन् रोचना दिवः ।
मरुतः सोमपीतये । ऋ० ८।९४।९ ।

३. द्र० ब्रह्ममुनिभाष्यम् । स्वर्चिभिः सुदीप्ततरङ्गैः । नि० ११।१४ ।

४. मरुतो रश्मयः । ताण्डयब्राह्मणम् १४।१२।९। शत० ब्रा० ९।३।१।२५।

५. शत० ब्रा० ९।३।१।२५, २।५।१।१३, ५।४।३।१७ ।

६. सप्तरश्मिः । ऋ० २।१२।१२, २।१८।१ ।

७. निघ० १।५ ।

८. सप्त युञ्जन्ति रथमेकचक्रम् । ऋ० १।१६४।२ ।
इत्यत्र सप्त आदित्यरश्मयः । द्र० नि० ४।२६ ।
यत्रा सप्त ऋषीन् पर एकमाहुः । ऋ० १०।८२।२ ।
सप्तऋषयः प्रतिहिताः शरीरे । यजु० ३४।५५ ।
तदासत ऋषयः सप्त साकम् । अथर्व० १०।८।९ ।

सप्ताश्वा भवन्ति, अश्वा अपि रश्मय एवोच्यन्ते[1]। यथैते मरुद्गणाः सप्त भवन्ति, तथैव तैः सदृशा एव सप्ततरङ्गा रश्मयो वाऽद्यतनै-र्विज्ञानविद्भिरित्थ कीर्त्यन्ते—१-वायरलैस वेव्स् २-उष्मणो रश्मयः ( इनफ्रारेड वेव्स् ) ३-प्रकाशरश्मयः ४-पराकासनीतरङ्गाः ( अल्ट्रा-वायलट् वेव्स् ) ५-क्षरश्मयः ( एक्सरेज ) ६-रेडियम रेज ७-विश्व-रश्मयः ( कौस्मिक रेज )[2]।

एतेषु सप्तसु मरुद्गणेष्वेकैको गणोऽसंख्यभेदात्मकः सन्नपि सप्तो-पविभागेष्वन्तर्धीयते विभज्यते च। तद्यथा प्रकाशरश्मयः क्रमेण रक्त-पीत-नारङ्ग-हरित-नीलश्यावपाटलवर्णवत्यो भवन्ति। एतासां युगपत् संमिश्रणात् श्वेतः प्रकाशो दृश्यते एवमेवाऽन्येऽपि मरुद्गणाः सप्त-स्वोपविभागेषु विभाजनीयाः।

एतेषां तरङ्गाणामायाम आ एकस्माद् दशखर्वगुणं यावद्भिद्यते। येषामायामो यथा यथा दीर्घतरस्तेषां तरङ्गाणां प्रवेशनशक्तिः सुदूरगमनञ्च तथा तथाऽल्पतरः। यैषामायामश्च यथा यथा सूक्ष्म-तरस्तेषां प्रवेशनशक्तिः सुदूरगमनञ्च तथा तथा महत्तरं विद्यते[3]।

## ( ख ) मरुतामुत्पत्तिर्वासस्थानञ्च—

मरुतो ह्यन्तरिक्षादुत्पद्यन्ते[4]ऽन्तरिक्ष एव च वसन्ति। द्यौरेवैतेषां सदनम्[5]। वेदेषु यत्र तत्र पृश्निमातर इति पदेन वक्ष्यन्ते[6]। पृश्नि-रित्यन्तरिक्षनाम,[7] अन्तरिक्षो मातेव येषां ते पृश्निमातरो मरुतः। अथ चैते रुद्राज्जातास्ततो रुद्रिया[8] रुद्रियासो[9] रुद्रासो[10] रुद्रस्य

---

१. द्र० ऋ० ५।४५।९।

२. द्र० आशानन्द पञ्चरत्न, रोगपरीक्षापद्धति पृ० ५२२।

३. तत्रैव।

४. ते जज्ञिरे दिवः। ऋ० १।६४।२।

५. दिवि रुद्रासो अधि चक्रिरे सदः। ऋ० १।८५।२।

६. ऋ० १।३८।४, ५।५७।२,३, अथर्व० १३।१।२३,५।२१।११,८।७।२१, १३।१।३, ४।२७।२।

७. द्र० नि० २।१४।

८. ऋ० ३।२६।५।

९. ऋ० ५।५८.७।

१०. ऋ० १।८५।२, ५।५७।१।

सूनव[1] इति विविधैः पदैराम्नाताः। अत्र रुद्र इत्यग्निर्भवति। अग्निरेव रुद्रो भवति[2] तत एते मरुतोऽग्निना जाताः। अतो मरुतां पृश्निर्माता रुद्रश्च पितेति।

वैदिकवाङ्मये मरुतां विविधगुणाः कीर्तितास्तद्यथा—ऐश्वर्यम्—मरुतोऽन्तरिक्षे सर्वत्र व्याप्ताः सन्ति[3] तत एवर्क्संहितायां विष्णुरिति पदेन व्याख्याताः[4]। एते सर्वे मरुतः परस्परं समानप्रीतिमन्तः सुसदृशः[5] सवयसः[6] सन्ति। एते ऐश्वर्यवन्तो हिरण्यवत्कान्तिमन्तः सुरूपवन्तश्च भवन्ति। तरङ्गा अपि सर्वत्र व्याप्ताः। उत्पत्तिसमानत्वात् सवयसः। सर्वे तरङ्गाः सृष्ट्यादौ सृष्टा विधात्रा। अथ चैकस्यां मातरि गर्भेऽवस्थानाद् भ्रातरः[7]। विविधकार्यसंपादनादैश्वर्यवन्तो विद्युद्वहनात् प्रकाशवहनाच्च हिरण्यसदृशकान्तिमन्तः सुरूपाश्च सन्ति। तस्मात् मरुत्पदेन सर्वत्र तरङ्गाणामेव वर्णनं विहितं वेदेषु द्वयोः सदृशत्वात् सदृशरूपकार्यत्वाच्च।

तेषां मरुतामालङ्कारिकं वर्णनं सन्दृश्यते मनुष्यवद्देवताभिधानमिति सामर्थ्यात्। तद्यथा हे मरुतः! यूयं मर्तासः स्यातन[8] = मनुष्याः मनुष्यरूपिणो वा भवत। अथ च मरुतो अस्तु मर्त्यः[9] = मरुता एव मर्त्याः भवन्ति, तेषां मनुष्यवत् सन्देशवहनाद् भाषणाद् रूपचित्रणाच्च। अत्र तात्स्थ्योपाधिसम्बन्धेन सदृशोपाधिसम्बन्धेन वा मरुतां मर्त्यत्वम्। विद्युदाविष्टेषु मरुत्सु मर्त्यानामावेश इव प्रतीयते, मर्त्यवत् कार्यकरणात्। यथा मर्त्याः सन्देशं वहन्ति ध्वनिमभिव्यञ्जन्ति रूपं चित्रयन्ति तथैवेमे मरुतोऽपि दूरसञ्चार-आकाशवाणी-दूरदर्शनाख्यैर्यन्त्रैः कार्याणि सम्पादयन्ति। यथा कस्यचिन्महीभृतः प्रतिनिधिर्महीपतिरिवाचरते नरैश्च महीपतिवदेवाभिमन्यते तथैवेते मरुतो मर्त्यवदा-

१. ऋ० १।८५।१।
२. त्वमग्ने रुद्रो असुरो महो दिवः। ऋ० २।१।६।
३. मरुत आववर्त। ऋ० १।१६५।२।
४. ऋ० २।३४।११।
५. सजोषसः। ऋ० ५।५७।१, सुसदृशसः। ऋ० ५।५७।४।
६. सवयसः सनीळाः। ऋ० १।१६५।१।
७. प्र भ्रातृत्वं······मातुर्गर्भे०। ऋ० ८।८३।८।
८. ऋ० १।३८।४।
९. ऋ० १।८६।७।

चरणान्मर्त्या भवन्ति। विविधकार्यसम्पादनाय चैतेषामैश्वर्यत्वं नितरामावश्यकमपि।

मनुष्यसदृशत्वमप्यलङ्कारूपेणैवेतेषामिदञ्च वर्णनं प्रभूतं हृदयङ्गमम्। 'आख्यानप्रिया हि देवाः' इति वचनेन मरुतां काल्पनिकमनुष्यरूपेण वर्णनं विहितं तद्यथा—ते मरुतो नानाविधैराभरणैः स्वकीयशरीराण्यलङ्कुर्वन्ति। शिरःसु हिरण्यमुष्णीषं बाह्वोरोजोंऽसयोरायुधानि वक्षःसु रुक्मवन्तमाभरणं भरन्ति, सर्वावयेषु च निखिलां श्रियं बिभ्रति। तादृशा मनुष्याकारा मरुतोऽन्तरिक्षात् प्रादुर्भवन्ति[1]।

एवं ते दिव्यबलवन्तः सन्ति स्वबलेन जनान् व्यापारेषु योजयन्ति[2]। कथमिति जिज्ञासायां वक्तुं शक्यते—यदा मरीचिमाल्युदेति तदा तत्कालीना विशिष्टास्तरङ्गा मनुष्यहृदयमुद्वेलयन्ति कार्यंकरणाय च प्रचोदयन्ति तस्मादुदिते भगवति नारायणे जना क्रियाव्यापारेष्वभियुञ्जन्ति[3]। सविता एव तान् सततं प्रेरयति। एते मरुत उग्रा[4] धृष्टबला मृग इव भीमा[5] घर्षणशीलाश्च[6] सन्ति। स्वबलेन पर्वतान् प्रकृष्टेन चालयन्ति, वनस्पतींश्च विभजन्ति,[7] शैलान् मेघान् वा घ्नन्ति,[8] दिवं

---

१. वाशीमन्त ऋष्टिमन्तो मनीषिणः सुधन्वान इषुमन्तो निषङ्गिणः।
स्वाश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभम्॥
ऋ० ५।५७।२।

चित्रैरञ्जिभिर्वपुषे व्यञ्जते वक्षःसु रुक्माँ अधि येतिरे शुभे।
अंसेष्वेषां निमिमृक्षुर्ऋष्टयः साकं जज्ञिरे स्वधया दिवो नरः॥
ऋ० १।६४।४।

ऋष्टयो वो मरुतो अंसयोरधि सह ओजो बाह्वोर्वलं हितम्।
नृम्णा शीर्षस्वायुधा रथेषु वो विश्वा वः श्रीरधि तनूषु पिपिशे॥
ऋ० ५।५७।६।

२. मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन गिरीँरचुच्यवीतन।
ऋ० १।३७।१२।

३. सविता सर्वस्य प्रसविता। नि० १०।३१।

४. ऋ० १।२३।१०।

५. धारावरा मरुतो धृष्णवोजसो मृगा न भीमा०। ऋ० २।३४।१।

६. घृष्वयः। ऋ० १।८५।१।

७. प्र वेपयन्ति पर्वतान् विविञ्चन्ति वनस्पतीन्। ऋ० १।३९।५।

८. ऋ० १।६४।११।

धुन्वन्ति पृथिवींश्च कोपयन्ति,[1] सिन्धून् विक्षोभयन्ति[2]। विज्ञानमत्र ध्वन्यते यन्मरुतां प्रसादादेव पर्वताः स्थिताः। एत एव नदीः सिन्धूंश्च सर्पयन्ति वनस्पतीनुत्पादयन्ति वृष्टिञ्च कारयन्ति।

मरुतो मनोवद्गतयो[3] वेगेन गच्छन्तो[4] ध्रुवानपि पदार्थान् च्यावयन्ति[5]। स्वान् गुणान् प्राप्नुवन्त उपस्थितेषु कुटिलेषु मार्गेषु रथेषु स्थित्वा पक्षिण इव केनचित् पथा प्राप्तव्यं सम्पादयन्ति गच्छन्त्यागच्छन्ति च[6]। एते सङ्ग्रामेषु यज्ञेषु वा गमनशीलाः शुभस्य प्रापयितारो भवन्ति[7]।

**( ग ) ध्वनिवहम्—**

कालस्य सूक्ष्मावयवैः सार्धद्विपलैरेकः सैकिण्डाख्यो विभागो जायते। एकस्मिन् सैकिण्डे सार्धद्विपलेषु वा शब्दः द्वे क्रोशार्धं सर्पति। अथ च प्रकाश एकस्मिन् सैकिण्डे नवतिसहस्रोत्तरलक्षैकक्रोशार्धं प्रवहतीति सामान्यनियमः। परन्तु यदा शब्दो मरुत्तरङ्गेष्वारूढ आविष्टो वा भवति (विद्युत्साहाय्येनैवारूढ आविष्टो वा क्रियते यत् ब्रौडकास्टिङ्ग् इत्युच्यते) तदाऽयमतिवेगेन सहसैव दूराद्दूरतरं देशं याति। अनेन विधिना च ध्वनिराकाशमार्गेण मरुतां माध्यमेन सुदूरतरदेशान् गमयितुं शक्यते, तत्र च ध्वनिग्राहककलायन्त्रैरयं ग्रहीतुं व्यक्तुञ्च शक्यते, तदा श्रोत्रेन्द्रियेण सामान्यजनैरपि श्रूयते। एतदेवाद्यत्वे वायरलैस-रेडियो नाम्ना विश्रुतम्। तदर्थमेवैते मरुतो वेदेषु बहुधा बहुशब्दवन्तो[8]

---

१. धूनुथ द्यां पर्वतान्···कोपयथ पृथिवीम्। ऋ० ५।५७।३।

२. प्रतिष्टोभन्ति सिन्धवः। ऋ० १।१६८।८।

३. मनोजुवः। ऋ० १।८५।४।

४. रघुष्यदो रघुपत्वानः। ऋ० १।८५।६।

५. स्वसृतो ध्रुवच्युतो०। ऋ० १।६४।११।

६. उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केनचित्पथा। ऋ० १।८७।२।

७. पृषदश्वा मरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः।
ऋ० १।८९।७।

८. उदु स्वानेभिरीरत उद्रथैरुदु वायुभिः। उत् स्तोमैः पृश्निमातरः।
ऋ० ८।७।१७।

ते स्वानिनो रुद्रिया वर्षनिर्णिजः। ऋ० ३।२६।५।

द्र० वेङ्कटभाष्यम्। उत स्वानासो दिवि षन्तु। ऋ० ५।२।१०।

स्वानासः = स्वननशीलाः। इत्युक्तम् वेङ्कटाचार्येण।

दीप्तज्ञानवन्तो[1] विज्ञानं प्राप्नुवन्तोऽभ्रे[2] भवामभ्रियांवाचमुदीरयन्तीत्युच्यन्ते[3]। यदा खलु मरुतो यान्ति तदानीं मार्गेऽमी सजूर्वर्तमानाः शब्दायन्ते। तं शब्दं कश्चिदेव वैज्ञानिकः शृणोति कलायन्त्रसाहाय्येन। नैव साधारणजनाः सामान्यशब्दवच्छृण्वन्ति[4]।

**( घ ) रूपवहनम्—**

यथा पूर्वं मरुद्भेदेषु प्रतिपादितं यन्मरुतो विविधवर्णाः सन्ति। ते रूपं छायां प्रकाशञ्च देशाद्देशान्तरं वहन्ति। इत्थं ते रूपमाकृतिं वा सुदूरस्थेभ्यो जनेभ्यः प्रदर्शयन्ति। एतेषां माध्यमेन दूरदर्शनयन्त्रं चित्राणि ध्वनिञ्च गमयति। ते दीप्तकान्तिमन्तः[5] पीतरश्मयोऽरुणरश्मयो[6] रोहितरश्मयश्च[7] सूर्येण साकं गच्छन्ति,[8] अर्थात् सूर्यप्रकाशं (कण्डकशनरूपेण) वहन्ति। मरुतोऽरुणैः पिशङ्गैः रोहितैरश्वैः कञ्चनोत्कृष्टं देशमायान्ति[9]। एते विविधवर्णा अश्वास्तरङ्गा रश्मयो वा न सर्वदा सर्वैर्जनैर्द्रष्टुं शक्यन्ते प्रत्युत विद्वद्भिर्विधिविशेषैर्द्रष्टुं दर्शयितुमुपयोक्तुं वा शक्यन्ते। तेषु मरुत्सु ये लोहितवर्णाः सन्ति त एव रूपमाकृतिं वा वहन्ति[10]। विधिविशेषैर्विद्युद्दीपसाहाय्येन लोहितरश्मय उत्पाद्यन्ते रूपवहनाय च प्रयोज्यन्ते। तै रश्मिभिरेव वयं दूरदेशस्थाः सन्त आकृतिं पश्यामः।

ते मरुतो वृष्टिमपि कारयन्ति[11] मेघान् संसिञ्चन्त्युदकञ्च वर्ध-

---

१. भ्राजदृष्टयः। ऋ० १।३१।१, १।६४।११, १।१६८।४।

२. मरुत एवयाव्नः। ऋ० २।३४।११।

३. यदभ्रियां वाचमुदीरयन्ति। ऋ० १।१६८।८।

४. यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना। शृणोति कश्चिदेषाम्॥ ऋ० १।३७।१३।

५. भ्राजदृष्टयः। ऋ० १।३१।१, १।६४।११, १।१६८।४।

६. पिशङ्गाश्वा अरुणाश्वाः। ऋ० ५।५७।४।

७. रोहितः। अथर्व० १३।१।३।

८. दिवा यान्ति मरुतः। ऋ० १।१६१।१४।

९. तेऽरुणेभिर्वरमापिशङ्गैः शुभे कं यान्ति० ऋ० १।८८।२।

१०. उपो रथेषु पृषतीरयुग्ध्वं पुष्टिर्वहति रोहितः। ऋ० १।३९।६।
पुष्टिः = रूपम्। द्र० दयानन्दभाष्यम् ऋ० १।३९।६।

११. उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा०। ऋ० ५।५५।५।
वपन्ति मरुतो मिहम्। ऋ० ८।७।४।

यन्ति[1]। वृष्टिजलं निर्णेजित्वा[2]ऽन्नमुत्पादयन्ति[3]। एतानि मरुतां सृष्टि-नियमानुकूलानि कार्याणि। यदा वर्षाभावेन दुर्भिक्षं भवेत् तदा विद्वद्भि-र्मरुतां साहाय्येन वृष्टिः कारयितव्या।

### ( ङ ) अस्त्रवहनम्—

मनीषिभिर्मरुतां साहाय्येन सङ्गरः कर्तव्यः[4]। कीदृशां मरुताम्? ये शक्तिमन्त इषुमन्तः सुधन्वा खड्गधारिणः सुरश्मिवन्तः शोभनायुध-वन्तः सन्ति तादृशैः[5]। अर्थात् यदा कश्चिज्जनः शत्रून् पराभवितुमिच्छेत् शत्रुश्च दूरदेशान्तरस्थः स्यात्तदा तं संहर्तुं स्वकीयानीषु-वाशी-शक्ति-तोमर-कुन्तादीनि युक्त्या मरुन्मार्गेण मरुद्भिर्गमयित्वा स हन्तव्यः। अद्यत्वे सुदूरस्थाः शत्रवोऽणुशक्त्यानिर्मितैर्विस्फोटकाग्निगोलकैर्हन्यन्ते। अथ च जैट्विमानेषु विस्फोटकाग्निगोलकं निधाय मरुन्मार्गेण दूरं गमयित्वा राडारयन्त्रेण सन्देशं प्रहीय शत्रवो हन्यन्ते तानि जैट-विमानानि मनुष्यविरहितानि भवन्ति। ततो ध्वन्यते यत्संवृद्धसेना-वन्तः[6] शस्त्रास्त्रवर्षयितारो[7] मरुतः शत्रून् व्यापादयितुमपि प्रभवन्ति।

तत्र दूरसञ्चार-आकाशवाणी-दूरदर्शनविज्ञानविषयेषु प्रसङ्ग-प्राप्ता वृष्ट्यन्नोत्पत्ति-युद्धविज्ञानविषयाश्चापि समासतो निरूपिताः। वेदेषु च तेषां बीजं प्रदर्शितम्।

## ( १० ) सूर्यविज्ञानात्मकं वृत्तम्

लोकानां परिक्रमणादिवृत्ते यत् संक्षेपतः सूर्यविज्ञानं प्रस्तुतं तस्य व्याख्यानाय सम्प्रति विचार्यते। को हि नाम पदार्थः पूषः—सूर्य-सवित्राऽऽदित्यवृषाकपायिप्रभृतिभिर्नामभिरभिधीयते। स कुत्र वसति कीदृक् च भवति ?।

---

१. मरुतः संमिमिक्षुः। ऋ० १।१६५।१। पयोवृधः। ऋ० १।६४।११।

२. वर्षनिर्णिजः। ऋ० ३।२६।५, ५।५७।४।

३. सुन्वन्त्यन्धः। ऋ० ५।३०।६।

४. द्र० तथो एवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति। शत० ब्रा० २।५।३।३।

५. द्र० ऋ० ५।५७।२।

६. असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्धमाना। यजु० १७। ४७। मरुतो वृद्धसेनाः। ऋ० १।१८६।८।

७. वृजव्रातासः। ऋ० १।८५।४।

सुविदितमेव यदादित्येन लोका धार्यन्ते अहोरात्रौ निर्मीयेते, नक्षत्राणि विद्योतन्ते संवत्सराणि तिथयश्चोत्पद्यन्ते, कालविभागा जायन्ते वृष्टिश्च भवति । एवमन्यानि प्रधानतमानि कार्याणि योऽयं द्युलोके रश्मिभिराकीर्णो गोलाकारः पदार्थो दृश्यते स एवादित्यः[१] । स एवैकाकी चरति[२] पूर्वस्यां दिशायामुदेति पश्चिमायां चास्तमेति । आदित्यः कस्मादादत्ते रसानादत्ते भासं ज्योतिषामादीप्तो भासेति वाऽदितेः पुत्रो वा[३] । स एव सूर्यः सर्पणादग्रेऽग्रे सरतीति प्रतीयमानत्वात् प्राणिमात्रस्य स्वकर्मणि प्रेरणात् । स्वीर्यतेर्वा,[४] वरुणेन परिधिमण्डलात्मकेन वायुना प्रेर्यत इति सूर्यः । स एव सविता वृष्टेः प्रसविता सर्वस्य वा पदार्थजातस्योत्पादयिता[५] । स द्युस्थानो भवति द्युस्थानीयासु देवतासु पठितत्वात् श्रुत्योक्तत्वाच्च । स सर्वेभ्यो महान् सर्वान् लोकान् विद्योतयति[६] ।

स सविता किं वर्णः ? इति जिज्ञासायां मन्त्रोऽयं स्मर्तुं शक्यते—

आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥

अयं सविता देवः कृष्णवर्णेन लोकेन विचरमाणो देवलोकं मर्त्यलोकञ्च व्यवस्थापयन् सुवर्णमयेन रथेन सर्वभुवनानि पश्यन् लोकेभ्यः स्वात्मानं दर्शयन्नागच्छति[७] । अत्र कृष्णेन रजसा इत्येतयोः पदयोः

---

१. नृचक्षा एष दिवो मध्य आस्त आपप्रिवान् रोदसी अन्तरिक्षम् ।
ऋ० १०।१३६।२ ।

असौ वै सूर्यो योऽसौ तपति । शाङ्खायन ब्रा० ५।८ ।

२. सूर्य एकाकी चरति । यजु० २३।१० ।

३. नि० २।१३ ।

४. नि० १२।१४ ।

५. नि० १०।३२ ।

६. महान्त्सधस्थे ध्रुव आनिषत्तोऽन्तर्द्यावा मा हिने हर्यमाणः ।
ऋ० ३।६।४ ।

वण्महाँ असि सूर्य बडादित्य महाँ असि ।
महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ असि । यजु० ३३।३९ ।
तत् सूर्यस्य देवत्वं तन्महित्वम् । यजु० ३३।३७ ।

७. द्र० सायणभाष्यम् ऋ० १।३५।२ ।

कोऽर्थ इति विवादास्पदम्। स्वामिदयानन्दस्य मत आकर्षणगुणेनाकर्षणात्मना वा रजोरूपेणेत्यर्थः[१]। उवटेन महीधरेण च आ इति पदं वर्तमान इति पदेन सह योजितम्। 'कृष्णेन रजसा' इत्यस्य च 'रात्रिलक्षणेन सह' इत्यर्थोऽकारि[२]। सायणाचार्येण गिरधरशर्मणा च पदद्वयं विस्तरेण व्याख्यातमस्य चार्थः 'काले वर्ण के लोक से'[३] इत्ययं दर्शितः। अयमेवार्थोऽत्र युक्तियुक्तः प्रतिभाति। आदित्यः स्वरश्मिप्रकाशेन पृथिवीलोकमन्तरिक्षलोकञ्चापूरयति। न ते कृष्णवर्णास्तदा भवन्ति। तस्मात्तत्र मन्त्रे 'वर्तमानः' इति पदेन ध्वन्यते यदयं सूर्यः कृष्णेन कृष्णवर्णमण्डलेन वर्तमानः सन्नन्तरिक्षे विचरति। तस्य रथोऽर्थात् परितो विचरणपथः सोममय एव। तस्मात् सोमेन सूर्यरश्मिसङ्घर्षणेन च सुवर्णरक्तपीतवर्णः प्रकाश उत्पद्यते। तेन प्रकाशेन सूर्यपथो धवलितो जायते। तत एवोक्तं हिरण्ययेन रथेन याति। स स्वयं कृष्णवर्णो विद्यते। तथैव ब्राह्मणेष्वपि व्याख्यातम्। य एष सूर्यस्तपति स एवेन्द्रः नायं पूर्वं तपति स्म। यथाऽन्ये कृष्णवर्णीयाः पदार्थाः सन्ति तादृश एवायमप्यासीत्। प्रियधामरूपेण चायं तपति[४]। इदं सूर्यस्य कृष्णवर्णत्वं विज्ञानरीत्याऽनुसन्धेयमेव।

स आदित्यो ज्योतिर्युक्तेषु नक्षत्रेष्वुत्तमं ज्योतिः[५]। उदीयमानो भूतेभ्यो रूपदर्शनाय दिव्येति[६]। चित्रविचित्रसप्तरश्मियुतो[७] जङ्गमस्य

---

१. द्र० दयानन्दः, ऋ० भा० भू० पृ० १४१-१४२।

२. उवटः महीधरः यजुर्भाष्यम् ३३।४३।

३. सायण ऋक्भाष्यम् ऋ० १।३५।२।
वैदिक विज्ञान और भारतीय संस्कृति पृ० १५।

४. द्र० एष वा इन्द्रो य एष तपति न ह वा एषोऽग्रे ततापः।
यथा हैवेदमन्तत्कृष्णमेव ँ हैवास। तेनैवैतद्वीर्येण तपति॥
शत० ब्रा० ३।४।२।१५।
तु० वैदिक विज्ञान और भारतीय संस्कृति पृ० १५।

५. इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमम्०। ऋ० १०।१७०।३।
महि ज्योतिर्बिभ्रतं त्वा विचक्षण भास्वन्तम्०। ऋ० १०।३७।८।

६. उदु त्यद् दर्शतं वपुर्दिव एति प्रतिह्वरे०। ऋ० ७।६६।१४।

७. सप्त त्वा हरितः। ऋ० १।५०।८।

स्थावरस्य चात्मरूपः स्वरश्मिभिर्द्यावापृथिव्यावापूरयति[१]। तस्यादित्यस्य बहूनि कार्याणि । तद्यथा—

**लोकधारणम्**—

आकर्षणगुणेन सविता सर्वैर्लोकैः सह वर्तमानः सर्वान् लोकान् स्वकक्षायां व्यवस्थापयन् धारयति[२]। तिस्रो देवता भूमिं धारयन्ति तिस्रो दिवम्[३]। तिस्रश्च देवता अग्निर्वायुरादित्यश्चेति न तिरोहितम्। तदेव सूर्यस्य देवत्वं महत्त्वं विद्यते योऽयं पृथुजगद्धारयति[४]। सूर्येण विना भूमिर्द्यौर्वा न धार्येते तस्यैव बन्धन एते वर्तेते[५]। यथा हि श्रुतौ "सूर्येणोत्तभिता द्यौः"[६] इत्युपदिश्यते। यदा सूर्यो द्युलोकं स्वशुक्रेण तेजसाऽऽपूरयति ज्योतींषि प्रकाशयति तदा विश्वे लोका ध्रियन्ते।[७] एवं सूर्योऽहर्निशं सर्वदैव भूगोलान् प्रतिक्षणमाकर्षति।

स एव सर्वलोकान् रुणद्धि धारयति पालयत्यन्तरिक्षे भ्रामयति[८]। स एवानड्वान्=बलशाली सविता विश्वभुवनमभिव्याप्य पृथिवीमन्तरिक्षं प्रदिशो धारयति[९]। स एव च पितृरूपः सूर्यः परिधि

---

१. आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च।
ऋ० १।११५।१।

२. तु० दयानन्दभाष्यम् यजु० ३३।४३।

३. तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्। ऋ० २।२७।८।

४. तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार। यजु० ३३।३७।

५. वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो०। यजु० ४।३६।
तु० शत० ब्रा० ३।३।४।२५-२६।

६. अथर्व० १४।१।१।

७. यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः।
आदित्ते विश्वा भुवनानि येमिरे॥ ऋ० ८।१२।३०।
व्यस्तभ्नाद्रोदसी०। ऋ० ६।८।३।
एष वै सूर्यो य एष तपति......एष इदं सर्वं विदधाति।
शत० ब्रा० २।६।३।८।

८. विश्वा रोधांसि प्रवतश्च पूर्वीर्द्यौर्ऋष्वाज्जनिमन्रेजन्त क्षाः।
आ मातरा भरति शुष्म्या गोर्नृवत् परिज्मन्नोनुवन्त वाताः॥
ऋ० ४।२२।४।

९. अनड्वान् दाधार पृथिवीमुत द्यामनड्वान् दाधारोर्वन्तरिक्षम्।
अनड्वान् दाधार प्रदिशः षडुर्वीरनड्वान् विश्वं भुवनमाविवेश॥
अथर्व० ४।११।१।

विभर्ति[१]। यथा भूमिर्भौमपदार्थान् धारयति तथाऽऽदित्यः स्वप्रकाशेन सर्वलोकानाच्छादयति[२]। तमोऽपास्य लोकान् प्रकाशयति[३]। द्यावाऽ-पृथिव्यौ ज्योतिषाऽऽपूरयति[४]। स एव दृश्यमानानि सर्वाणि ज्योतींषि द्योतयति[५] मर्त्येभ्यश्चापि ज्योतिः प्रयच्छति[६]। यतोऽचक्षुष्मतो जीवन-मन्धकारमयमेव भवति। चक्षुःशक्तिमप्ययमेव ददाति[७]।

स आदित्यः प्रजाः पोषयति[८]। तस्यै च धनमन्नं वा प्रयच्छति। भूतेभ्यो नानाविधं द्रविणं ददाति[९]। द्युलोकादन्तरिक्षलोकात् पार्थिव-लोकात् मनुष्यान् पाति[१०]। स एवामित्राणां हन्ता दस्युहन्ताऽसुरहन्ता च विद्यते[११]। न ह्यस्मिन् देदीप्यमानेऽसुरा दस्यवो वा हिंसितुमर्हन्ति। स एव शत्रोरायुधात् पाति[१२] मर्त्यान् कर्मणि प्रेरयति[१३]।

---

१. त्वया विभिन्नं भरति प्रधिं पिता। ऋ० १०।१३८।६।

२. सं विव्य इन्द्रो वृजनं न भूमा भर्ति स्वधावाँ ओपशमिव द्याम्। ऋ० १।१७३।६।

३. येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुना। ऋ० १०।३७।४।

४. उपावसि पृणक्षि रोदसी उभे। ऋ० १०।१४०।२।

५. तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य।
विश्वमाभासि रोचनम्। ऋ० १।५०।४।

६. ते हि पुत्रासो अदितेः प्र जीवसे मर्त्याय।
ज्योतिर्यच्छन्त्यजस्रम्। यजु० ३।३३।

७. सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिरुदयाँ अजस्रम्।
ऋ० १०।१३९।१, शत० ब्रा० २।३।४।३७।

८. प्रजाः पुपोष पुरुधा विराजति। ऋ० १०।१७०।१।

९. तत्सूर्य द्रविणं धेहि चित्रम्। ऋ० १०।३७।१०।
नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि। ऋ० ७।६३।४।
रायो बुध्नः। ऋ० १०।१३९।३।
यो देवेभ्य आतपति यो देवानां पुरोहितः।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये॥ यजु० ३१।२०।

१०. सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्। ऋ० १०।१५८।१।

११. अमित्रहा वृत्रहा दस्युहंतमं ज्योतिर्जज्ञे असुरहा सपत्नहा। ऋ० १०।१७०।२।

१२. पाहि नो दिद्युतः पतन्त्याः। ऋ० १०।१५८।२, द्र० १०।३७।५।

१३. उद्वेति प्रसवीता जनानाम्। ऋ० ७।६३।२।

आदित्य एव रश्मिभिर्दीव्यन् दिनं विद्योतयति तमोमयीं रात्रिञ्च विविनक्ति। सूर्योदय एव दिवसो जायतेऽस्तङ्गते च यामिनी[1]। इत्थमहोरात्राणि कालविभागाश्चापि सूर्यादेवोत्पद्यन्ते। इह सृष्टौ सर्वदा सूर्यप्रकाशेन भूगोलार्द्धं प्रकाशते भूगोलार्द्धञ्च तमोमयं तिष्ठति[2]। स एवाहोरात्रैर्निर्मिते वत्सरे द्वादशमासमधिमासञ्च निर्मिमीते[3]। तदिदं सूर्यस्य चक्रं दिवं परितः पुनः पुनर्वर्तते। अस्मिँश्चक्रे पुत्रस्थानीया अहोरात्रा भवन्ति[4]। तेनैवादित्येन चन्द्रमसः साहाय्यात् शुक्लकृष्णपक्षौ निर्मीयेते। श्रुतौ चालङ्कारूपेण वर्णनमुपलभ्यते यदिदं सूर्याचन्द्रमसौ पूर्वापरं चरन्तौ शिशू इव क्रीडन्तौ स्वपथं गच्छतः। एतयोः पूर्वापरसञ्चरणादेव ऋतवो मासाश्च जायन्ते[5]।

सूर्यादेवायने भवतः, कृष्णायनमुत्तरायणञ्च। यदा सूर्यः पूर्वस्या दक्षिणायां दिशि प्रैति तदा दक्षिणायनं कृष्णायनं वा। तत्रादित्यो न्यङ्रश्मिभिः पर्यावर्तते। तदाऽऽदित्यस्य कृशबलत्वाद् विधुर्बलवान् जायते। चन्द्रमसो बलेन सोम आप्याय्यते, शीतमुत्पद्यतेऽतो वर्षाशरद्धेमन्ता भवन्ति। शिशिरवसन्तग्रीष्मेषु चाऽऽदित्य उदङ् रश्मिभिः पर्यावर्तते ततो घोरं तपति तदाऽऽदित्या बलिनो भवन्ति[6]।

---

१. विद्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः।
पश्यन् जन्मानि सूर्य। ऋ० १।५०।७।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै। ऋ० १।११५।४।

२. एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते।
ऋ० १।९२।१।

३. अहोरात्रैर्विमितं त्रिंशदङ्गं त्रयोदशं मासं यो निर्मिमीते।
अथर्व० १३।३।८।
वेद मासो धृतव्रतो द्वादश प्रजावतः। वेदा य उपजायते। ऋ० १।२५।८।

४. द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परिद्यामृतस्य। आ पुत्रा०।
ऋ० १।१६४।११।

५. पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परियातो अध्वरम्।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः॥
ऋ० १०।८५।१८।

६. कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति।
त आववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते॥
ऋ० १।१६४।४७। (अग्रिमे पृष्ठे)

एवं द्वादशमासान् निर्मिमीते । द्वादशमासानां द्वादश एव मेषवृषादयो राशयः । एकस्मिन् राशौ सूर्यो मासं यावत्तिष्ठति । राशिश्चैकः प्रायेण सपादेन नक्षत्रद्वयेन परिगण्यते । नक्षत्राणि चाष्टाविंशतिर्भवन्ति[१] । यानि वैतानि ज्योतींषि तानि नक्षत्राणि तन्नक्षत्राणां नक्षत्रत्वं यन्न क्षियन्ति[२] । तानि नक्षत्राणि निगमेषु कीर्तितानि[३] ।

## (११) गणितविज्ञानात्मकं वृत्तम्

नक्षत्राणामुदयास्तकालावधेः कालविभागस्य यज्ञयागादिकर्मसु चेष्टकादीनां गणनायान्येभ्योऽपि व्यवहारार्थञ्च वेदेषु भूयशो गणितमुपदिष्टम् । तदधस्तान्निर्दिश्यते । इदं च ज्योतिषान्तर्गतं यतो हि ज्योतिषां सूर्यादीनां नक्षत्राणां पृथिव्यादिग्रहाणाञ्च गतिज्ञानाय सूर्यग्रहणचन्द्रग्रहणादीनां ज्ञानाय च गणितमेव शरणम् । गणितशास्त्र एकद्व्यादयः संख्यास्तासां सङ्कलनं व्यवकलनं गुणनं विभजनञ्च भवन्ति । अथर्ववेदसंहितायामेकस्मिन् सूक्त एवैका-द्वे-तिस्रश्चतस्रो षट्-सप्ता-ऽष्ट-नव-दशसंख्याः क्रमेणोपदिश्यन्ते[४] । इह हि गणितशास्त्रे सर्वत्र नवाङ्का भवन्ति ।

---

याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्याम् ।
आ देवो याति सविता० । ऋ० १।३५।३ ।
ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः ।
ऋतवस्ते विहिता हायनीरहोरात्रे पृथिवी नो दुहाताम् ॥
अथर्व० १२।१।३६ ।

१. अष्टाविंशानि शिवानि शग्मानि सह योगं भजन्तु मे ।
अथर्व० १९।८।२ ।

२. द्र० गो० ब्रा० उत्तरगोपथ १।८ ।

३. सुहवमग्ने कृत्तिका रोहिणी चास्तुभद्रं मृगशिरः शमार्द्रा ।
पुनर्वसू सूनृता चारुपुष्यो भानुराश्लेषा अयनं मघा मे ॥
पुण्यं पूर्वाफल्गुन्यो चात्रहस्तश्चित्रा शिवा स्वाति सुखो मे अस्तु ।
राधे विशाखे सुहवानुराधा ज्येष्ठा सुनक्षत्रमरिष्टमूलम् ॥
अन्नं पूर्वारासतां मे अषाढा ऊर्जं देव्युत्तरा आवहन्तु ।
अभिजिन्मे रासतां मे पुण्यमेव श्रवणः श्रविष्ठाः कुर्वतां सुपुष्टिम् ॥
आ मे महच्छतभिषग्वरीय आ मे द्वया प्रोष्ठपदा सुशर्म ।
आ रेवती चाश्वयुजौ भगं म आ मे रयिं भरण्य आवहन्तु ॥
अथर्व० १९।७।२-५ ।

४. द्र० अथर्व० ५।१५।१-१० ।

अङ्कोऽञ्चनादञ्जनाद्वा । सङ्कलनस्य सुस्पष्टो निर्देशोऽपि दृश्यते यथा ( १ + २ = ३, ४ + ४ = ८ ) एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे नव च मे नव च म एकादश च म एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश ......[1]।" चतस्रश्च मेऽष्टौ च मेऽष्टौ च मे द्वादश च मे द्वादश च मे षोडश च मे षोडश च मे विंशतिश्च मे विंशतिश्च मे चतुर्विंशतिश्च मे ...[2]। अनयोर्मन्त्रयोर्भाष्ये दयानन्दाचार्येण प्रतिपादितं यदत्र खल्वीश्वरेणाङ्कगणित-बीजगणित-रेखागणितानि प्रकाशितानि । एकार्थस्य या वाचिका संख्याऽस्ति सैकेन युक्ता द्वित्वपरिचायिका । द्वित्वसंख्या चैकेन युक्ता त्रित्वपरिचायिका । एवमेवाऽग्रेऽपि बोध्यम् । इयं तावत् क्रमवती संख्याऽपरतश्च संख्यानां सङ्कलनम् । एवमेव चतस्रश्च मे पञ्च च म इत्यादिषु परस्परं संयोगादिक्रिययाऽनेकविधाङ्कैर्गणितविद्या सिध्यति । अन्यत् खल्वत्रानेकचकाराणां पाठान्मनुष्यैरनेकधा गणितविद्याऽध्येतव्येति सिध्यति । इयमङ्कसंख्या निश्चितेषु संख्यातपदार्थेषु प्रवर्तते । ये चाज्ञातसंख्याः पदार्थास्तेषां विज्ञानार्थं बीजगणितं विद्यते । अ२ क३ इत्यादि संकेतेनैते मन्त्रा बीजगणितस्य मूलं विज्ञापयन्ति शिक्षयन्ति च तद्यथा—"अ२ ग्न३ आ१ या२ हि वी२ त१ ये२ गृणा३ नो२ ह२ व्य१ दा२ तये । नि१ हो२र ता२र सत्सि२ बर्हि१ षि२" ।[3]

एका क्रिया द्व्यर्थकरी-प्रसिद्धेति न्यायेन स्वरसङ्केताङ्कैर्बीजगणितमपि साध्यते[4]। अस्याः पृथिव्याः का सीमा काश्च नाभिर्वर्तते यया इयं धृता ?[5] इत्येतत् रेखागणितेन विज्ञायते । इयं मध्यरेखाऽस्याः पृथिव्याः परा सीमा अयञ्च जगदीश्वरो भुवनस्य नाभिर्धृतिस्थानं विद्यते[6]। अथवेयं या वेदिस्त्रिकोणचतुरस्रश्येनाकारवर्तुलाकारादियुक्ता क्रियतेऽस्या वेदेराकृतिरपि रेखागणितेन ज्ञायते । एवं पृथिव्याः परोऽन्तो यो

---

१. यजु० १८।२४ ।

२. यजु० १८।२५ ।

३. साम० १।१।१ ।

४. द्र० दयानन्दः, ऋ० भा० भू० पृ० १४६ ।

५. पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः ।
यजु० २३।६१ ।

६. इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।
यजु० २३।६२ ।

भागोऽर्थात् सर्वतो गोलाकारेण सूत्रवेष्टनवदस्ति सा परिधिरिति। नहि रेखागणितज्ञानमन्तरा कश्चिद्वेदिं कर्तुं पारयति। लोकव्यवहारेषु वैदिकेषु चेष्टकाचयनादिषु भवत्यङ्कगणितस्यावश्यकता। नहि गणितेन विना काचित् व्यवहारसिद्धिर्यज्ञसिद्धिश्च। यथा हि सोमयाग एकदशशत-सहस्रसंख्यानां ज्ञानं समादिष्टमस्ति[1] एवंविधेष्वन्येष्वपि बहूषु सूक्तेषु त्रिविधस्य गणितस्य विज्ञानं वर्तते येन वेदा नित्यव्यवहारेषूपयोगिनः सन्ति।

## (१२) यानविज्ञानात्मकं वृत्तम्

अर्थोपार्जनसाधनेषु वाणिज्यव्यवहाराय देशदेशान्तरगमनाय द्रव्यवाहनाय संदेशवहनाय शत्रुजयाय शासनप्रबन्धाय च यानविमानयो-र्विज्ञानं नितरामावश्यकम्। यानविज्ञानस्य वर्णनं यान-विमान-रथ–नौशब्दैरुपलभ्यते। ये विमानादियानान्यग्न्यादिभिर्विमिमते तेऽभीष्टं स्थानं सद्यो गन्तुं प्रभवन्ति[2]। यान्त्यनेन स्थानान्तरं तद् यानम्[3]। यानपदेन सामान्यतो जलस्थलसञ्चरणक्षमं वाहनं गृह्यते परन्तु क्वचिदाकाशचरणशीलमपि। यत्खलु विमानमुच्यते तद् विमानं हि विशेषेण मितं सूक्ष्मयन्त्रैर्निर्मितं वा भवति[4]। तदन्तरिक्षगमनार्हं भवत्यविशेषेण। रंहतिर्गच्छति यः स रथोऽथवा रममाणोऽस्मिन् तिष्ठतीति। रथपदं सामान्येनोभयोरेव वाचकम् यानविमानयोः। विश्वम्भराचार्योऽपि विमानं नानाविधं निर्वक्ति।

यद् देशाद्देशान्तरं द्वीपाद् द्वीपान्तरं लोकाल्लोकान्तरं पृथिव्य-न्तरिक्षेषु वेगतो गन्तुमर्हति तद्वाहनं खेटशास्त्रविदो विमानपदेना-चक्षते[5]।

---

१ इमा मे अग्न इष्टका धेनवः सन्त्वेका च दश च दश च शतं च शतञ्च सहस्रं च सहस्रं चायुतं च नियुतं च नियुतं च प्रयुतं च चार्बुदञ्च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्द्धश्चैता मे अग्न इष्टका धेनवः सन्त्व-मुत्रामुष्मिँल्लोके। यजु० १७।२।

२. रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः।
ऋ० ३।५८।८, द्र० ऋ० ४।११।४, यजु० ६।२१।

३. या गति प्रापणयोः।

४. शब्दकल्पद्रुमम्।

५. पृथिव्यप्स्वन्तरिक्षेषु खगवद्वेगतः स्वयम्।
यत् समर्थो भवेद् गन्तुं स विमान इति स्मृतः॥ विमानशास्त्रम्।

तादृशा विमानास्त्रिविधा भवन्ति । मान्त्रिकास्तान्त्रिकाः कृतकाश्च । तत् खलु कृतयुगे मान्त्रिकैर्मन्त्रचालितैर्विमानैः कार्यसिद्धिर्भवति स्म । द्वापरयुगे त्रेतायुगे च तान्त्रिकैः तन्त्रशास्त्रचालितैर्विमानैः, परमद्यत्वे वर्तमाने कलौ कृतकैः कलायन्त्रचालितैर्यानैः कार्यसिद्धिर्जायते । तदत्र कृतकयानानां वर्णनमेव निदर्श्यते । कृतका अपि चतुर्विधाः—

ये विहङ्गाकाराः पक्षिसदृशचञ्चुपुच्छरूपाः पक्षिवद्गतिमन्तो भवन्ति ते शकुनाभिधेयाः सन्ति साम्प्रतञ्चैरोप्लेननाम्ना श्रूयन्ते । ये खनिजपदार्थयोगैरयोनिर्मिता हिरण्यवत्कान्तिमन्तश्च भवन्ति ते रुक्मा उच्यन्ते । ये धूम्रपथधारावन्तः सुन्दराकृतिमन्तो भवन्ति ते सुन्दराऽभिधेया भवन्ति साम्प्रतिके च जैट्विमाननाम्ना श्रूयन्ते । ये जलस्थलनभःसु संचरणक्षमास्ते त्रिपुरा इति नाम्ना प्रतिपाद्यन्ते । अद्यतनीया वैज्ञानिका अप्येतान्निर्मातुं समुत्सुका यत्नशीलाश्च सन्ति एवं चतुर्विधा विमानाः शास्त्रे प्रोक्ताः[1] ।

आम्नायेषु नैकविधानां वाहनानां संकेतो दृश्यते[2] । अग्निजलसंयोगेन यन्त्रयानानि सञ्चरणक्षमाणि भवन्ति[3] तीव्रगतिमन्तश्च जायन्ते[4] । ये रथाः स्थलगामिनो मन्दगतयो भवन्ति तेऽश्वादिना पशुना सञ्चालयन्ति ये च निमेषादपि तीव्रगामिनो मनोजवा रथास्तेऽग्निजलपवनादिसंयोगेन युक्त्या चाल्यन्ते । कलायन्त्रादियुक्तेषु यानेषु नितरां विलोडितोऽग्निर्यानानि सद्यो गमयति[5] । अश्वप्राणियुक्ता रथा अन्तरिक्षे समुद्रे वा न गन्तुं प्रभवन्ति तस्माज्जलचरा नभश्चरा रथा अश्वरहिता भवन्ति । ते रथास्तृणादीनि नापेक्षन्ते[6] । यतस्तेष्वश्वादयः पशवो न

---

१. तु० विमानशास्त्रम् ।

२. अनश्वो जातो अनभीशुरुक्थ्यो रथस्त्रिचक्रः परिवर्तते रजः ।
ऋ० ४।३६।१ ।

३. युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः । ऋ० १।१४।१२ ।

४. नहि वामस्ति दूरके यत्रा रथेन गच्छथः । ऋ० १।२२।४ ।

५. निर्मथितः सुधित आ सधस्थे युवा कविरध्वरस्य प्रणेता ।
ऋ० ३।२३।१ ।

६. नास्मै तृणं नोदकमाभरन्त्युत्तरो धुरो वहति प्रदेदिशत् ।
ऋ० १०।१०२।१० ।

नियोज्यन्ते तत एव 'अनश्वासः' इति पदेनोपदिश्यन्ते[1]। तादृशा रथा एव मेघेषु दिवि सद्यो यान्ति[2] गौरकुरङ्गवत् हंसवच्च जवसा गच्छन्ति[3]। ते रथा जलचरस्थलचरनभश्चरभेदात् त्रिविधाः। तत्र पूर्वं जलचराणां यानानां संकेतो दर्श्यते।

यदा कलाकौशलभ्रमणयुक्तस्य यानस्याधोऽग्निमुपरि च जलं संस्थाप्य वायुना प्रदीपयन्ति तदैतेऽग्निजले यानं द्रुतवेगेन गमयतः[4]। तादृशेन रमणीयेनासंख्यातकेतुयुक्तेन मनोजवेन प्रज्ञया सम्पादितेन रथेन शिल्पिनः स्वाभीष्टदेशं गच्छन्ति[5]।

सिन्धुतरणाय च समुद्रीयपोता रचनीयाः[6]। ते पोता बहुधा नौपदेन वर्ण्यन्ते। दृढाभिर्बृहतीभिरन्तरप्प्रवेशादिदोषरहिताभिर्नौकाभिरेव सिन्धुस्तरणीयः[7]। यत आलम्बनविरहिते समुद्रे शतारित्रवत्यः सुदीर्घा नाव एव गन्तुं प्रभवन्ति[8]। अतः सुष्ठु त्रायन्तीं विस्तृतामपापां सुसुखामदीनां सुष्ठु निर्मितां देवसम्बन्धिनीं शोभनारित्रां निर्दोषामस्रवन्तीं नावमारुहेम[9]। एतादृशीभिर्नौभिः त्रिष्वहोरात्रेषु समुद्रस्य

---

१. अनश्वासो ये पवयोऽरथा इन्द्रेषिता०। ऋ० ५।३१।५।

२. रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः।
ऋ० ३।५८।८।

३. अश्विना हरिणाविव गौराविवानु यवसम्। हंसाविव पततमा०।
ऋ० ५।७८।२।

४. द्र० दयानन्दभाष्यम्। ऋ० ३।२९।३, १।११६।७।

५. आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे।
सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानम्०। ऋ० १।११९।१।

६. आ नो नावा मतीनां यातं पाराय गन्तवे। ऋ० १।४६।७।
उद्ना न नावमनयन्त धीरा आशृण्वतीरापो अर्वागतिष्ठन्।
ऋ० ५।४५।१०।

७. द्र० दयानन्दभाष्यम्। तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः। ऋ० १।११६।३।

८. द्र० दयानन्दभाष्यम्। अनारम्भणे······। ऋ० १।११६।५।

९. द्र० वेङ्कटभाष्यम्।
सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये॥
ऋ० १०।६३।१०।

पारं गन्तुं प्रभवन्ति[१]। एवं यः समुद्रियां नौकां जानन्ति ते सर्वविध-सुखं द्रव्यादिकञ्चाप्नुवन्ति[२]। यथा जलस्योपरि नावः सरन्ति तथैव जलस्यान्तरपि। ता उपरिष्टान्न लक्ष्यन्ते पनडुब्बीपदेन चाद्यत्वे परिगण्यन्ते[३], तथैव सिन्धोरूर्मावधि यानानि सरन्ति। केचिदाचार्याश्च लोके प्रथितं यानवाचिनं 'कार' इति पदं वैदिकं मन्यन्ते वेदमन्त्राच्च प्रसूतमिति साधयन्ति[४]।

एवमन्तरिक्षचरणशीलानि विमानानि सप्तचक्राणि निर्मायान्तरिक्षं गन्तव्यम्[५]। स एष विमानः खगवदन्तरिक्षे चरत्य[६]ग्न्यादिभिर्योजित आलम्बनविरहितेऽन्तरिक्षे च तिष्ठति[७]। यश्चैकल एव रथस्त्रिषु स्थानेषु सञ्चरणशीलो भवति स त्रिवन्धुरेण त्रिवृता रथेन त्रिचक्रेणेति पदेभ्य उपदिश्यते[८]। अयस्ताम्ररजतधातुत्रयेण च विरच्यन्ते[९]। तेषु यानेषु च वज्रतुल्याश्चक्रसमूहाः कलायन्त्रयुक्ता दृढाः शीघ्रं गमनार्थं

---

१. तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः।
समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः०। ऋ० १।११६।४।

२. वेद नावः समुद्रियः। ऋ० १।२५।७।

३. यास्ते पूषन्नावो अन्तः समुद्रे हिरण्ययीरन्तरिक्षे चरन्तीः।
ऋ० ६।५८।३।
द्र० धर्मदेव विद्यामार्तण्ड "वेदों का यथार्थ स्वरूप" पृ० १०३

४. परि प्रासिष्यदत् कविः सिन्धोरूर्मावधि श्रितः।
कारं बिभ्रत् पुरुस्पृहम्। ऋ० ९।१४।१।
द्र० धर्मदेव विद्यामार्तण्ड, "वेदों का यथार्थ स्वरूप" पृ० १०४।

५. सोमापूषणा रजसो विमानं सप्तचक्रं रथम्। ऋ० २।४।३।

६. वेद वीनां पदमन्तरिक्षेण पतताम्। ऋ० १।२५।६।

७. कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति।
ऋ० १।१६४।४७, ऋ० १।११६।५।

८. तं युञ्जाथां मनसो यो जवीयान् त्रिवन्धुरो वृषणा यस्त्रिचक्रः।
ऋ० १।१८३।१।
त्रिवन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक्॥
ऋ० १।११८।२।

९. द्र० दयानन्दभाष्यम्।
त्रिर्नो अश्विना यजता दिवे दिवे परित्रिधातु पृथिवीमशायतम्।
तिस्रो नासत्या रथ्या परावतः। ऋ० १।३४।७।
द्र० यतो नः प्रुष्णवद्वसु दिवि क्षितिभ्यो अप्स्वा। ऋ० ३।१३।४।

त्रयः कर्तव्याः। स्तम्भनार्थाः सर्वकलानां स्थापनार्थाः स्तम्भा अपि त्रयः कार्याः[1]। एवं ते द्वादशपरिधियुक्ता भवन्ति। तेषु सर्वकलायुक्तानामराणां धारका द्वादश परिधयः कर्तव्याः। मध्ये च सर्वकलाभ्रामणार्थमेकं चक्रं रचनीयम्। मध्यावयवधारणार्थानि त्रीणि यन्त्राणि रचनीयानि। तैः सह त्रिशतं शङ्कवः स्थापनीयाः। तत्र च कलाश्चलाश्चालनार्हाः स्थित्यर्हा उभयविधाश्च विधेयाः। तस्मिन् याने षष्टिसंख्यकानि कलायन्त्राणि स्थापनीयानि[2]। एतादृशानि जलस्थलनभश्चराणि यानानि भवन्ति।

अनेन प्रतीयते यथाऽद्यत्वे शोभनानि यानानि सन्ति तथा निगमेष्वपि व्याख्यातानि। ये शिल्पिनः सुवर्णमण्डितानि तेजोमयानि यानानि निर्मिमते, ये च सुदृढा नावौ भूविमानानि, अन्तरिक्षविमानानि च रचयन्ति तैश्च सर्वमभीष्टं देशं यान्ति, गमनाऽऽगमनेन च कार्याणि सम्पादयन्ति त एव सूर्यवत् प्रकाशितकीर्तयो भवन्त्यतो वैज्ञानिकैर्नानाविधानि चित्रविचित्रविमानानि कर्तव्यानि। त्रिशतेष्वश्वेषु यावद्बलं विद्यते तावद्बलमग्निजलवायुसयुक्तस्य यानस्यैककलायां विद्यते[3]।

इमानि विज्ञानानि दिग्दर्शनार्थं निदर्शितानि। इदञ्च सर्वं ज्ञानं वेदमूलकमेवेति मनीषिणोऽङ्गीकुर्वन्ति। भवन्ति चात्र—

वैज्ञानिके त्रैतसनातनानां जीवेश्वराव्यक्तगुणान् विमृश्य।
सर्गस्य लोकस्य च धारणादेर्विज्ञानमुक्तं निखिलं यथावत्॥ १॥
अग्नेश्च वायोर्निनदस्य ज्ञानं विज्ञाप्य नानामरुतां स्वरूपम्।
आकाशवाणी च सुदूरदृष्टिराविष्कृता दूरतरेण युद्धम्॥ २॥
इत्थन्तरङ्गैरनुमार्ग्य नव्यं विज्ञानमन्ते रविज्ञानमुक्तम्।
वेदैर्गदित्वा गणितस्य मूलं चित्राणि यानानि समीक्षितानि॥ ३॥

---

१. त्रयः पवयो मधुवाहने रथे······त्रयः स्कम्भासः स्कभितास आरभे।
ऋ० १।३४।२।

द्र० दयानन्दः, ऋ० भा० भू० पृ० १९४।

२. द्र० दयानन्दभाष्यम्।
द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत।
तस्मिन् साकं त्रिशतं न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥
ऋ० १।१६४।४८।

३. यो रोहितौ वाजिनौ वाजिनीवान् त्रिभिः शतैः सचमानावदिष्ट।
ऋ० ५।३६।६।

# ६. सामाजिकमधिकरणम्

## ( १ ) वर्णसमीक्षात्मकं वृत्तम्

समाजः सम्पूर्वकादजधातोर्घञ् प्रत्यये कृते सिध्यति । अजधातुर्गति-क्षेपणार्थकः । गतेरप्यर्थास्त्रयो ज्ञानं गमनं प्राप्तिश्चेति । सममजन्ति जना यस्मिन् स समाजः । सम्यक् गता संहता भवन्त्यस्मिन्नराः । मनुष्याणां समुदायः समाजशब्देन पशूनां संवट्टश्च समजशब्देनाभि-धीयते । समित्येतत् पदमाम्नायेषु समतार्थे प्रयुज्यते ।

नरैः कुटुम्बः कुटुम्बैश्च समाजो निर्मीयते । पृथक्-पृथक् वासेन बलं सुखं वा हीयतेऽतः संयुज्यैकत्र वस्तव्यम्[1] । यथाऽस्य पुरुषस्य शिरोबाहूरुपादा मुख्यावयवाः सन्ति तथैवास्य समाजरूपस्य देहस्य चत्वारो वर्णाः शिरोबाहूरुपादस्थानीयाः सन्ति । वर्णव्यवस्थाया लोपात् तैस्तैरङ्गैर्विहीनः समाजस्तत्तत्कर्मविरहितोऽव्यवस्थितश्च जायते । एवमाश्रमव्यवस्थाया अभावाद्विद्याभावो गुरुशिष्यपरम्पराभावः समाजाऽभावश्च । इत्थं वर्णा आश्रमाश्च समाजव्यवस्थाया अपरि-हार्याङ्गानि ।

यथा पुरुष एतेषामङ्गानां सहयोगेनैव सर्वकार्याणि साधयति तथैव समाजरूपः पुरुषोऽपि । अन्यथा तु पङ्गुवद् वर्तते । यथा पुरुषः पुरि प्रतिष्ठते तथैव समाजपुरुषः प्रजारूपिणि पुरि प्रतितिष्ठति । विश एव तस्य सर्वाण्यङ्गानि भवन्ति[2] ।

तत एवात्र वर्णविषयं प्रथमं विचार्यते ।

**( क ) वर्णनिर्वचनम् निष्पत्तिश्च—**

वर्ण इत्येतत्पदं शुक्लपीतादिषु, ब्राह्मणक्षत्रियादौ, शोभायामक्षरे, व्रते, गीतक्रमे, वेशे, स्वर्णे, कन्थायां, गुणे, चित्रे, यशसि, तालविशेषेऽ-

---

१. सङ्गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ।।
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभिमन्त्रये वः० । ऋ० १०।१९१।२–३ ।।

२. विशो मेऽङ्गानि सर्वतः । यजु० २०।८ ।

ङ्गरागे, कुङ्कुमे इत्येतादृशेष्वर्थेषु प्रयुज्यते[1]। तथापि संहितासु तावदेष वर्णशब्दः शुक्लकृष्णहरितादौ[2] ब्राह्मणक्षत्रियादौ[3] शोभार्थे[4] चैव प्राधान्यरूपेण दृश्यते। अत्र चास्मदभीष्टो ब्राह्मणक्षत्रियादौ प्रयुज्यमानो वर्णशब्दः। व्याकरणप्रक्रियया चास्य निष्पत्तिर्वरणार्थाद् वृञ् धातोः, सम्भजनार्थकात् वृङ् धातोः, आवरणार्थकाद् वृञ् धातोः, प्रीणनार्थकाद् वृण धातोः, ईप्सार्थकाद्वर धातोः, प्रेरणार्थकाद् वर्णनार्थकात् वर्णक्रियाविस्तारगुणवचनार्थकाद्वर्णधातोः सम्भाव्यते।

वर्णो वृणोतेरिति प्रामाण्याद् वरणीया वर्तुमर्हाः, गुणकर्माणि च दृष्ट्वा यथायोग्यं व्रियन्ते ये ते वर्णाः। अथवा व्याकरणप्रक्रियया चाप्यस्य निर्वचनं साध्यते। शम-दम-तपः शौच-क्षान्त्यार्जव-ज्ञान-विज्ञानास्तिक्यशौर्य-तेजो धृतिदाक्ष्य-युद्धोत्साहादिषु गुणेषु व्रियन्त एभिर्यथायोग्यं स्वभावानुगुणा वृत्तयस्ते ब्राह्मणक्षत्रियादिभिर्पदै-र्वाच्याः[5]। अथवाऽध्ययनाध्यापनयजनयाजनेषु, प्रजारक्षणजितेन्द्रिय-त्वादिषु, कृषिगोरक्ष्यवाणिज्येषु, शुश्रूषाप्रभृतिषु गुणेषु स्वाभीष्टं कर्म वृण्वन्ति तेऽपि ब्राह्मणक्षत्रियवैश्यशूद्रपदैर्वाच्याः[6]। यतो वर्णो व्रियते गुणकर्मानुसारतस्तत्तद्वर्णत्वाय महाजनैः सामाजिकैस्तेनाऽपि वर्णः। वृण्वन्ते स्वीकुर्वन्ति चिन्वन्ति स्वस्वरुच्या शमदमशौर्यतेजःसंग्रहण-पोषणसेवानिरभिमानतादीनां गुणानामन्यतममध्यापनरक्षणवाणिज्य-शुश्रूषाणामेकतमं कर्म समाजशरीरस्य मुखबाहूरुपादानामङ्गानामन्यत-ममङ्गभावं ये, ते वर्णा ब्राह्मणादयः।

---

१. हलायुधकोशः।
हेमचन्द्र, मानवार्षभाष्ये पृ० ६०।

२. हरितं वर्णः। अथर्व० ११।३।८।
रोहितस्य वर्णेन। अथर्व० १।२२।१-२।
कृष्णं च वर्णमरुणं च। ऋ० १।७३।७।
वर्णमतिरच्छुक्रमासाम्। अथर्व० २०।११।५।
विशतां वर्णः परा शुक्लानि पातय। अथर्व० १।२३।२।

३. हत्वी दस्यून् प्रार्यं वर्णमावत्। अथर्व० २०।११।६।
यो दासं वर्णमधरं गुहाकः। ऋ० २।१२।४।
प्रार्यं वर्णमावत्। ऋ० ३।३४।९।

४. सुश्चन्द्र वर्णं दधिरे सुपेशसम्। ऋ० २।३४।१३।

५. तु० गीता १८।४२-४३।

६ द्र० मनु० १।८८-९१।

व्रियन्ते सम्भज्यन्ते संसेव्यन्ते प्रजाजनैरध्ययनरक्षणपोषणशुश्रूषणाद्याय ये ते ब्राह्मणादयो वर्णाः । वृणन्ते सम्भजन्ति संसेव्यन्ते स्वस्वकर्मभिः समाजपुरुषं ये, ते वर्णा ब्राह्मणादयः[1] । वारयन्ति = आच्छादयन्ति रक्षयन्ति प्रजाजनान् ये स्वशमदमशौर्यादिगुणैरध्यापनरक्षणादिकर्मभिर्वा ते ब्राह्मणादयो वर्णाः । किञ्च तदर्थं धारयन्ति दूरे कुर्वन्त्यज्ञानाऽन्यायाऽऽलस्यादीन् ये प्रजाजनेभ्यस्ते वर्णा ब्राह्मणादयः[2] । वृणन्ति = प्रीणयन्ति तर्पयन्ति सुखयन्ति स्वाध्यापनरक्षणादिकर्मभिः प्रजाजनान् ते वर्णा ब्राह्मणादयः[3] । वर्यन्ते = ईप्स्यन्ते वाप्तुमिष्यन्तेऽध्ययनरक्षणाद्याय प्रजाजनैरहर्निशं ये ते वर्णा ब्राह्मणादयः । वरयन्ति ईप्सन्ति प्राप्तुमिच्छन्ति याजनाध्यापनाय शिष्यान्, रक्षणाद्याय प्रजाः, दानायार्थिनः शुश्रूषायै योग्यांश्च ये ते वर्णा ब्राह्मणादयः[4] । वर्ण्यन्ते प्रेर्यन्ते स्वस्वगुणकर्मसमाचरणाय ये संन्यासिभिरुपदेशकैः शास्त्रैर्वा ते वर्णा ब्राह्मणादयः । वर्णयन्ति प्रेरयन्ति मिथः साहाय्यदानाय ये ते वर्णा ब्राह्मणादयः[5] ।

वर्ण्यन्ते समाख्यायन्ते वाणीविषयतां लभन्ते स्वस्वगुणकर्मस्वभावोत्कर्षेण ये ते वर्णा ब्राह्मणादयः[6] । वर्णयन्ति रञ्जयन्ति प्रभावयन्ति स्वस्वगुणकर्मणामाचरणप्रदर्शनैरन्यान् ये ते वर्णा ब्राह्मणादयः । ये वर्णयन्ति विस्तारयन्ति स्वाध्याययज्ञदानादिगुणान्, अध्यापनरक्षणादिकर्माणि वा पुत्रशिष्यादिषु ते वर्णा ब्राह्मणादयः ये वर्ण्यन्ते गुणप्रशंसाभिः स्तूयन्ते स्वस्वगुणकर्मसेवनोत्कर्षेण ते वर्णा ब्राह्मणादयः[7] ।

---

१. वृञ् वरणे, वृङ् सम्भक्तौ, एताभ्यां कर्त्रर्थे कर्मार्थे वा ।
'कृवृजृसिद्रूपन्यनिस्वपिभ्यो नित्' उणादिसूत्रेण ३।१० इत्यनेन न प्रत्यये वर्णशब्दो निष्पद्यते ।

२. वृञ् आवरणे । ( सिद्धिः पूर्ववत् ) ।

३. वृण प्रीणने धातोः कर्त्रर्थे 'अज्विधिः सर्वधातुभ्यः' पा० ३।१।१३४ । वार्तिकसूत्रेण अच् प्रत्ययः ।

४. वर ईप्सायाम् औणादिकेन 'बाहुलक' ३।१० सूत्रेण न प्रत्ययः ।

५. वर्ण प्रेरणे धातोः 'अकर्तरि च कारके' पा० ३।३।१९ सूत्रेण कर्मणि घञ् कर्त्रर्थे च अच् प्रत्ययः ।

६. वर्ण वर्णने धातोः कर्मणि घञ् प्रत्ययः पूर्ववत् ।

७. वर्ण वर्णक्रियाविस्तारगुणवचनेषु धातोः कर्तरि अच् प्रत्ययः कर्मणि च घञ् प्रत्ययः ।

ये वर्यन्ते = ईप्स्यन्ते समाचरितुमभिलक्ष्यन्ते, ये वर्ण्यन्ते प्रेर्यन्ते समाधीयन्ते प्रयत्नेनाचार्यादिभिर्वर्णिषु, ये वर्ण्यन्ते = व्याख्यार्यन्ते मुहुर्मुहुः शास्त्रैः । यैर्वर्ण्यते = रज्यते संस्क्रियते आत्मा यैर्वर्ण्यन्ते विस्तार्यन्ते सुखानि, यैराचरणगतैः कारणभूतैः स्तूयन्ते प्रशंस्यन्ते जनाः । ये वा वर्यन्ते चीयन्ते निश्चीयन्ते स्वोद्देश्यरूपेण ते शमदमादिगुणा अध्यापनरक्षणपोषणशुश्रूषादीनि कर्माणि वा वर्णाः । ते वर्णाः सन्त्येषु सन्त्येषां वा ते वर्णा ब्राह्मणादयः[1] ।

**( ख ) वर्णोत्पत्तिः—**

ते वर्णाः कथमुत्पन्ना इत्यत्राख्यानं श्रूयते कल्पादौ ब्रह्म एवेदमग्र आसीत् । एकमेव तदेकं सन् न व्यभवत् । तच्छ्रेयो रूपमत्यसृजत । ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च[2] । तत्रास्य प्रजापतेर्निखिलब्रह्माण्डविग्रहस्य मुखं ब्राह्मण आसीत् । बाहूरूपो राजन्य आसीत् । ऊरूरूपो वैश्यः पद्भ्यां च शूद्रोऽजायत[3] । तदैते चत्वार एव वर्णाः[4] । तेषु चतुर्षु वर्णेषु ब्राह्मणो गरीयान्[5] । स एव गुरुः[6] । यतो ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति[7] । वर्णभेदादेव प्रतिष्ठाभेदोऽपि दृश्यते तद्यथा ब्राह्मणस्याह्वानसमये 'एहीति', क्षत्रियस्य 'आगहीति', वैश्यस्य 'आद्रवेति', शूद्रस्याधावेति, उच्चारयेत्[8] । तथैव शूद्रस्य विगर्हाऽपि दृश्यते । यो वै दीक्षितः स्यान्न स शूद्रेण संवदेत्[9] ।

---

१. वर ईप्सायाम्, वर्ण प्रेरणे, वर्ण वर्णने, वृञ् वरणे इत्यादिभिरधस्तात् निर्दिष्टधातुभिः यथायोग्यप्रत्ययेषु कृते रूपं सिध्यति ।

२. द्र० शत० ब्रा० १४।४।२।२३–२७ ।

३. ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥
ऋ० १०।९०।१२, यजु० ३१।११, अथर्व० १९।६।६ ।
द्र० तै० आ० ३।१२।१३ ।

४. द्र० शत० ब्रा० ५।५।४।९ ।

५. द्र० शत० ब्रा० ६।४।४।१३ ।
ब्राह्मणो जज्ञे प्रथमो । अथर्व० ४।६।१ ।
तस्माद् ब्राह्मणो मुख्यः । तै० सं० ५।२।७।१ ।

६. यस्तून्मुखत्वाद् वर्णानां मुख्योऽभूद् ब्राह्मणो गुरुः । षड्विंश ब्रा० १।१ ।

७. द्र० शत० ब्रा० ६।४।४।१३ ।

८. द्र० शत० ब्रा० १।१।४।१२ ।

९. द्र० शत० ब्रा० ३।१।१।१०, ३।१।१।९ ।

एवमेतेषां वर्णानामुत्पत्तिं त्रिधा मन्यन्ते । जन्मनेत्येके । गुणकर्मणेत्यपरे । देहत्वचो वर्णभेदेन वा केचित् । इत्थं चातुर्वर्ण्यविषये बुद्धसमयादपि पूर्वं विवादः संवृत्त आसीदितीतिहासविदां सुविदितमेव नाद्यावधि विवादोऽयं समाप्तिमगमत् । सर्वे स्वमतं पोषयन्तः परमाक्षिपन्ति । तदत्र समीक्ष्यते यदेते जन्मना गुणकर्मणा वर्णभेदेन वा ? लोके वर्णशब्दो जातिशब्दश्चेत्येतौ एकार्थ एव व्यवह्रियेते ।

**( ग ) जन्मना जातिवादः—**

तत्र केचन मन्यन्ते योऽयं ब्राह्मणत्वजातिविशिष्टः पुरुषः सोऽयमस्य प्रजापतेर्मुखमासीत् मुखादुत्पन्नः । योऽयं क्षत्रियत्वजातिविशिष्टः स बाहुभ्यां जातः । योऽयं वैश्यजातिविशिष्टः स ऊरुभ्यामुत्पन्नः । एवं पद्भ्यां शूद्रोऽजायत[1] । अत एव परमेश्वरेणैव ब्राह्मणादयो वर्णा विनिर्मिता न तु खलु पूर्वं केनापि व्यक्तिविशेषेण स्वतो वा गुणकर्मानुसारेण व्यवस्थापिता न चेदानीं व्यवस्थापयितुं शक्याः सन्ति । अतएव शास्त्रप्रसिद्धानां जात्यन्तरविशिष्टानां देवापिविश्वामित्रवसिष्ठादीनामपि स्वकीयतपः प्रभावात् ब्रह्मर्षित्वमेव प्राप्तं न प्रशस्तब्राह्मणत्वजातिस्तैः संलब्धा ।

सति चैवं गीतासु चातुर्वर्ण्यं मया सृष्टमित्युक्तं[2] सुतरां संगच्छते । "शमो दमस्तपः शौचं······ब्राह्मणक्षत्रियविशां कर्माणि प्रविभक्तानि"[3] इत्यादीनि भगवद्वचांसि ब्राह्मणस्य कर्माणि शमादीनि स्वाभाविकानि सन्ति । नैव पुनः शमदमादिगुणविशिष्टो यः कोऽपि ब्राह्मणो भवतीति प्रख्यापयन्ति । 'जन्मना जायते शूद्रः' इत्यादीनि हि वचांसि शूद्रपदेन शूद्रसमत्वमेव बोधयन्ति न तु वस्तुगत्या ब्राह्मणादिभ्यो ब्राह्मण्यादिषु जायमानानामर्भकाणां शूद्रत्वम् ।

एतेन 'संध्यां नोपासते यस्तु ब्राह्मणो हि विशेषतः ।
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते ।।[4]
अनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।[5]

---

१. तु० तै० सं० ७।१।१।४ । यजु० ३१।११, अथर्व० १९।६।६ ।

२. गीता ४।१३ ।

३. गीता १४।४१–४४ ।

४. दक्षस्मृतिः २।१८–१९ ।

५. मनु० २।१६८ ।

यो भुङ्क्ते हि च शूद्रान्नं मासमेकं निरन्तरम्।
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ।।[1]

इत्यादीनि स्मार्तवचनान्यपि व्याख्यातानि । एष्वपि शूद्रपदेन शूद्रसाम्यमेव बोध्यम् । एवं क्षत्रियपुत्रा ब्राह्मणा बभूवुः, द्वौ वैश्यौ ब्राह्मणतां गतौ[2] इत्यादिवचनेष्वपि ब्राह्मणसाम्यमेव वेदितव्यम् न तु ब्राह्मणत्वजातिप्राप्तिर्ज्ञेया, सा तु ब्राह्मणाद् ब्राह्मण्यमिव जायमाने सति प्राप्ता भवति नान्येषाम् ।

किञ्च स्वभावादेव चत्वारो ब्राह्मणादयो विद्यन्ते तेषां ब्राह्मणत्वादिकं पक्षिणामुड्डयनवत् वानराणामुल्लच्छनवच्च स्वाभाविकमेव न तु गुणकर्माद्युपाधितोऽभिनवं लब्धं न चान्यजातिभिरन्यवर्णत्वं शक्यं विद्यते[3]। एवं मानवाः प्रेत्यैवान्यासु जातिषु जायन्ते न त्वस्मिन्नेव जन्मनि[4] सति चैवं 'बाह्यणः शूद्रो भवति' 'शूद्रो ब्राह्मण इति' इत्यादिवचनानि जन्मान्तरमभिप्रेत्यैव जातिविपर्यासं प्रतिपादयन्ति न त्वस्मिन् जन्मनीति प्रत्येतव्यम् ।

अपि च तद्य इह रमणीयचरणा अभ्याशो यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वेति[5] पुनर्जन्मविषयिणी छान्दोग्यश्रुतिः—ब्राह्मणादियोनिं प्रशंसन्ती योनिलक्षणजन्मकृतं ब्राह्मणत्वादिकं स्पष्टमभ्युपगच्छति अत एव योन्युत्कर्षमभिप्रेत्यैव पराशरोऽपि सुस्पष्टमाह—

दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः ।
कः परित्यज्य दुष्टां गां दुहेच्छीलवतीं खरीम् ।।

---

१. आङ्गिरसस्मृति शुद्धिवर्णनसन्दर्भे श्लोकः । ४८ ।
२. द्र० चातुर्वर्ण्यसमीक्षा भागः १ पृ० ४ ।
३. बह्वीस्तु संस्मरन् योनीर्जायमानः पुनः पुनः ।
पर्याये नाम कस्मिंश्चिद् ब्राह्मणो नाम जायते ।।
महाभारते शान्तिपर्वणि । २८।५ ।
स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्या सुदुष्प्रापमन्यवर्णत्वमागतम् ।।
महाभारते अनुशासनपर्वणि । १२३ ।
४. द्र० चातुर्वर्ण्यसमीक्षा भाग १ पृ० २५ ।
५. छान्दोग्योपनिषत् ५ १० ।

अभिहितश्चायमर्थो मनुनाऽपि—

अविद्वांश्चैव विद्वाँश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत् ।।[1]

तस्माज्जन्मनैव वर्णभेदः सुप्रतिष्ठितो भवत्यत एव जन्मनैव तत्तद्वर्णोचितनामकरणनियमोऽप्याह—

मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ।।[2]

तत्तद्योनिजन्मलाभादृते जातमात्रस्य शिशोर्दशमेऽहनि नामकरणसमये किं तस्य ब्राह्मणत्वादिकं साधकं स्यात् ? न हि तदानीं गुणकर्मादयः शक्यसम्भवाः । ततो ब्राह्मणादिकुलजानामेव ब्राह्मणाद्युचितं नाम मनुनाभिप्रेतं तज्जन्मना सिद्धा एव ब्राह्मणादयो वर्णा इति विज्ञापयति[3] ।

**( घ ) गुणकर्मणा जातिवादः—**

अपरे तु ब्राह्मणादिशब्दा गुणशब्दा एव न जातिवाचकशब्दा इत्यत्र पतञ्जलिमहर्षीणां 'सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति"[4] प्राचीनतरं वचनं प्रमाणत्वेनोपन्यसन्तस्तपःश्रुतादिगुणकर्मसमुदायनिबन्धनैव वर्णव्यवस्था महाभाष्येऽपि प्रोक्तेति मन्वाना एवं पूर्वोक्तं श्रौतमन्त्रं[5] व्याचक्षते—अस्य परमेश्वरस्य ब्रह्माण्डविग्रहस्य ब्राह्मणो ब्राह्मणत्वप्रयोजकशमदमादिगुणविशिष्टो ब्रह्मभवितुकामः सत्वगुणबहुलो वेदादिविद्यासम्पन्नः परमेश्वरोपासको मुखमासीत् मुखस्थानीयो मुख्यः सर्वोत्तम आसीत् । यथा मुखं ज्ञानप्रधानमितराङ्गापेक्षया श्रेष्ठं तथाऽस्यापि ज्ञानप्रधानत्वाच्छमादिगुणैः श्रेष्ठत्वाच्च मुख्यत्वव्यपदेशः ।

अत एव "अथ य एतदक्षरं गार्गि ! विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः" इत्यादिश्रुतिषु ज्ञाननिबन्धनो ब्राह्मण्यव्यपदेशः संगच्छते । तथा राजन्यः शौर्यादिगुणविशिष्टः सत्वोपसर्जनरजोबहुलो बाहुस्था-

---

१. ९।३१७ ।
२. द्र० मनु० १२।३१ ।
३. द्र० चातुर्वर्ण्यसमीक्षा भाग १ पृ० ६ ।
४. महाभाष्यम् २।२।६ ।
५. ऋ० १०।९०।१२, यजु० ३१।११, अथर्व० १९।६।६ ।

नापन्नत्वेन सम्पादितः। यथा बाहुर्बलप्रधानं तथाऽयमपि। तथाऽस्य पुरुषस्य यावूरू तत् स्थानापन्नो वैश्यः कृषिवाणिज्यादिविशिष्टो धनसञ्चयप्रधानस्तम उपसर्जन रजोबहुल ऊरुत्वेन सम्पादितः। यो यत्र तत्र पुनः पुनर्विशति प्रविशति कार्यार्थमसौ विट् तदपत्यं वैश्य इति व्युत्पत्तेः। तथाऽस्य पद्भ्यां पादस्थानीयः शूद्रः परिचर्याशिल्पकौशल-परिश्रमत्वादिगुणविशिष्टो रज उपसर्जनतमोबहुलोऽकल्पयत। एवमेते ब्राह्मणादयस्तत्तद्गुणकर्मविशिष्टा एव मुखप्रभृतयोऽवयवा अस्य पुरुषस्य ब्रह्माण्डविग्रहस्य प्रजापतेर्विद्यन्ते[1]। अद्यतनानां सर्वेषां ब्राह्मणादीनां मिथुनसंप्रयोगेण मातृयोनिमार्गेणैव च समुत्पत्तिर्दर्शनात् मुखादिरूपेण ब्राह्मणादिकथनं विद्याबलधनश्रमादिगुणकर्मनिबन्धनस्तुतिप्रदर्शनायैव विज्ञेयम्।

एवं व्याचक्षाणास्ते पूर्वं ब्राह्मणादिवर्णविभागस्तत्तद्गुणकर्माण्य-वलम्ब्यैव विहित इत्यत्र नैकविधानि वेदादिशास्त्राणां प्रमाणान्युप-हरन्तो[2] वदन्ति—देवापिः प्राक् क्षत्रियपुत्रस्तीव्रेण तपसा ब्राह्मणत्व-मापेदे[3]। एतेन तपःप्रभावात् स्वयंप्रतिभातवेदत्वलक्षणऋषित्व-पुरोहितत्व-याजनकर्तृत्वादिप्रतिपादनेनार्ष्टिषेणस्य देवापेः क्षत्रिय-स्यापि गुणकर्मैकनिबन्धनं प्राप्तं मुख्यं ब्राह्मण्यं सुस्पष्टं सूच्यते। तदेतदाम्नातं स्मरति व्यासः—

यत्रार्ष्टिषेणः कौरव्यब्राह्मण्यं संशितव्रतः।
तपसा महता राजन् प्राप्तवान् ऋषिसत्तम॥
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः।
ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रस्तथा मुनिः।
महातपस्वी भगवानुग्रतेजा महातपाः[4]॥

महातेजा विश्वामित्र पावक इव समृद्धस्तपसा क्षात्रधर्ममुत्सृज्य ब्रह्मवर्चसं लेभे। ततो ब्राह्मणतां यातो ब्रह्मवंशस्य प्रवर्तकोऽभूत्[5]।

---

१. तु० दयानन्दः, ऋ० भा० भू० पृ० २३३–२३४।

२. ऋ० १०।९८।५–७।

३. देवापिस्तपः प्रतिपेदे। नि० २।१०।

४. महाभारते शल्यपर्वणि ३९।३६–३८।

५. ब्रह्मण्यं लब्धवान् यत्र विश्वामित्रस्तथा मुनिः।
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान्॥
महाभारते शल्यपर्वणि ४०।११।

एतेन विश्वामित्रादीनां स्वयंप्रतिभातवेदमन्त्रत्वमित्याख्यामेव गौणं ब्राह्मण्यं प्राप्तं न तु ब्राह्मणवर्णत्वमिति भाट्टकौस्तुभे खण्डदेवाचार्यादिभिर्यदुक्तं तत् प्रत्युक्तम्। तस्य विश्वामित्रस्य पुत्रा ब्रह्मवंशविवर्धना गोत्रप्रवर्तकाश्च बभूवुरित्यादिवचनविरोधात्। यतो ब्राह्मणवर्णत्वाभावे ब्राह्मणवंशकारकत्वविवर्धकत्वगोत्रप्रवर्तकत्वादिकं श्रूयमाणं कथमुपपन्नं भवेदतोऽवगम्यते ब्राह्मणवर्णत्वमपि तैरस्मिन्नेव जन्मनि प्राप्तमिति। तथा चैकाशीतिसंख्यकानां राजर्षिऋषभदेवपुत्राणामेकाशीतिर्जायन्ते याः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः। कर्मतन्त्रप्रणेतार एकाशीतिर्द्विजातय इत्यादिवचनैर्गुणकर्मादिभिरेव प्राप्तं मुख्यं ब्राह्मण्यं स्पष्टमावेद्यते।

अत एव गीतायामावेदितं चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश इति। चत्वारो ब्राह्मण[1]-क्षत्रिय[2]-वैश्य[3]-शूद्रा इत्येते वर्णाश्चातुर्वर्ण्यम्। एतच्च मया गुणकर्मविभागमनुसृत्यैव सृष्टं व्यवस्थापितं न त्वेकान्ततो जन्मना जात्या वा। यदि हि वर्णव्यवस्थाया गुणकर्मावलम्बित्वं नाभिप्रेतमभविष्यत् तदा "गुणकर्मविभागशः" इति नैवाभ्यधास्यत् किन्तु जन्मजातिविभागश इति प्रत्यपादयिष्यत्। तस्माच्चातुर्वर्ण्यस्य कर्माणि स्वभावप्रभवैर्गुणैः प्रविभक्तानि[4]।

यथा हि द्रोणादिषु ब्राह्मणेष्वपि शौर्यादिकं, भरतादिषु क्षत्रियेष्वपि शमादिकं दृष्टमेवमितरत्र। तस्माद्यस्मिन् कस्मिंश्चिद् वर्णे शमादयो दृश्यन्ते स शूद्रोऽप्येतैर्लिङ्गैर्ब्राह्मण एव ज्ञातव्यः। ब्राह्मणो वा एष जायते यो दीक्षते तेन सर्वेण संस्कारेण क्षत्रियो ब्राह्मण्यं प्राप्नोति तस्माद्राजन्यवैश्या अपि ब्राह्मणा एव भवन्ति[5]। तदेवमेनं ब्रह्मणा यजुषैतस्माच्छौद्राद्वर्णादपादत्ते[6]। यत्र च ब्राह्मणेऽपि शूद्रधर्मा दृश्यन्ते

---

१. स प्रकेत उभयस्य प्रविद्वान्। ऋ० ७।३३।१२।

२. त्वं वर्मासि सप्रथः पुरोयोधश्च वृत्रहन्। ऋ० ७।३१।६।

३. यया वणिग्वङ्कुरापा पुरीषम्। ऋ० ५।४५।६।

४. गीता १८।४१।

५. दीक्षितोऽयं ब्राह्मणः······तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात्। ब्राह्मणो हि जायते यो यज्ञाज्जायते।
शत० ब्रा० ३।२।१।२९–४०।

६. शत० ब्रा० ६।४।४।९, ऐ० ब्रा० ७।२९।

स शूद्र एव। एवं धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ। अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते[1]। एवमेव पुराणेष्वपि गुणकर्माण्यवलम्ब्य वर्णव्यवस्था साधिता[2]।

तथैवोपनिषदि समाम्नायते चतुर्षु वर्णेषु ब्राह्मण एव प्रधानः। तत्र प्रश्नः को वा ब्राह्मणो नाम? किं जीवः? किं देहः? किं जातिः? किं ज्ञानं? किं कर्म? किं धार्मिकः? इति। तत्र चेदं साधितं यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मिषड्भावेत्यादिसर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं करतलामलकवत् साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादिसम्पन्नो दम्भाहंकारादिभिरसंस्पृष्टचेता वर्तते। एवमुक्तलक्षणो यः स एव ब्राह्मण इति[3]। ब्राह्मणवर्णत्वप्रयोजकन्तु ब्रह्मज्ञानसाधकशमादिगुणकर्मवैशिष्टयमेव, अन्यथा गुणकर्मशून्या निर्वचनानर्हा सांकेतिकी वराकी ब्राह्मणत्वादिजातिः कि करिष्यति? न ह्यौष्ण्यप्रकाशविहीनेन सूर्येण तमो विहन्तु विश्वाह्लादकमालोकञ्च विस्तारयितुं शक्यते। तथाभूतस्य वा सूर्यस्यास्तित्वपरिचयोऽपि कथं स्यात्?

तथा च यत् पूर्वपक्षिभिर्ब्राह्मणादिवर्णानां जन्मनाऽसिद्धेर्नामकरणव्यवस्था प्रतिपादिता तत्र तत्तद्रोगपरीक्षणकुशलस्य राजवैद्यस्येव मनुजस्वभावाकृतिवर्णादिपरीक्षणकुशलस्याचार्यस्यापक्षपातया परीक्षया बाल्येऽप्याकृतिर्गुणान् कथयतीति न्यायेन ब्राह्मण्यादिनिर्णयसम्भवात्। तदेतदुक्तं माणवकस्याकृतिवर्णोच्चारणादिपरीक्षणेन सावित्र्या यां ब्राह्मणत्वादिजातिं प्रकटयति सैव जातिर्यथार्था विज्ञेया[4] सैवाऽजराऽमरा शाश्वती चेति[5] अतो ब्राह्मणत्वादिरूपैव जातिरत्र विवक्षिता।

---

१. आपस्तम्बगृह्यसूत्रम्। २।५।११।१०–११।

२. द्र० महाभारते वनपर्वणि १८०।२१, २६, १७७।१५–३३।
विष्णुपुराणे ४।८।१, ४।८।९।
महाभारते आदिपर्वणि ६५।१०–११।

३. वज्रसूची उपनिषत्।
जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते।
वेदाभ्यासाद् भवेद् विप्रो ब्रह्म जानातीति ब्राह्मणः॥ वज्रसूची
उद्धृत "पुरुष सूक्त का विवेचनात्मक अध्ययन" पृ० ४५६।

४. मनु० २।२८।

५. मनु० २।१४८।

सा नैव जन्मना सिद्धा किन्त्वाचार्येण जन्यते ।

त्रिभ्यो गुणेभ्यो वा ब्राह्मणो भवति । तपसा श्रुतेन जन्मना च । योऽयं तपः श्रुताभ्यां हीनो भवति स जातिब्राह्मण एवोच्यते[1] । न स श्रेष्ठत्वमापद्यते । एवमयं समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते । जातिहीने गुणहीने च । गुणहीने तावदब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति । अब्राह्मणोऽयं यो गच्छन् भक्षयति । जातिहीने सन्देहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते । यतो गौरः शुच्याचारः पिङ्गलः कपिलकेश इत्येतानप्याभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति । ततो गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाध्यवस्यति ब्राह्मणोऽयमिति । ततः पश्चादुपलभते नायं ब्राह्मणोऽब्राह्मणोऽयमिति । तत्र सन्देहाच्च ब्राह्मणशब्दो वर्तते । जातिकृता चार्थस्य निवृत्तिः । दुरुपदेशाच्च दुरुपदिष्टमस्य भवति—अमुष्मिन्नवकाशे ब्राह्मणस्तमानयेति । स तत्र गत्वा यं पश्यति तमध्यवस्यति ब्राह्मणोऽयमिति । ततः पश्चादुपलभते नायं ब्राह्मण अब्राह्मणोऽयमिति । तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते । जातिकृता चार्थस्य निवृत्तिः । आतश्च सन्देहाद् दुरुपदेशाद्वा । स ह्ययं कालं माषराशिवर्णमापण आसीनं दृष्ट्वाध्यवस्यति ब्राह्मणोऽयमिति निर्ज्ञातं तस्य भवति[2] ।

एतेन ज्ञायते यत्त्वचः शुक्लनीलकपिलकृष्णगुणा अपि वर्णपरिचायका विद्यन्ते[3] । श्रुतिरप्यमुमेव पोषयति[4] । ये शूद्रा भवन्ति ते निकृष्टवर्णिनः कृष्णवर्णिनो वा भवन्ति तथापि न केवलं त्वग्भेद एव नूनं वर्णपरिचायको विद्यते । कृष्णत्वचोऽपि ब्राह्मणगुणसम्पन्ना भवितुमर्हन्ति गौरा अपि ब्राह्मणगुणैर्हीनाः, ततो गुणकर्मण्येवाध्यवस्य निश्चेतव्योऽयं ब्राह्मण इति ।

तथा च वर्णपदनिर्वचनैश्चापि वर्णा गुणकर्मभ्यां सन्तीति साधितम् ।

**( ङ ) जातिवर्णस्वरूपयोर्विवेचनम्—**

प्रत्यक्षगम्या जातिर्भवति ब्राह्मणत्वादिवर्णस्तु स्मृतिलक्षणः ।

---

१ तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् ।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥

महाभाष्ये पा० २।२।६ ।

२. द्र० तत्रैव ।

३. तु० महाभाष्ये पा० २।२।६ ।

४. यो दासं वर्णमधरं गुहाकः । ऋ० २।१२।४ ।

यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा आकृतिग्रहणा भवन्ति न तथा ब्राह्मणादयो वर्णा निसर्गजा आकृतिग्रहणा भवन्ति। ब्राह्मणत्वादयो वर्णास्तु सामाजिकानामैहिकाभ्युदयकार्यव्यवहार-सौकर्याध्यात्माद्युन्नतिसिध्यर्थाः पूर्वं गुणकर्मानुसारतः प्राक्कालिकैः सामाजिकैः कल्पिताः[1]। परमद्यत्वे जन्मनैव सिद्धा जातय इत्य-भिमन्यन्ते। येषां पूर्वजास्तन्तुवायाश्चर्मकारा अयस्कारा रथकाराः कुम्भकारा हिरण्यकारा मणिकारा मालाकारास्ताम्बूलकारा अजा-पालाः सूचीकारा नीलकाराः कंसकाराः कहारका रजका नापिता हस्तिपकास्तैलकारा नटा आहितुण्डिका ऐन्द्रजालिका मार्जयितारो वा बभूवुस्तेषां पुत्राः पौत्राः प्रपौत्राश्च वंशोद्भवा वाऽद्य यावदपि तैरेव पूर्वजानां व्यवसायबोधकशब्दैराहूयन्ते तज्जातिकोऽयमित्या-ख्यायते। ते पशुपालनवाणिज्यकृषिकर्मसु संलग्ना न वैश्यवर्णे, न वा क्षात्रधर्ममाचरमाणाः क्षत्रियवर्णे, अध्ययनाध्यापनेषु नियुक्ता वा न ब्राह्मणवर्णे परिगण्यन्ते, अपितु त एवैते शूद्रा इत्यवमान्यन्ते हीनाश्चेतिकृत्वा जुगुप्सापात्रं विधीयन्ते। एवमेव च ब्राह्मणेन ब्राह्मण्यां जातो मद्यद्यूतनिन्दितकर्मसु सक्तोऽपि न शूद्रत्वेन परिगण्यते प्रत्युत 'अयं श्रेष्ठो ब्राह्मणजातीय इति पूज्यत्वेनाङ्गीक्रियते।

अथ चैवंविधाः पूर्वजानां व्यवसायज्ञापिकाः सहस्रशो जातयः परिगण्यन्ते। नहि गुणकर्मणा जातीनां प्रविभागो विद्यते। अथ च बहुधा देशभेदेन जातिभेदस्तद्यथा—

अग्रवालाः, काम्बोजाः, कान्यकुब्जाः, खण्डेलवालाः, सरयूपारीणाः, माथुराः, द्राविडाः, किन्नराः, गौडाः, गर्व्यालाः, बूदियालाः, नौटियालाः, थपलियालाः, उनियाला इत्यादयः। एवमानुवंशिक-व्यवसायपरम्परां पूर्वजानां जन्मभूमिं वासभूमिं वा वंशानुगतविद्या-सम्बन्धिनीं वेदशाखां कर्मकाण्डसम्बन्धिनं वोपाधिं स्वनामानुधारयन्त इमानि जातिशब्देन व्यवहरन्ति।

इमाश्च विविधजातयो मन्यन्ते। उत्तममध्यमाधमभावञ्च कल्प-यन्ति। परं तावत् यथा साधितमधस्तात् ब्राह्मणादयो न जातय अपितु वर्णा एव, गुणकर्मस्वभावेन च तेषां विभागाः। तैश्च विराट्पुरुषस्य शरीररूपोऽयं समाज निर्मीयते। सर्व एतेऽन्योन्यस्य पूरका भवन्ति। नहि ब्राह्मणानां कर्मसिद्धिर्ऋते क्षत्रियवैश्यशूद्रेभ्यः, एवमन्येषामपि।

---

१. देवविशः कल्पयित्वा०। ऐ० ब्रा० १।९।

ब्रह्म च क्षत्रं च विशि प्रतिष्ठिते[1]। यथा ह्यस्मच्छरीरे मस्तिष्कं मुख्यत्वात् ब्राह्मणस्थानीयं, बाहू त्रायमाणधर्मत्वात् क्षत्रियस्थानीयावूरू च सर्वशरीरपोषकत्वात् वैश्यस्थानीयौ पादौ च भारवहनाच्छूद्र-स्थानीयौ तथैव समाजरूपेऽस्मिन् शरीरे ब्राह्मणादयः सन्ति। ततो विज्ञैर्बलवर्धनाय सर्वैः साकं प्रीतिभावेन वर्तनीयम्। श्रुतिरप्येतदेवो-पदिदेश—

प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये[2]॥

## ( २ ) आश्रमवृत्तम्

वेदानामुपदेशः शतायुर्वै पुरुषः[3]। तस्यायुषि चतस्रोऽवस्थाः वृद्धि-र्यौवनं सम्पूर्णता किञ्चित्परिहाणिश्च। तासु चतसृष्ववस्थास्वाश्रमा अपि चत्वारः सन्ति ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासभेदात्। ब्रह्मचर्येण सद्विद्या शिक्षा च ग्राह्या। गृहाश्रमेणोत्तमाचरणानां श्रेष्ठानां पदार्थानाञ्चोन्नतिः कार्या। वानप्रस्थेनैकान्तसेवनं ब्रह्मोपासनं विद्याफलविचारणादिकञ्च कार्यम्। संन्यासेन परब्रह्ममोक्षपरमानन्दप्रापणं क्रियते, सदुपदेशेन सर्वस्मा आनन्ददानं चेत्यादिभिश्चतुर्भिराश्रमैर्धर्मार्थकाममोक्षाणां सम्यक् सिद्धिः सम्पादनीया[4]।

**( क ) ब्रह्मचर्याश्रमः—**

ब्रह्मचर्यस्याचरणं यस्मिन्नाश्रमे स ब्रह्मचर्याश्रमः। इन्द्रियाणां संयम एव ब्रह्मचर्यम्[5]। आचार्यो ब्रह्मचारिणमुपनयमानोऽध्ययनार्थं पञ्चवर्षीयं षड्वर्षीयमष्टवर्षीयं वा बालकमुपवीतं दृढव्रतमुपदिशन्नन्तर्गर्भ इव कृणुते। तं तिस्रो रात्री उदरे बिभर्ति विद्यामध्यापयति। तिस्रो रात्रयोऽध्ययनकालस्योपलक्षणम्। यावद्विद्या पूर्णा भवेदाचतुर्विंशति-वर्षमथवा त्रिंशद्वर्षमष्टचत्वारिंशद्वर्षं वा। ब्रह्मचर्येण विना विद्या न

---

१. शत० ब्रा० ११।२।७।१६।

२. अथर्व० १९।६२।१।

३. शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमुवसन्तान्।
शतं त इन्द्रो अग्निः सविता बृहस्पतिः शतायुषा हविषाहार्षमेनम्॥
अथर्व० ३।११।४।

४. द्र० दयानन्दः, ऋ० भा० भू० पृ० २३४–२३५।

५. द्र० व्यासभाष्यम् योगसूत्रम् २।३०।

लभ्यते, विद्यया विना किञ्चिदप्याश्रमकर्तव्यं न यथायथं कर्तुं शक्नोति नैव च द्विजो भवति, ततः सर्वेभ्योऽयमाश्रमोऽपरिहार्य एव। यदाऽयं ब्रह्मचर्याश्रमे गुरोरुपासनया विद्याध्ययनेन विद्वान् जायते तदा विद्यासु जातं प्रादुर्भूतं देवा विद्वांसो द्रष्टुमभिसंयन्ति सहर्षञ्च तस्य प्रभूतं मानं कुर्वन्ति। अस्माकं मध्ये महाभाग्योदयेनेश्वरानुग्रहेण च सर्वमनुष्योपकारार्थं त्वं विद्वान् जात इति प्रशंसन्ति[1]। एनां पृथिवीं द्याञ्चानया समिधया स ब्रह्मचारी यशसा पृणाति। अग्निहोत्रेण परिश्रमेण तपसा धर्मानुष्ठानेनाध्यापनोपदेशेन च सर्वान् प्राणिनः पिपर्ति पुष्टान् प्रसन्नान् च करोति[2]।

स ब्रह्मचारी वेदं परमेश्वरं च विदन् सर्वेषामाश्रमाणां किरीटी धर्मानुष्ठानेनोर्ध्व उत्कृष्टबोधरूपव्यवहारे च तिष्ठति ततस्तं ब्रह्मज्येष्ठं ब्रह्मविदं देवाः शंसन्ति[3]। एवं विद्यातेजसा दीप्तः कृष्णाजिनं बिभ्रन् दीर्घश्मश्रू दीक्षितः परमानन्दं प्राप्नोति[4]। विद्यामधीयन् परमेष्ठिनं साक्षात्कुर्वन् मोक्षविद्यायां गर्भवन्नियमेन स्थित्वा यथावद्विद्यामधीत्य सूर्यवत्प्रकाशकः सन् दुष्टकर्मकारिणो मूर्खान् पाखण्डिनो जनान् दैत्यरक्षःस्वभावान् तिरस्करोति[5]।

यथेन्द्रः सूर्यो मेघान् नक्तञ्चापाकरोति तथा ब्रह्मचारी सर्वशुभगुण-

---

१. आचार्य उपयनमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः॥
अथर्व० ११।५।३।

२. इयं समित् पृथिवी द्यौर्द्वितीयोन्तरिक्षं समिधा पृणाति।
ब्रह्मचारी समिधा मेखलया श्रमेण लोकांस्तपसा पिपर्ति॥
अथर्व ११।५।४।

३. पूर्वो जातो ब्रह्मणा ब्रह्मचारी घर्मं वसानस्तपसोदतिष्ठत्।
तस्माज्जातं ब्राह्मणं ब्रह्मज्येष्ठं देवाश्च सर्वे अमृतेन साकम्॥
अथर्व० ११।५।५।

४. ब्रह्मचार्येति समिधा समिद्धः कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः।
अथर्व० ११।५।६।

५. ब्रह्मचारी जनयन् ब्रह्मापो लोकं प्रजापतिं परमेष्ठिनं विराजम्।
गर्भो भूत्वाऽमृतस्य योनाविन्द्रो ह भूत्वाऽसुरांस्ततर्ह॥
अथर्व० ११।५।७।

प्रकाशकोऽशुभगुणनाशकश्च भवति । "दीर्घसत्रं वा एष उपैति यो ब्रह्मचर्यमुपैति[1] । ब्रह्मचर्येण तपसैव राजा राष्ट्रं रक्षितुं क्षमो जायते[2] तेनैव देवा मृत्युं जयन्ति[3] । ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभो भवति[4] । वीर्येणैवोर्ध्वगतिमत्वाच्चरमोऽष्टमो धातुरोजो निष्पद्यते । ओजसा विहीनो निस्तेजा भीरुर्निर्बलश्च जायते तत एव परमेश्वराद्याच्यते यन्मयि शरीरबुद्धिशौर्यस्फूर्त्यादिवीर्यं पराक्रमं स्थिरं धारय, मय्योजः सत्यं विद्याबलं धेहि[5] । यो ब्रह्मचर्यं चरति स इन्द्रियजयी तपस्वी च भवति । अथ हैतद्देवानां परिषूतं भवति यो ब्रह्मचारी भवति[6] । तस्य प्रज्ञा वर्धते ।

अथर्ववेदीयगोपथब्राह्मणे ब्रह्मचारिचरित्रनिर्देशो विहितः–"तान्तवं न वसीत । यस्तान्तवं वस्ते क्षत्रं वर्द्धते न ब्रह्म, तस्मात्तान्तवं न वसीत ब्रह्म वर्धतां मा क्षत्रमिति" तन्तुवस्त्रधारणेन क्षत्रं वर्धते[7] । अथ चाप्यधः शयीत, उपरिशायी मा स्यात् । नो चेत् पुनः पुनः गृहाणि जन्मानि भविष्यन्ति ; अध एवासीत अधः शयीताधस्तिष्ठेदधो व्रजेत्[8] । स्वाजीविकायै प्राणयात्रार्थं भिक्षामाहरेत्[9] । न ब्रह्मचारी सन् मध्वश्नीयात् । ओषधीनां वा एष परमो रसो भवति यन्मधु भवति[10] ।

तेन ब्रह्मचर्यव्रतानुष्ठानेन स एकोऽसहायोऽपि गोलचक्रवच्चतुर्णव-

---

१. शत० ब्रा० ११।३।३।२ ।

२. ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति । अथर्व० ११।५।१७ ।

३. ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत । अथर्व० ११।५।१९ ।

४. योग० २।३८ ।

५. ओजोऽस्योजो मयि धेहि मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि । यजु० १९।९ ।

६. गो० ब्रा० पूर्वगोपथ २।७ ।

७. पूर्वगोपथ २।४ ।

८. नोपरिशायी स्यान्न गायनो न नर्त्तनो न सरणो न निष्ठीवेत् ।
यदुपरिशायी भवत्यभीक्ष्णं निवासा जायन्ते ।
गो० ब्रा० पूर्वगोपथ २।७, २।४ ।

९. इमां भूमिं पृथिवीं ब्रह्मचारी भिक्षामाजभार प्रथमो दिवं च ।
अथर्व० ११।५।९, द्र० शत० ब्रा० ११।३।३।५ ।

१०. द्र० शत० ब्रा० ११।५।४।१८ ।

तीन् योद्धृन् भ्रामयितुं शक्नोति[1]। शतहस्तिसमबलवान् भवति[2]। तस्माद् ब्रह्मचर्याश्रमे ब्रह्मचारिणेन्द्रियनिग्रहे सदैवाप्रमत्तेन भाव्यम्[3]।

**( ख ) गृहाश्रमः—**

वेदानधीत्याविप्लुतब्रह्मचर्यः पुरुषो गृहस्थाश्रमं प्रविशेत्। सोऽयं गृहस्थाश्रमः सर्वभूतेभ्यः पूज्यो ज्येष्ठाश्रमश्चास्ति। योग्याचारव्यवहारैर्नियोजितः स्वस्य राष्ट्रस्य चाभ्युदयाय भवति नो चेद्दुःखाय। यथा हि खलु सर्वजन्तवो वायुमाश्रित्य वर्तन्ते तथैव गृहस्थाश्रममाश्रित्य सर्व आश्रमा वर्तन्ते[4]। त्रयोऽप्याश्रमिणोऽन्नेन गृहस्थः पोषयति ततः श्रेष्ठोऽयमुच्यते स स्वर्गमक्षयसुखमिच्छद्भिर्जितेन्द्रियैः संधार्यः।

ब्राह्मणेषु गृहाश्रमविषय आख्यानमेकं दृश्यते। प्रजापतिरेक एवासीदग्रे। स वै नैव रेमे! तस्मादेकाकी न रमते। स द्वितीयमैच्छत्। स हैतावानास यथा स्त्रीपुमांसौ परिष्वक्तौ। स इममेवात्मानं द्वेधाऽपातयत्। ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धवृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यते[5]। एतेनावगम्यते यद्दम्पतिरूपाभ्यां स्त्रीपुंभ्यामेव गृहाश्रमः सन्धार्यते। एतद् गृहाश्रमविषये विस्तरेणोपरिष्टात् प्रस्तोष्यते।

**( ग ) वानप्रस्थाश्रमः—**

प्रथमाश्रमो विद्यार्जनाय ब्रह्मचर्याश्रमः। द्वितीयो धनार्जनायार्थकामाभ्यां प्रजोत्पादनपालनाय गृहाश्रमः। तृतीयः पुत्रपौत्रकलत्रधनगृहादिविरहितो वानप्रस्थाश्रमो योगाभ्यासेन परमेश्वरसाक्षात्करणायोपदिष्टो भवति। तृतीयाश्रमेण विना जनसमाजस्यार्थव्यवस्थाऽपि व्येति। अर्थमवलम्ब्य पितापुत्रयोः स्नुषावध्वोः कलहो भवति। तेषु सौहार्दं प्रीतिर्वा नोपजायते। यतो वृद्धः खलु सर्वगृहसदस्यानेकछत्र-

---

१. द्र० दयानन्दभाष्यम्।

चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्।

बृहच्छरीरो विमिमान ऋक्वभिर्युवा कुमारः०। ऋ० १।५६।६।

२. हस्ती मृगाणां सुषदामतिष्ठावान् बभूव हि।

तस्य भगेन वर्चसाभिषिञ्चामि मामहम्। अथर्व० ३।२२।६।

३. ब्रह्मचारीविषये विशेषेण शैक्षणिकेऽधिकरणे निर्दिष्टं तत्रैव द्रष्टव्यम्।

४. द्र० मनु० ३।७७।

५. शत० बा० १४।४।२।४–५।

प्रकाशकोऽशुभगुणनाशकश्च भवति। "दीर्घसत्रं वा एष उपैति यो ब्रह्मचर्यमुपैति[१]। ब्रह्मचर्येण तपसैव राजा राष्ट्रं रक्षितुं क्षमो जायते[२] तेनैव देवा मृत्युं जयन्ति[३]। ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभो भवति[४]। वीर्येणैवोर्ध्वगतिमत्वाच्चरमोऽष्टमो धातुरोजो निष्पद्यते। ओजसा विहीनो निस्तेजा भीरुर्निर्बलश्च जायते तत एव परमेश्वराद्याच्यते यन्मयि शरीर-बुद्धिशौर्यस्फूर्त्यादिवीर्यं पराक्रमं स्थिरं धारय, मय्योजः सत्यं विद्याबलं धेहि[५]। यो ब्रह्मचर्यं चरति स इन्द्रियजयी तपस्वी च भवति। अथ हैतद्देवानां परिषूतं भवति यो ब्रह्मचारी भवति[६]। तस्य प्रज्ञा वर्धते।

अथर्ववेदीयगोपथब्राह्मणे ब्रह्मचारिचरित्रनिर्देशो विहितः—"तान्तवं न वसीत। यस्तान्तवं वस्ते क्षत्रं वर्द्धते न ब्रह्म, तस्मात्तान्तवं न वसीत ब्रह्म वर्धतां मा क्षत्रमिति" तन्तुवस्त्रधारणेन क्षत्रं वर्धते[७]। अथ चाप्यधः शयीत, उपरिशायी मा स्यात्। नो चेत् पुनः पुनः गृहाणि जन्मानि भविष्यन्ति। अध एवासीत अधः शयीताधस्तिष्ठेदधो व्रजेत्[८]। स्वाजीविकायै प्राणयात्रार्थं भिक्षामाहरेत्[९]। न ब्रह्मचारी सन् मध्वश्नीयात्। ओषधीनां वा एष परमो रसो भवति यन्मधु भवति[१०]।

तेन ब्रह्मचर्यव्रतानुष्ठानेन स एकोऽसहायोऽपि गोलचक्रवच्चतुर्णव-

---

१. शत० ब्रा० ११।३।३।२।

२. ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति। अथर्व० ११।५।१७।

३. ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत। अथर्व० ११।५।१९।

४. योग० २।३८।

५. ओजोऽस्योजो मयि धेहि मन्युरसि मन्युं मयि धेहि सहोऽसि सहो मयि धेहि। यजु० १९।९।

६. गो० ब्रा० पूर्वगोपथ २।७।

७. पूर्वगोपथ २।४।

८. नोपरिशायी स्यान्न गायनो न नर्त्तनो न सरणो न निष्ठीवेत्। यदुपरिशायी भवत्यभीक्ष्णं निवासा जायन्ते।

गो० ब्रा० पूर्वगोपथ २।७, २।४।

९. इमां भूमिं पृथिवीं ब्रह्मचारी भिक्षामाजभार प्रथमो दिवं च।

अथर्व० ११।५।९, द्र० शत० ब्रा० ११।३।३।५।

१०. द्र० शत० ब्रा० ११।५।४।१८।

तीन् योद्धॄन् भ्रामयितुं शक्नोति[1]। शतहस्तिसमबलवान् भवति[2]। तस्माद् ब्रह्मचर्याश्रमे ब्रह्मचारिणेन्द्रियनिग्रहे सदैवाप्रमत्तेन भाव्यम्[3]।

**( ख ) गृहाश्रमः—**

वेदानधीत्याविप्लुतब्रह्मचर्यः पुरुषो गृहस्थाश्रमं प्रविशेत्। सोऽयं गृहस्थाश्रमः सर्वभूतेभ्यः पूज्यो ज्येष्ठाश्रमश्चास्ति। योग्याचारव्यवहारैर्नियोजितः स्वस्य राष्ट्रस्य चाभ्युदयाय भवति नो चेद्दुःखाय। यथा हि खलु सर्वजन्तवो वायुमाश्रित्य वर्तन्ते तथैव गृहस्थाश्रममाश्रित्य सर्व आश्रमा वर्तन्ते[4]। त्रयोऽप्याश्रमिणोऽन्नेन गृहस्थः पोषयति ततः श्रेष्ठोऽयमुच्यते स स्वर्गमक्षयसुखमिच्छद्भिर्जितेन्द्रियैः संधार्यः।

ब्राह्मणेषु गृहाश्रमविषय आख्यानमेकं दृश्यते। प्रजापतिरेक एवासीदग्रे। स वै नैव रेमे। तस्मादेकाकी न रमते। स द्वितीयमैच्छत्। स हैतावानास यथा स्त्रीपुमांसौ परिष्वक्तौ। स इममेवात्मानं द्वेधाऽपातयत्। ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यते[5]। एतेनावगम्यते यद्दम्पतिरूपाभ्यां स्त्रीपुंभ्यामेव गृहाश्रमः सन्धार्यते। एतद् गृहाश्रमविषये विस्तरेणोपरिष्टात् प्रस्तोष्यते।

**( ग ) वानप्रस्थाश्रमः—**

प्रथमाश्रमो विद्यार्जनाय ब्रह्मचर्याश्रमः। द्वितीयो धनार्जनायार्थकामाभ्यां प्रजोत्पादनपालनाय गृहाश्रमः। तृतीयः पुत्रपौत्रकलत्रधनगृहादिविरहितो वानप्रस्थाश्रमो योगाभ्यासेन परमेश्वरसाक्षात्करणायोपदिष्टो भवति। तृतीयाश्रमेण विना जनसमाजस्यार्थव्यवस्थाऽपि व्येति। अर्थमवलम्ब्य पितापुत्रयोः स्नुषावध्वोः कलहो भवति। तेषु सौहार्दं प्रीतिर्वा नोपजायते। यतो वृद्धः खलु सर्वगृहसदस्यानेकछत्र-

---

१. द्र० दयानन्दभाष्यम्।
चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्।
बृहच्छरीरो विमिमान ऋक्वभिर्युवा कुमारः०। ऋ० १।५६।६।

२. हस्ती मृगाणां सुषदामतिष्ठावान् बभूव हि।
तस्य भगेन वर्चसाभिषिञ्चामि मामहम्। अथर्व० ३।२२।६।

३. ब्रह्मचारीविषये विशेषेण शैक्षणिकेऽधिकरणे निर्दिष्टं तत्रैव द्रष्टव्यम्।

४. द्र० मनु० ३।७७।

५. शत० बा० १४।४।२।४–५।

शासनेन शास्तुकामो भवति तस्मात् सर्वं द्रविणमपि स्वान्तिक एव निदधाति। यतो ह्यर्थोष्मणा विरहितं न कश्चित् पूजयते। पुत्राश्च स्वातन्त्र्यमभिलषन्ति तस्मात् सर्वं धनमायुषस्तृतीये भागे सर्वैः स्वेच्छया पुत्रेभ्यस्त्यक्तव्यं[1] तेनोभयपक्षस्य तुष्टिर्भवति। यत एतेषां भोगानां वियोगे न कश्चित् संशयः। इमे स्वातन्त्र्यात् परिव्रजन्तो मनसोऽतुलसन्तापाय भवन्ति स्वमनसा त्यक्ताश्च शशमसुखं विदधति[2]।

रजस्तमोभ्यां दुष्टा गृहिणो लोभालस्यादिनेन्द्रियविषयसुखं त्यक्तुं नेच्छन्ति। सत्वगुणप्रकर्षी तावत् विषयान् सर्वसंगाँश्च त्यक्त्वा परमात्मानं साक्षात्कर्तुं 'वने वृक्षमूलनिकेतनः' संयमी भूत्वा सततं योगं सेवेत[3]। स्वाश्रितकुटुम्बभरणचिन्तां परित्यज्याऽऽत्मानमेव केवलं चिन्तयेत्[4]।

ब्रह्मचर्याश्रमं समाप्य गृहस्थो जायेत। गृही भूत्वा वनस्थः स्यात्। गृहस्थाश्रमे वसन् यदा पुरुषो वलोपलितमात्मानं पश्येत्, अपत्यस्य चापत्यं भवेत्तदा वनं गन्तव्यं वानप्रस्थाश्रमश्चारब्धव्यः[5]। तपः श्रद्धापूर्वकं वानप्रस्थाश्रमे निवसतामुपनिषद्येवमुच्यते—

तपः श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा[6]॥

वानप्रस्थाश्रमस्थः पुरुषो न गृहं वसेत्। वने चापि न छदियुक्ते देशे वसेत्। ग्राम्यमाहारं ग्राम्यपरिच्छदं सन्त्यज्य पुत्रेषु भार्यां निक्षिप्य सहैव वा नीत्वा ब्रह्मचर्येण नियतेन्द्रियोऽरण्यं निवसेत्। तत्र स्वाध्याय-

---

१. तु० मनु० ६।३।

२. द्र० भर्तृहरिः, वैराग्यशतके १२।

३. द्र० मनु० ६।२६।

४. आत्मानं निरुध्य सङ्गममात्रीं भूतार्थचिन्तां चिन्तयेदतिक्रम्य वेदेभ्यः सर्वपरमध्यात्मफलं प्राप्नोति।
गो० ब्रा० पूर्वगोपथ १।३०।

५. आ नयैतमारभस्व सुकृतां लोकमपि गच्छतु प्रजानन्।
तीर्त्वा तमांसि वहुधा महान्त्यजो नाकमाक्रमतां तृतीयम्॥
अथर्व० ९।५।१।

६. मुण्डकोपनिषदि २।११।

युक्तो दान्तो दाता सर्वभूतानुकम्पकः स्यात्। तथा गृहमेधिभ्यो वनवासिभ्यो द्विजेभ्यो भैक्ष्यमाहरेत्[1]।

**( घ ) संन्यासाश्रमः—**

सम्यङ् न्यस्यन्त्यधर्माचरणानि येन, सम्यङ्नित्यं सत्कर्मस्वास्त उपविशति स्थिरीभवति येन वा स संन्यासः, संन्यासो विद्यते यस्य स संन्यासी[2]।

द्विविधः संन्यासो भवति—उत्कृष्टो निकृष्टश्च। यो विद्याप्राप्त्यै गृह्यते स निकृष्टः। यश्च ब्रह्म साक्षात्कृत्य परोपकाराय प्रव्रजेत् स उत्कृष्टः[3]। स संन्यासः कदा धारणीय इति जिज्ञासायां प्रोक्तम्—यदहरेव विरजेत्तदहरेव प्रवजेत् वनाद्वा गृहाद्वा[4]। न तत्राश्रमस्यायुषो वा कश्चित् प्रत्यवायः। स परिव्राजक एव लोककल्याणहेतुत्वादतिथिरुच्यते न स्वज्ञातयः कुटुम्बिनो वा[5]।

**संन्यासिकृत्यानि**—आयुषस्तृतीयं भागं वने व्यतीत्यायुषश्चतुर्थे भागे परिव्रजेत्। सोऽनग्निरनिकेतो भूत्वा ग्राममन्नार्थमाश्रयेत्। स्वमरणं जीवितं वा नाभिनन्देत, निर्देशकारिभृत्यवत् कालमेव प्रतीक्षेत[6]। अध्यात्मरतिर्निरामिष आत्मनैव सहायेन सुखार्थी स्यात्। दण्डी पात्री कुसुम्भवान् क्लृप्तकेशनखश्मश्रुः सर्वभूतहितार्थं भूतान्यपीडयन् नित्यं विचरेत्। दूषितोऽपि धर्ममेव चरेत्[7]। सर्वेषु भूतेषु समः स्यात्[8]! पापस्य खण्डनं धर्मस्य च मण्डनं कुर्यात्[9]। भोजनमपि

---

१. द्र० मनु० ६।१–७।

२. द्र० दयानन्दः, संस्कारावविधि पृ० १६४।

३. द्र० दयादन्दः, ऋ० भा० भू० २४२।

४. ब्रह्मचर्यं समाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्।
वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा॥
जाबालोपनिषत् ४।

५. प्रियो विशामतिथिर्मानुषाणाम्। ऋ० ५।१।९।

६. द्र० मनु० ६।४३, ४५।

७. द्र० मनु० ६।५२।

८. मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। यजु० ३६।१८।
यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति॥ यजु० ४०।६।

९. हन्ता पापस्य रक्षसस्त्राता विप्रस्य मावतः। ऋ० १।१२९।११।

गृहस्थानां गृह एव कुर्यान्न स्वयंपाकी स्यात्[१]।

अनेन विधिना सर्वान् संगान् त्यक्त्वा सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते। स संन्वासी ब्रह्मसंस्थोऽमृतत्वमेति महत्प्राशस्त्यमेति। यदयं संन्यासी परेभ्योऽभिवदति तद् दीक्षामुपैति, यदुदकं याचत्यपः प्रणयति। या एव यज्ञ आपः प्रणीयन्ते ता एव ताः। यदावसथान् कल्पयति सदो हविर्धानान्येव तत्कल्पयति। यदुपस्तृणाति बर्हिरेव तत्[२]। अथ च यदत्ति तदग्नौ जोहवीति, यद्धस्तेन भक्षयति तत्स्रुचा हूयते। एवं तस्य विदुषः संन्यासाश्रमरूपयज्ञस्य यजमान आत्मा, परमात्मनि सत्यधर्माचरणेषु सर्वभूतानां हितचिन्ता या सा तस्य भार्या। यच्छरीरं तद्यज्ञस्येध्मः, यदुरः तद्वेदिस्थानम्, यानि तस्य शरीरे रोमाणि तानि बर्हींषि। यद्वेदाचरणमास्ते तत् संन्यासिनः शिखा। यद् हृदयं तद्यज्ञस्तूपः। यदस्य कामस्तदाज्यम्। यन्मन्युस्तदुत्सर्जनीयं मलम्। यत् सत्यधर्मानुष्ठानं प्राणायामं योगाभ्यासञ्चाचरते तदग्निः। यदधर्माचरणादिन्द्रियाणि प्रतिनिवर्तन्ते तत् खलेभ्यो दण्डप्रदानमभिशापो वा। याऽस्योपदिशन्ती वाक् सर्वभूतेभ्योऽभयदा सा दक्षिणा। येऽस्य प्राणास्ते होतारः। यच्चक्षुस्तदुद्गाता। यन्मनस्तदध्वर्युः। यच्छ्रोत्रं तद् ब्रह्मा। यावन्मात्रं ध्रियते वस्त्रादीनि सा दीक्षा। यदश्नाति तदाज्यादिकं हूयमाना हविः। यज्जलं पयो वा पिबति तदस्य सोमपानम्। यद्रमते परिव्रजति तदुपसदः। यत् संचरत्युपविशत्युत्तिष्ठते[३] स प्रवर्ग्यः। यन्मुखं तदाहवनीयः। यद् व्याहृतेरुच्चारणं तज्जुहोति। यत् सायं प्रातः भुङ्क्ते तदग्नौ समिधं जुहोति, एवं संन्यासी सर्वयज्ञरूपो भवति[४]। एवंविधो विद्वानुदगयने संन्यासदीक्षामवाप्य विज्ञानं योगाभ्यासञ्चाभ्यस्यमानः शरीरमुत्सृजति स देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति, पितॄणां महिमानं चन्द्रमसः सायुज्यं सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वान् संन्यासी स आप्नोति[५]।

---

१. आ भोगयं प्रयदिच्छत ऐतनापाकाः प्राञ्चो मम केचिदापयः।

ऋ० १।११०।२।

२. अथर्व० ९।६। (१) ४–८।

३. यः पञ्चचर्षणीरभिनिषसाद दमे दमे॥ ऋ० ७।१५।२।

४. द्र० दयानन्दः संस्कारविधिः पृ० २०९–२१२।

५. तै० आ० १०।६४।

स खलु दीक्षमाणस्तिस्र एषणाः परित्यजति । पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्चोत्थाय भिक्षाचर्यं चरति[1] । एवंविधः संन्यासी विद्वान् कस्यचिद् गृहे समागच्छेत्तदा[2] गृहपतिः स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्य । क्वावात्सीः । व्रात्योदकम् । व्रात्य । तर्पयतु । व्रात्य । यथा ते प्रियं तथास्तु । व्रात्य । यथा ते वशस्तथास्तु । व्रात्य । यथा ते निकामस्तथास्तु[3] । संन्यासी परमेश्वरदेवताकामिष्टिं हृदये कृत्वा सर्वमेतन्निश्चित्य तस्या शिखासूत्रादिकं सर्वं हुत्वा मुनिर्मननशीलः सर्वभूतश्रिये प्रव्रजति । एवं सत्योपदेश एव संन्यासिनां ब्रह्मयज्ञः, देवयज्ञो ब्रह्मोपासनम्, विज्ञानिनां प्रतिष्ठाकरणं पितृयज्ञोऽज्ञेभ्यो ज्ञानदानं सर्वेषां भूतानामुपर्यनुग्रहोऽपीडनञ्च भूतयज्ञः । सर्वमनुष्योपकारार्थं भ्रमणमभिमानशून्यता सर्वमनुष्याणां सत्कारानुष्ठानं चातिथियज्ञः । एते पञ्चमहायज्ञा विज्ञानधर्मानुष्ठानमयाः सर्वे संन्यासिनामन्तर्भाव्यन्ते ।

एवं सूचीकटाहन्यायेनाश्रमाणां संक्षिप्तं वृत्तं निरूप्य गृहाश्रमविषये कानिचिद्विशेषवृत्तानि वितन्यन्ते ।

## ( ३ ) विवाहवृत्तम्

### ( क ) स्वयंवरः—

प्राप्तयौवनाः कन्या गृहस्थाश्रमव्यवहाराय स्वयंवरविधिना परिणयं कुर्युः । गुणकर्मस्वभावेन स्वसदृशं पतिं स्वयमेव वृणुयुः[4] । कन्यया सर्वा वार्ताः पृष्ट्वा मित्रं हृद्यः भर्ता स्वीकर्तव्यः[5] । यतो याः सत्कारं कुर्वन्त्यो ब्राह्मचारिण्यो युवतयो धेनवो वृषभानिव ब्रह्मचारिणो

---

१. शत० ब्रा० १४।७।२।२६ ।

२. यदा वीरस्य रेवतो दुरोणे स्योनशीरतिथिराचिकेतत् ।
सुप्रीतो अग्निः सुधितो दम आ स विशे दाति वार्यमियत्यै ।।
ऋ० ७।४२।४ ।

३. द्र० अथर्व० १५।११।२ ।

४. विन्देत सदृशं पतिम् । मनु० ९।९० ।

५. भद्रा वधूर्भवति यत् सुपेशाः स्वयं सा मित्रं वनुते जने चित् ।
ऋ० १०।२७।१२ ।
तं पृच्छन्ती वज्रहस्तम्० । ऋ० ६।२२।५ ।

युवकान् पतीन् कामयन्ते ताः श्रेष्ठं पुत्रमाप्नुवन्ति[1]। यथा च ब्रह्मचारिणी प्रसिद्धकीर्तिं सत्पुरुषं सुशीलं शुभगुणरूपसमन्वितं प्रीतिमन्तं पतिं गृहीतुमिच्छेत्तथैव ब्रह्मचार्यपि स्वसदृशीमेव ब्रह्मचारिणीं स्त्रियं गृह्णीयात्। भार्या पुराकृतकर्मानुसारं जन्मना नियता भवति। सा पुरुषेण ज्ञातव्या विज्ञाय च धर्मेण ग्रहीतव्या[2]। न च गृहस्थस्य पत्नीं विना यज्ञः सम्भवति। उच्यते हि अयज्ञो वा एषः योऽपत्नीकः[3]। पत्नी चापि यज्ञसंयोगादेव जायात्वमर्हति[4]। तदेव च जायानां जायात्वं भवति यच्चासु पुरुषा जायन्ते[5]।

### (ख) विवाहे वहतुप्रथा—

विवाहप्रसङ्गे काश्चित् प्रथा विद्यन्ते यासु वहतुप्रथा विशेषा। परिणयकाले वरपक्षेभ्यः कन्यया सह यद्धनं प्रदीयते तद्वहतुपदेनाभिधीयते। यद्यपि कन्यया सहाभूषणधनप्रदानं नास्ति पापरूपं तस्यानेकेषु मन्त्रेषु विधानात्। वरपक्षेण बलात्प्रचोदितात् कन्यापितुः स्वसामर्थ्यादधिकधनग्रहणमेव पापरूपम्। वहतुधनं दातुमक्षमाणा पितॄणां युवतयो विद्यारूपलावण्ययुक्ताः कन्या अपि कौमार्यव्रतेन देहमुपशोषयन्ति

---

१. या जामयो वृष्ण इच्छन्ति शक्तिं नमस्यन्तीर्जानते गर्भमस्मिन्।
अच्छा पुत्रं धेनवो वावशाना महश्चरन्ति बिभ्रतं वपूंषि॥
ऋ० ३।५७।३।

२. अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि।
ऋ० १०।८५।२१।
पत्नी त्वमसि धर्मणाऽहं गृहपतिस्तव। अथर्व० १४।१।५१।
गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः।
अथर्व० १४।१।५०।

३. तै० ब्रा० २।२।२।

४. पत्युर्नो यज्ञसंयोगे पा० ४।१।३३।
क्रीता द्रव्येण या नारी सा न पत्नीविधीयते।
बोधायनधर्मसूत्रम् १।११।२०।४।

५. पतिर्जायां प्रविशति गर्भो भूत्वा समातरम्।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते॥ ऐ० ब्रा० ७।१३।
तद् यदब्रवीदाभिर्वाऽहमिदं सर्वं जनयिष्यामि यदिदं किञ्चेति तस्माज्जाया अभवंस्तज्जायानां जायात्वं यच्चासु पुरुषो जायते।
गो० ब्रा० पूर्वगोपथ १।२। (अग्रिमे पृष्ठे)

समाजश्च नित्यमभिशपन्ते। वेदेषु तावद् दृश्यते यत्पिता दुहितुर्विवाहकाले दुहित्रा सह प्रीत्या प्रस्थापनीयं वस्त्रालङ्कारादिद्रव्यं ददाति[१]। अथ चापि वधूर्मह्यं धनमदात्[२]। अहं वध्वा विविधैरश्वैर्मुद्राभिश्च समृद्धः स्यामि[३]-त्यर्थकानि वचनानि समुपलभ्यन्ते। यः पिता दुहित्रे वाधूयं वस्त्रमाभूषणानि सुवर्णं गौश्च ददाति स स्वशत्रून् हन्ति[४]। एतादृशैर्मन्त्रैर्विज्ञायते यत् श्रुतिर्वहतुधनमनुचितं न मन्यते तथापि प्रसह्य गृहीतधनस्य तु निन्दैव विधीयते। अतः समवयस्कां समधनरूपविद्यावतीं कन्यामेव वाञ्छेत्।

अथ विचार्यते विवाहः कयोर्द्वयोः शास्त्रोचितः कयोश्च शास्त्रविगर्हित इति। कीदृशीं स्त्रियमुद्वहेत्। तत्र चोक्तं मनुना—या मातुरसपिण्डा पितुश्चासगोत्रा भवेत् सा द्विजातीनां दारकर्मणि प्रशस्यते। स्वगोत्रजा स्वसृवदेव भवत्यत आयुर्वेदेऽपि तयोर्द्वाहो निषिध्यते[५]। वेदेषु चापि स पापभाग् भवति[६] निर्ऋतिमाप्नोतीत्युच्यते[७]। अतः

---

अर्धो वा एष आत्मनो यज्जाया तस्माद् यावज्जायां न विन्दते नैव तावत् प्रजायतेऽसर्वो हि तावद् भवत्यथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि हि सर्वो भवति। शत० ब्रा० ५।२।१।१०।

१. द्र० सायणभाष्यम्।
त्वष्टा दुहित्रे वहतुं युनक्ति। अथर्व० ३।३१।५।

२. रयिं च पुत्रांश्चादात्। अथर्व० १४।२।४।

३. उप मा श्यावाः स्वनयेन दत्ता वधूमन्तो दश रथासो अस्थुः।
षष्टिः सहस्रमनुगव्यमागात्०। ऋ० १।१२६।३।

४. वाधूयं वासो वध्वश्च वस्त्रम्।
यो ब्रह्मणे चिकितुषे ददाति स इद् रक्षांसि तल्पानि हन्ति।
अथर्व० १४।२।४१–४२।

इदं हिरण्यं गुल्गुल्वयमौक्षो अथो भगः।
एते पतिभ्यस्त्वामदुः प्रतिकामाय वेत्तवे॥
अथर्व० २।३६।७, द्र० २।३६।६।

आच्छाद्याऽलङ्कृत्यैषा सहधर्मं चर्यतामिति।
बौधायनधर्मसूत्रम् १।११।२०।३।

५. अतुल्यगोत्रस्य। चरके शारीरे २।३।

६. पापमाहुर्यः स्वसारं निगच्छात्। ऋ० १०।१०।१२।

७. किमु स्वसा यन्निर्ऋतिर्निगच्छात्। अथर्व० १८।१।१२।
ऋ० १०।१०।११।

परगोत्रासु पुत्रा उत्पादनीयाः[1]। सवर्णाः समलक्षणान्विता[2] अव्यङ्गा-ङ्ग्यः सौम्यनाम्न्यो हंसवारणगामिन्यश्चोद्वाहनीयाः। स्मृत्यादिष्वेतद् विस्तरेण प्रतिपादितं यद्दारकर्मणि कीदृश्यः कन्या वाञ्छनीयाः। अत्र तु वेदमनुसृत्य दिग्दर्शनमेवाभीष्टम्।

स विवाहोऽविच्छेद्यो भवति यतः पाणिग्रहणावसरे वधूर्ध्रुवं नक्षत्रं दृष्ट्वा वरं प्रति प्रतिजानीते—'ध्रुवमसि ध्रुवाऽहं पतिकुले भूयासम्'[3]। यथा द्यौर्ध्रुवा पृथिवी ध्रुवा विश्वमिदं जगत् ध्रुवमस्ति। यथा चेमे पर्वता ध्रुवास्तथैवेयं स्त्री पतिकुले ध्रुवा भूयात्[4]। तथैव वरो ब्रूते—'ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वादात् बृहस्पति-र्मया पत्या प्रजावती संजीव शरदः शतम्'[5]। श्रूयते चापि 'इहैव स्तं मा वियौष्टम्'। विश्वमायुर्व्यश्नुवतम्[6]। यथा श्रुतौ विवाहस्याविच्छेद्यत्व-माम्नायते तथैवोत्तरवर्तिग्रन्थेष्वपि। तद्यथा—

न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते।
अन्योन्यस्याव्यभिचारो एष आमरणान्तिको भवेत्[7]॥

न च व्यभिचारादिभिस्तस्यापगमो युक्तः संस्कारनिमित्तत्वाद् दारशब्दस्य। तस्य च पतनेऽप्यनपगमात्। अत एव पतिता योषितः कृतप्रायश्चित्ताः पुनर्न संस्क्रियन्ते[8]।

केचिदाचार्याश्च विवाहमापद्धर्मे विशिष्टावस्थायां वा विच्छेद्यमपि मन्यन्ते ते च स्वपक्षं वेदेनापि साधयन्ति 'धर्मप्रजासम्पन्ने दारे नान्यां

---

१. अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान्।
ऋ० १०।१८३।३।

२. सलक्ष्मा यद् विषुरूपा भवाति०। अथर्व० १८।१।२।

३. गोभिलगृह्यसूत्रम् २।३।८।

४. अस्थाद् द्यौरस्थात् पृथिव्यस्थाद् विश्वमिदं जगत्।
आस्थाने पर्वता अस्थुः। अथर्व० ६।७७।१।
द्यौरहं पृथिवी त्वं तावेव विवहावहै सह रेतो दधावहै।
पारस्कर० १।६।३। तु० अथर्व० १४।२।७१।

५. पारस्कर० १।८।

६. अथर्व० १४।१।२२, द्र० ६।७।३।

७. मनु० ९।४६, ९।१०१।

८. तु० याज्ञवल्क्यस्मृतिः ३।२५४।

कुर्वीत'[1] इत्यापस्तम्बधर्मसूत्रवचनेनावगम्यते धर्मप्रजाविरहितासु दारास्वन्याः कुर्वीतेति । अर्थशास्त्रे चापीदं साधितं या भार्या पतिं द्वेष्टि सा त्याज्यैव[2] । एवमेव वन्ध्याऽष्टमे वर्षे मृतप्रजा दशमे स्त्रीजननी चैकादशे चाप्रियवादिनी च सद्य एव त्याज्या[3] । वेदेषु परित्यक्ता इत्यर्थे 'परिवृक्ता' इति पदं दृश्यते । सा पतिद्वेष्ट्री परिवृक्ता भवति[4] । या च परित्यक्ता स्त्री भवति सा पुनर्विवाहमपि कर्तुं क्षमा जायते । तथा हि 'या पूर्वं पतिं वित्वाऽथान्यं विन्दतेऽपरम्'[5] इति मन्त्रेणानुमीयते यत् क्वचिद् विवाहे विच्छेदोऽपि संभवति परन्तु सामान्यरूपेण प्रशस्यत्वेन च सकृद् विवाह एवाऽभिनन्दितः[6] ।

**( ग ) पुनर्विवाहः—**

मृतभर्तृकाया मृतभार्यस्य वा पुनर्विवाहो वाञ्छनीयो न वेति विषये शास्त्रकारैर्द्वे मते समुपन्यस्ते । तयोर्नियोग इत्येके स्वसदृश-विवाहश्चापरे । यदि ते ब्रह्मचर्यव्रतं चरितुमनभिलाषिणः स्युः पुत्रार्थि-नश्च भवेयुस्ते पुत्रार्थं नियोगं कुर्युः । एका विधवा द्वौ पुत्रावात्मार्थं स्ववर्णवतोच्चवर्णवता वा नियुक्तेनोत्पादयितुमर्हति द्वौ द्वौ चापरेभ्यः स्ववर्णस्थेभ्य उच्चवर्णस्थेभ्यो वा । एवमेव नियुक्तः पुरुषोऽपि द्वौ पुत्रावात्मार्थं द्वौ द्वौ चापराभ्यः चतसृभ्यो मृतभर्तृकाभ्यः प्रदातुमर्हत्येवं दशपुत्रोत्पादनं विहितम्[7] ।

यं पुरुषमपत्योत्पादनाय विधवा नियुङ्क्ते स तस्य द्वितीयवरत्वाद् देवर इत्युच्यते[8] । नहि नियोगे कश्चिद् व्यभिचारो लज्जा वा मन्तव्या । यथा विवाहे न काऽपि त्रपा भवति तथैव गुरुपुरुषाणामनुज्ञया स्त्रीपुरुषौ

---

१. २।५।११।१२ ।

२. कौ० ३।३ ।

३. मनु० ९।८१ ।
द्र० याज्ञवल्क्यस्मृतिः १।७२–७३ ।

४. द्र० ऋ० १०।१०२।११ ।

५. अथर्व० ९।५।२७–२८ । वित्वा = हित्वा । द्र० सायणभाष्यम् ।

६. न दत्वा कस्यचित् कन्यां पुनर्दद्याद् विचक्षणः ।
दत्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ।। मनु० ९।७१ ।

७. इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ।
दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ।। ऋ० १०।८५।४५ ।

८. द्र० नि० ३।१५ ।

संवसेताम्[1]। विधवानियोगस्य सम्बन्धः क्वचिदलङ्कार‌रूपेण[2] क्वचिदाज्ञारूपेण[3] क्वचिच्चाशीर्वादेनाभ्यनुज्ञायते[4]। स नियोगोऽविशेषेण तु दम्पत्योरेकस्य मरणानन्तरमेव भवितुं प्रभवति तथापि कदाचिज्जीवतोरपि सन्तानोत्पादनाक्षमत्वे भवितुमर्हति[5]। एवञ्च पुनर्विवाहो नोचितस्तत्र नियोग एव करणीयः[6]।

अपरे तु मृतभर्तृकाया मृतभार्यस्य वा पुनर्विवाहोऽपि वाञ्छनीय एवेति वदन्ति तेन व्यभिचरणादिमहतां दोषाणां समाधानात्[7]। यतो यथा भूमावुत्सृष्टमामिषं खगाः प्रार्थयन्ति तथा जना पतिहीनां स्त्रियं प्रार्थयन्ति[8]। श्रुतिश्चापि पुनर्विवाहमनुजानात्येव। तद्यथा—"उदीर्ष्व नार्यभिजीवलोकम्"[9] इत्यस्य मन्त्रस्य व्याख्याने सायणाचार्यो व्याचष्टे—त्वं हस्तग्राभस्य पाणिग्राहवतो दिधिषोः पुनर्विवाहेच्छोः पत्युरेतज्जनित्वं जायात्वमभिसंबभूवाऽऽभिमुख्येन सम्यक् प्राप्नुहि[10]। तथा चोक्तमथर्ववेदे—इयं नारी धर्मं पुराणमनुपालयन्ती मृतपतिलोकादन्यं मर्त्यमेति। तस्यै प्रजा द्रविणञ्च प्रदातव्यमिति[11]।

उभयपक्षविचारणेन सिध्यतीदं यद्युवतिविधवायाः सकामायाः कृते प्रभूतानिष्टनिवारणाय पुनर्विवाह उचित एव नियोगस्याप्रथत्वात्

---

१. तु० दयानन्दः, ऋ० भा० भू० पृ० २१०–२१४।

२. को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते०।

ऋ० १०।४०।२।

३. उदीर्ष्व नार्यभिजीवलोकं गतासुमेतमुपशेष एहि।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभिसम्बभूथ॥

ऋ० १०।१८।८।

४. अदेवृघ्न्यपतिघ्नी शिवा पशुभ्यः सुयमा सुवर्चाः।
प्रजावती वीरसूर्देवृकामा स्योनममग्निं गार्हपत्यं समर्य॥

अथर्व० १४।२।१८।

५. द्र० अन्यमिच्छस्व सुभगे पतिं मत्। ऋ० १०।१०।१०।

६. बौधायनधर्मसूत्रम् २।३।१४।

७. तु० चातुर्वर्ण्यसमीक्षा भाग १ पृ० १३६।

८. महाभारते आदिपर्वणि १५७।१२।

९. ऋ० १०।१८।८।

१०. द्र० सायणभाष्यम् तै० आ० ६।१।

११. अथर्व० १८।३।१।

लोकदृष्टत्वाच्च[1]।

## ( ४ ) सन्ततिवृत्तम्

ऐहिकपारलौकिकाभ्युदयाय पुत्र उत्पादनीयः[2]। पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायत इति वा[3]। पुन्नाम नरकमनेकशतधारं तस्मात् त्रातेति पुत्रस्तत् पुत्रस्य पुत्रत्वम्[4]। प्रजा वै तन्तुर्भवति[5] तत् "प्रजातन्तुं मा व्यवच्छैत्सीः"[6] इत्यारण्यकोक्तत्वात् पितरः प्रजातन्तुमातन्वन्तो विवाहकर्मणा पुत्रमास्थापयन्ते[7]। प्रजापशुकामाश्च[8] दृश्यन्ते लोके, यतः पुत्रः पित्रे सुखं प्रददाति[9] वंशं प्रवर्तयति[10]। अङ्के धार्यमाणोऽनुपममानन्दं जनयति[11]। बालसुलभानुनयैश्चित्तं मोहयति[12]। पुत्र एव पितुर्मरणानन्तरं श्राद्धमाचरति[13]। अतोऽपुत्रो लोके शास्त्रे च निन्द्यते,[14] तस्य च गृहं शून्यमिव भवति। तत्र चेदमाख्यानं श्रूयते—

---

१. देवृगृहे रूप्यकं प्रदाय विधवायै देवरं नियोजयन्ति तौ च दम्पतीवदाचरेतेति लोकदृष्टम्।
तु० चातुर्वर्ण्यसमीक्षा भाग १ पृ० १४४–१४५।

२. पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो वितारीत्।
ऋ० १।६९।५।
पुमांसं पुत्रं जनय तं पुमाननुजायताम्। अथर्व० ३।२३।३।

३. नि० २।११।

४. पुत्रार्थं जनितश्चायं पुन्नाम्नो बिभ्यता। मार्कण्डेयपुराणम् ७३।६।

५. ऐ० ब्रा० ३।३८।

६. तै० आ० ७।११।१। मा तन्तुश्छेदि। ऋ० ३।२८।५।

७. द्विधा सूनवोऽसुरं स्वर्विदमास्थापयन्त तृतीयेन कर्मणा।
स्वां प्रजां पितरः पित्र्यं :सह आवरेष्वदधुस्तन्तुमाततम्॥
ऋ० १०।५६।६, द्र० १०।५३।६।

८. पुत्रीयन्तः सुदानवः। ऋ० ७।९६।४, द्र० २।११।१६।

९. त्वं पुत्रो भवासि......सखा सुशेवः। ऋ० २।१।९।

१०. द्र० ग्रिफिथभाष्यम्। ऋ० १०।३२।३।

११. पितेव पुत्रमबिभरुपस्थे। ऋ० १०।६९।१०, १।३८।१।

१२. पितुर्न पुत्रः सिचमारभे। ऋ० ३।५३।२।

१३. दधाति पुत्रः पितोरपीच्यं नाम तृतीयमधि रोचने दिवः।
ऋ० ९।७५।२, द्र० १।१५५।३।

१४. या वा अपुत्रा पत्नी सा निर्ऋतिग्रहीता। शत० ब्रा० ५।३।१।१३।

"पुरा प्रजापतिर्ह वा इदमग्र एक एवास । स ऐक्षत, स प्रजा असृजत"[१]। ताभ्यश्च कन्दमूलफलौषध्यादीनि भोजनायादात्[२] ।

स पुत्रः स्वकीयायां धर्मजायायां धर्मणोत्पादित एव पुत्रत्वं लभते तमेव च केचन सूत्रकारा एवं मन्यन्ते—'सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात्'[३] । स एवौरसपुत्रो गृहीतत्वेनाम्नातः । अन्योदर्यश्च परिहार्य एव[४] । अतः कन्यां जायारूपेण परिणेतुं कामयन्ते,[५] तस्याश्च शास्त्रोक्तविधिना वीरं सुतं जनयन्ति[६] ।

**(क) गर्भाधानम्—**

मनुष्येभ्यो गर्भाधानविद्याऽपि परमेश्वरेणोपदिष्टा[७] येन तां ज्ञात्वा प्रजावन्तो सुखिनश्च भवेयुः । याः स्त्रियः पुरुषं कामयेयुरभिवाञ्छेयुस्ताः शिवतमाः कल्याण्य एव दारकर्मण्यङ्गीकर्तव्याः[८] । यथा वातो भूमेरुपरि तृणमनवस्थितं कृत्वा भ्रामयति तथा कामी जनः स्त्रिया मनो मथ्नाति । तथा च कामिन्यपि कामयमानं पुरुषं हित्वाऽन्यत्र गन्त्री मा भूयात्तथा तस्य चेतः स्वायत्तं करणीयम्[९] । तादृशी च स्त्री

---

१. शत० ब्रा० २।५।१।१ ।

२. द्र० शत० ब्रा० २।५।१।६ ।

३. बौधायनधर्मसूत्रम् २।२।३।१४ ।

४. नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥
ऋ० ७।४।८ ।

५. उषस्तच्चित्रमाभरास्मभ्यं वाजिनीवती ।
येन तोकं च तनयञ्च धामहे ॥ ऋ० १।९२।१३ ।

६. सुवीरासो वयं धना जयेम । ऋ० ९।६१।२३ ।
अस्मे वीरो मरुतः शुष्म्यस्तु जनानां यो असुरो विधर्ता ।
ऋ० ७।५६।२४ ।
मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट् । ऋ० १०।१५९।३ ।

७. ऋ० १०।८५।२७ । यजु० १९।७६ । अथर्व० ६।१७।१–४, ६।११।२, ५।२५।१३, ३।२३।२–३, १४।१।२१ ।

८. ऋ० १०।८५।३७ ।

९. यथेदं भूम्या अधि तृणं वातो मथायति ।
एवा मथ्नामि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ।
अथर्व० २।३०।१, द्र० ३।२५।५ ।

पत्युरनुव्रता भवति[१] तस्मै स्वात्मानं विवृणोति[२]। यथा लता वृक्षं परिष्वजन्ते[३] तथा परिष्वज्यानन्दं प्रददाति[४]। सुरूपवती सुवासा प्रेमाढ्या च पतिहृदयमधिकरोति[५], तादृश्यां भार्यायामेव पुत्रो जायते। अङ्गैर्जायमानत्वाच्च स दम्पत्योः स्नेहभाजनं भवति[६]।

केषाश्चिदाचार्याणां मते वेदेषु वशीकरणभेषजमप्युपदिष्टमस्ति येन पतिमेव नारी कामयेत् तमेवासाधारण्येन वाञ्छेत् तर्पयेच्च। तत्र चेदं वशीकरणभेषजं सौर्वचलाख्यमुद्धरामि[७] वचनमुद्धरन्ति। यथा पतिः पत्नीं वशीकरोति तथा पत्न्यपि पतिं वशीकुर्याद्येन स तस्या एव केवलं भयात् नान्यासां नामान्यपि कीर्तयेत्[८]।

यथा वशीकरणाय भेषजान्युपदिष्टानि तथा वीरसुतजननायापि नष्टवीर्याय च बलप्रदा वाजीकरणा ओषधयोप्युपदिश्यन्ते[९]। तथैव चायुर्वेदशास्त्रेऽपि वाजीकरणस्य महत्त्वं प्रतिपाद्य तस्य भेषजेष्वष्टवर्गा मुख्यत्वेन समाम्नाताः[१०]।

अभीष्टापत्यकराणां भावानां विषये मनुना प्रोक्तम्—यः पुत्रकामः स्यात् स चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्यां वोपेयात्। दुहितृकामः

---

१. पत्युरनुव्रता भूत्वा संनह्यस्वामृतायकम्। अथर्व० १४।१।४२।
ऋ० १०।३४।२।

२. ऋ० १०।७१।४, ११२४।७, ४।३।२।

३. यथा वृक्षं लिबुजा समन्तं परिषस्वजे।
एवा परिष्वजस्व०। अथर्व० ६।८।१।

४. मयः पतिभ्यो जनयः परिष्वजे। ऋ० १०।४०।१०, १।७१।१।
जायेव पत्यावधि शेव मंहसे। ऋ० ६।८२।४। द्र० अथर्व० १४।१।४६।

५. भूया अन्तरा हृद्यस्य निस्पृशे जायेव पत्य उशती सुवासाः।
ऋ० १०।६१।१३।

६. अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे०। शत० ब्रा० १४।६।४।२६
नि० ३।४।

७. इदं खनामि भेषजं मां पश्यमभिरोरुदम्।
परायतो निवर्तनम्०। अथर्व० ७।३८।१।

८. अथर्व० ७।३८।४।

९. यां त्वा गन्धर्वो अखनद् वरुणाय मृतभ्रजे।
तां त्वा वयं खनाम्योषधिम्०। अथर्व० ४।४।१, द्र० ६।७२।१।

१०. चरके चिकित्सास्थाने २।२५–२६।

पञ्चम्यां सप्तम्यां नवम्यां वा। यतो युग्मासु पुत्रा जायन्तेऽयुग्मासु च स्त्रियः[१]। तथा चापि वेदाङ्गेषु पुत्रकामेभ्यः पुत्रेष्टिः प्रतिपादिता[२]। शतपथब्राह्मणे च मन्थयागः। तद्यथा—स यः कामयेत महत् प्राप्नुयामित्युदगयन आपूर्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कंसे चमसे वा सर्वौषधं फलानीति सम्भृत्य परिसमुह्य परिलिख्याग्निमुपसमाधायावृताऽऽज्यं संस्कृत्य पुंसा नक्षत्रेण मन्थं संनीय जुहोति[३]। एतेनानुमीयते यत् पुरा पुत्रार्थिनो मन्थेन यजन्ति स्म। आयुर्वेदशास्त्रे शतपथब्राह्मणे च पुत्रस्य गौरश्यामकपिलवर्णत्वे पण्डितमूर्खत्वे च गर्भिण्या आहारव्यवहार एव हेतुः प्रोक्तः। यादृग्वर्णमाहारमुपसेवते तादृग्वर्णप्रसवा भवति[४]। या इच्छेत् पुत्रो मे पण्डितः स्यात् सर्वान् वेदाननुब्रवीत सर्वमायुरियात्, स मांसौदनं[५] पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवाऽऔक्षणेन वाऽऽर्षभेण वा[६]। इति ब्राह्मणेषूपदिश्यते[७]।

तथैव चान्या अप्योषधयः पुत्रकरत्वेन प्रकीर्तिताः। तत्रोक्तं खदिरवृक्षादधिभूतोऽश्वत्थो मणिरूपेण धार्यमाणो भेषजरूपेण वा प्रयुक्तः पुमांसं पुत्रं जनयति[८]। उत्तरवर्तिषु भैषज्यग्रन्थेष्वप्यभीष्टसन्तति-

---

१. द्र० मनु० ३।४८।
चरके शारीरस्थाने ८।५।

२. इष्टिं तेऽहं करिष्यामि पुत्रीयां पुत्रकारणात्।
अथर्वशिरसि प्रोक्तैः मन्त्रैः सिद्धां विधानतः॥
वाल्मीकीयरामायणे बालकाण्डे १५।२।

३. शत० ब्रा० १४।६।३।१।

४. तु० शत० ब्रा० १४।६।४।१३–१७।
चरके शारीरस्थाने ८।७–११।
सुश्रुते शारीरस्थाने २।३५।

५. मांसमोषधीनां जीवकस्य ऋषभस्य वा। वीर्यवर्धकत्वात् ऋषभः जीवनीयत्वात् जीवकः। जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ।
वाचस्पत्यम्।

६. उक्षा ऋषभोषधेः पर्यायः। द्र० अमरकोशः।

७. शत० ब्रा० १४।६।४।१७।

८. द्र० सायणभाष्यम्।
पुमान् पुंसः परिजातोऽश्वत्थः खदिरादधि। ( अग्रिमे पृष्ठे )

करा योगाः प्रकल्पिताः[1]। तत्र चाश्वत्थपलाशयोः सदृशगुणत्वात् पलाशपत्रं दुग्धेन साकं पीतं वीर्यवन्तं पुत्रं प्रयच्छतीत्युक्तम्[2]।

यथैता ओषधयो मन्थयागाश्च पुत्रजननोपायरूपेण विधीयन्ते तथैव पुंसवनमपि। तस्य कालो गर्भस्य द्वितीये तृतीये वा मासे। यतः "पुंसवनं पुरा स्पन्दत इति मासे द्वितीये तृतीये वा" इति पारस्करोक्तत्वात्[3]। तथा—आपन्नगर्भां स्त्रियमभिलक्ष्य प्राग् व्यक्तीभावाद् गर्भस्य पुंसवनमोषधमस्यै दद्यादिति वचनाऽविरोधात्[4]। पुंसवने कामोषधिं दद्यात्? तत्रोक्तम्—'अथास्यै मण्डलागारच्छायायां दक्षिणस्यां नासिकायामजीतामोषधीं नस्तः करोति' इत्याश्वलायनगृह्यसूत्रवचनेन प्रोक्तत्वात्[5]। सैवोषधिर्महर्षिणाग्निवेशेनाप्यनुमिता स्वव्यक्तशब्देषु[6]। अथ चापि लब्धगर्भाया लक्ष्मणावटशुङ्गसहदेवाविश्वदेवानामन्यतमां क्षीरेणाभिषुत्य त्रींश्चतुरो वा बिन्दून् दद्याद्दक्षिणे नासापुटे पुत्रकामायै, न च तान् निष्ठीवेत्[7]।

एवमाचरमाणा स्त्री नवमे मासि सर्वसाधनोपेतं सूतिकागारं प्रविशेत्। अन्तिके प्रसवकाले तस्य सर्वाण्यङ्गानि शिथिलानि जायन्ते[8]। तदा च सोष्यन्तीमद्भिरभ्युक्षेदनुकूलमाचारैश्चोपचरेत[9]। कर्णे चास्या

---

स हन्तु शत्रून् मामकान् यानहं द्वेष्मि ये च माम्॥

द्र० अथर्व० ३।६।१।

१. पुत्रकमञ्जरिमूलं विष्णुक्रान्तेशलिङ्गिनीसहितम्।
एतद्गर्भेष्टदिनं पीतं कन्यां सर्वथा न सूते॥
याऽबला पिबति पार्श्वपिप्पलं जीरकेण सहितं हिताशना।
श्वेतया विशिखपुङ्खयायुतं सा सुतं जनयतीह नान्यथा॥
भारतभैषज्यरत्नाकरः ३८४२, ३९३५।

२. द्र० भारतभैषज्यरत्नाकरः ३७९९।

३. पारस्कर० १।१४।२।

४. चरके शारीरस्थाने ८।१६।

५. १।१३।५।६।

६. चरके शारीरस्थाने ८।१६।

७. सुश्रुते शारीरस्थाने २।३२।

८. सिसृतां नायृतप्रजाता वि पर्वाणि जिहतां सूतवा उ।
अथर्व० १।११।१।

९. द्र० शत० ब्रा० १४।९।४।२२।

मन्त्रमिमं जपेत्—

क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ।
सगर्भां त्वां सदा पान्तु वैशल्यञ्च दिशन्तु ते ।।
प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने ।
कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितम्[1] ।।

अयं मन्त्रः वेदसंहिताचतुष्टये नोपलभ्यते । कुतस्त्योऽयं मन्त्र इत्यनुसन्धानीयमेव ।

## ( ५ ) सन्ततिनियमनवृत्तम्

वेदेषु सुप्रजायाः कामना बहुशो दृश्यते । पुत्रवांश्च जनः सुतरां प्रशस्यते । परमस्य नायमभिप्रायो यत् तत्र संततेर्नियमो नास्ति । यतो हि तत्र बहुप्रजत्वस्य दोषा अपि कीर्त्यन्ते ।

### ( क ) बहुप्रजत्वमभिशापरूपम्—

बह्व्यः प्रजा बहवः पुत्राः पुत्र्यश्च यस्य विद्यन्ते स बहुप्रजः[2] । प्राचीनकालादेव बहुप्रजत्वस्य विरोधोऽपि तावद् दृश्यते । शास्त्रेषु हि गर्भप्रतिषेधसाधनानामुपलब्ध्यत्वाद् ध्वन्यते यदस्माकं बह्व्यः प्रजा मा भूयासुः । बहुप्रजो निर्ऋतिसदृशं दुःखं वहते[3] । बहुप्रजत्वात् कुटुम्बस्यार्थागमोऽपि बहुष्वपत्येषु विभज्यते येन दारिद्र्यमुपजायते न च पुत्राणां भरणपोषणमाच्छादनं वस्त्रगृहादिकमारोग्यं विद्याध्ययनञ्च सम्यक् विधातुं शक्यन्ते । प्रायशः पितरावेकस्य द्वयोर्वा पुत्रयोर्भरणपोषणे शिक्षणे यथा क्षमौ भवतो न तथा बह्वपत्यानां पोषणे । पोषणेन साकमेव शिक्षणमप्यावश्यकमेव[4] । यदि च गृहे बहून्यपत्यानि भवन्ति तदा पितरौ स्वप्राणयात्रामनपेक्ष्यमाणौ पुत्राणां भरणचिन्तास्वेव निमग्नौ दृश्येते । माता च पौनःपुन्येषु प्रसवकालेषु योग्योपचाराऽभावात् निर्बला चिररोगिणी च भवति । येन शिशवोऽपि दुर्बलाः सम्भवन्ति यतस्तेषां शरीरं मातुरधीनमेव । रोगिणः शिशवोऽल्पायुष्का हीनाश्च भवन्ति । अकाले कालकवलिताश्च जायन्ते ।

---

१. चरके शारीरस्थाने ८।४०–४१ ।

२. द्र० शब्दकल्पद्रुमः ।

३. बहुप्रजा निर्ऋतिराविवेश । अथर्व० ९।१०।१०, ऋ० १।१६४।३२ ।

४. ऋ० ६।१०७।१३ ।

जीवन्तोऽपि लोके ख्यातिं न लभन्ते यतः शरीरमाद्यं खलु धर्म-साधनम्। शरीरायत्तमेव सुखम्। मातापितरं रुग्णपुत्राणां दुःखमसहमानौ द्रवीभूतमनसौ करुणार्द्रचेतसौ चिन्तातुरौ व्यग्रौ च तैः सहैव सततं कष्टमयं जीवनं यापयन्ति।

सम्प्रति तु विशेषतो बहुप्रजत्वेन चिन्ताकुला जनसंख्याया वृद्धेर्नितरां भीता लोकनेतारो वदन्ति—यद्येवं दिनानुदिनं क्रमेण जनसंख्या वर्त्स्यति तदा कियत्कालानन्तरमस्मिन् धरातले मानवः स्थातुं पादमात्रमपि स्थानं न लप्स्यते कृषिगोरक्षावाणिज्यादिव्यवहाराणां तु का कथा। अपरञ्च जगतः कोटयो मनुष्या क्षुधया पीड्यमाना मरिष्यन्तीति[1]। तत एव दिने दिने जनसंख्यावृद्ध्यवरोधका उपाया विधीयन्ते। एतच्च न नितरां नूतनोपक्रमोऽपितु पुरातनेष्वायुर्वेद-शास्त्रेषु गर्भप्रतिषेधोपाया व्याख्याताः सन्ति।

पुरा सर्वे जानन्ति स्म यद् ऋतुकालादारभ्याषोडशनिशां यावद् गर्भधारणं भवति। अन्येषु दिवसेषु गर्भस्थितिर्नैव सम्भवति तस्मात् प्रजाकामास्तेष्वहःस्वेव संगच्छन्ते स्म नान्यथा। गर्भप्रतिषेधकरेषु केचित् स्थानीयप्रयोगाः केचिच्चान्तःप्रयोगा व्याख्यायन्ते। तेष्वन्तः-प्रयोगा एव नरैः शंस्यन्ते। शतपथब्राह्मणे चापि गर्भप्रतिषेधस्योपाया निर्दिश्यन्ते। अन्यानि चापि गर्भप्रतिषेधकराणि यत्र तत्र वर्ण्यन्ते न तेषां वर्णनमत्राभीष्टम्[2]।

एवं बहुप्रजत्वस्य दोषा वेदशास्त्रेषु दृश्यन्ते परं सुप्रजत्वस्य तत्र बहुशः प्रशस्तिरुपलभ्यते सन्ततिहीनता चाभिशापत्वेनोल्लिख्यते।

**( ख ) सुप्रजत्वं सौभाग्यरूपम्—**

सुप्रजत्वस्य लोके वेदे वा सर्वत्र प्रशंसा भवति[3]। अतो वेदमन्त्रेष्वायुः प्रजाः पशवश्च बहुत्र प्रार्थिताः[4]। विवाहस्य फलमेव पुत्रप्राप्तिरस्ति[5]। विवाहसंस्कारमनुतिष्ठन् वरः पुत्रानभिलषन् वधूमनेन

१. तु० 'पारिवारिक समस्याओं का वर्गीकरण'।

२. शत० ब्रा० १४।९।४।९।

३. सुप्रजा वीरवन्तो वयं स्याम। ऋ० ४।५०।६।
प्रजाभिरग्ने अमृतत्वमश्याम्। ऋ० ५।४।१०। ऋ० २।१।१६।

४. आयुः प्राणं प्रजां पशुं कीर्तिं द्रविणम्०। अथर्व० १९।७१।१।

५. राया मदेम तन्वा तना च। ऋ० ६।४९।१३। ( अग्रिमे पृष्ठे )

मन्त्रेणैकैकं पदं चालयति—'पुत्रान् विन्दावहै बहूँस्ते सन्तु जरदष्टयः' । संस्कारेषु च—'अस्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधयेति" प्रार्थ्यते[1] । आयुर्वेदेऽप्यपत्यविरहितस्य निन्दा विहिता । तद्यथा—

अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुमः ।
अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नरः ॥
चित्रदीपः सरः शुष्कमधातुर्धातुसन्निभः ।
निष्प्रजस्तृणपूलीति ज्ञातव्यः पुरुषाकृतिः ॥
अप्रतिष्ठश्च नग्नश्च शून्यश्चैकेन्द्रियश्च ना ।
मन्तव्यो निष्क्रियश्चैव यस्यापत्यं न विद्यते ॥
बहुमूर्तिर्बहुमुखो बहुव्यूहो बहुक्रियः ।
बहुचक्षुर्बहुज्ञानो बह्वात्मा च बहुप्रजः ॥
मङ्गल्योऽयं प्रशस्तोऽयं धन्योऽयं वीर्यवानयम् ।
बहुशाखोऽयमिति च स्तूयते ना बहुप्रजः ॥
प्रीतिर्बलं सुखं वृत्तिर्विस्तारो विपुलं कुलम् ।
यशो लोकाः सुखोदर्कास्तुष्टिश्चापत्यसंश्रिताः ॥[2]

वेदेषु च विशेषतः पुत्राणां कामना दृश्यते तद्यथा—पुमांसं पुत्रं जनय तं पुमाननुजायताम् । भवासि पुत्राणां माता जातानां जनयाश्च यान्[3] । सुवाना पुत्रान् महिषी भवाति[4] । इत्येतयोर्मन्त्रयोः प्रयुक्तेन बहुवचनेन बहुप्रजत्वमनुमीयते । परं पुत्राः सुप्रजाश्चैव स्युः । वयं सुवीरैः पुत्रैः सुप्रजावन्तः स्याम[5] । अस्मद्गृहं प्रजया समृध्यताम् । एतदपि श्रूयते—तदेष पुत्रेण जातेनानृणो भवति । कथम् ? जायमानो

---

एवा पुनानो अपः स्वर्गा अस्मभ्यं तोका तनयाय भूरि ।
ऋ० ९।९१।१ ।

प्र० प्रजाभिर्जायते धर्मणस्परि ।
ऋ० ६।७०।३, ८।२७।१६, १०।६३।१३ ।

१. आश्वलायनगृह्यसूत्रे १।१०।१२ ।

२. चरके चिकित्सास्थाने २।१७–२२ ।

३. अथर्व० ३।२३।३ ।

४. अथर्व० २।३६।३ ।

५. इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम ।
ऋ० १०।१८३।१–२ ।

प्रजायेमहि रुद्र प्रजाभिः । ऋ० २।३३।१ ।

वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी[1] ।

न चैतद् वक्तुं शक्यं बहुपुत्राणां भरणपोषणं कथं स्यादिति यतो हि सर्वेषां पालकः प्रजापतिरेवेति शास्त्रेषु स्वीक्रियते[2] । प्रजापतिरेव शिशुभ्यः जन्मनः पूर्वं मातृस्तनयोर्दुग्धं प्रयच्छति[3] ।

अप्रजत्वं तु पापरूपं भवति । सीमितप्रजत्वाय न केवलं कृत्रिमसाधनानामुपयोग एवापितु आत्मसंयमेन्द्रियनिग्रहेणैव वाञ्छनीया प्रजा उत्पादनीयाः । यदि गृहस्थाः पुत्रं नेच्छेयुस्तर्हि स्वात्मनिग्रहं ब्रह्मचर्यञ्चाचरेयुः । ऐन्द्रियिकविषयाणामनियोगात् शक्तिः क्षीयते बुद्धिश्चापकुण्ठति । न जातु कामः कामानामुपभोगेन शाम्यति, हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते[4] । तत इन्द्रियनिग्रहादेव सिद्धिः । श्रूयते चापि—यो गृहस्थ ऋतुकालाभिगामी भवति स्वदारनिरतश्च भवति स ब्रह्मचार्येवोच्यते[5] । अतो यः पुरुषो यावतः पुत्रान् सम्यक् पोषयितुं शिक्षयितुं च क्षमस्तावत एव जनयेत । प्रजयाऽन्नेन पशुभिश्चैव गृहं शोभते नहि नीरवं निर्जनं निबिडरूपं गृहम् ।

एवं बहुप्रजो भवेदल्पप्रजो वेत्येष प्रश्नो नैकान्ततो वचनीयः सम्भज्य वचनीयः । यः कश्चिदद्वितीयं सर्वगुणसमन्वितं द्युतिमन्तं वीर्यवत्तमं पुत्रमिच्छेत् स एकमेव पुत्रं जनयेत् यतः पुराकाले वागेकमेव गर्भं धारितवती[6] । द्युपृथिव्योरप्येक एव पुत्रश्चन्द्रः । स एवैकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च । चक्रवर्तीसम्राडेक एव त्रींल्लोका-

---

१. तै० सं० ६।३।१०।५ ।

२. अधारयद्धरितो भूरि भोजनं ययोरन्तर्हरिश्चरत् । ऋ० ३।८४।३ ।
यो भोजनं च दयसे च वर्धनम् । ऋ० २।१३।६ ।
मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥
ऋ० १०।१२५।४ ।

३. स आत्मन एवाग्रे स्तनयोः पय आप्यायाञ्चक्रे ।
शत० ब्रा० २।५।१।३ ।

४. महाभारते आदिपर्वणि ८५।१२ ।

५. मनु० ३।४५ ।

६. एकं गर्भं दधिरे सप्तवाणीः । ऋ० ३।१।६ ।

ननुशास्ति । अयमेव शुद्धधर्मत्वेन परिगण्यते । तथापि युद्धसमये नैकः सहस्रं योधयितुं प्रभवति, बहुभिश्च जायते रणमतः सैन्यबलं रचयितुं बहून् पुत्रानुत्पादयेत्[1] ।

## ( ६ ) कौटुम्बिकं वृत्तम्

### ( क ) कुटुम्बस्य स्वरूपम्—

सम्प्रति यस्मिन्नर्थे परिवारशब्दः प्रयुज्यते पुरा तत्र कुटुम्बशब्दस्य कुलशब्दस्य वा प्रयोग आसीत्[2] य इदानीन्तनेषु कोशेषु परिवार-शब्दस्य व्युत्पत्तिः प्रयोगश्च कुटुम्बस्यार्थेऽपि दृश्यते तत्तु तस्य शब्द-स्यार्थपरिवर्तनमेव वक्तुं शक्यते । तथा हि परिव्रियतेऽसावनेन वा स परिवारः[3] । एकस्मिन् परिवारे प्रायो गृहपतिः[4] गृहपत्नी[5] भ्रातरो भगिन्यो दुहितरः, पुत्राः, पुत्रवध्वश्चोपलभ्यन्ते । सर्वासु सामाजिक-संस्थासु कुटुम्बस्योपलब्धिः । कुटुम्बश्च द्विविधम् , संयुक्तविभक्त-भेदात् । प्रायशः परिवारस्य प्रारम्भः परिणयमनुजायते मृत्युं यावच्च तिष्ठति । विवाहो धार्मिकसंस्कारेषु निरूप्यते । वेदेषु स्वयंवरविवाहा-योपदेशो विहितस्तद्यथा "गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि"[6] । अत्र दयानन्दो व्याचष्टे—हे गृहाश्रमिणो मनुष्या ऊर्जं बिभ्रतो गृहा यूयं गृहाश्रमं प्राप्नुत । पूर्णब्रह्मचर्याश्रमं संसेव्य युवा-वस्थायां स्वयंवरविधानेन स्वतुल्यस्वभावविद्यारूपबलवतीं सुपरीक्षितां स्त्रियमुद्वाहयन्तु । संयुक्तपरिवारभवानां पुत्राणामुपयामेन तेषां पृथक् पृथगेव विभक्तपरिवारो जायते । तस्मिन् पुत्रः पुत्रवधूस्तयोरपत्यानि च भवन्ति । संयुक्तपरिवारेषु विभक्तपरिवाराः स्ववृद्धपित्रोश्छत्रच्छायायां सहैव वसन्ति । तस्मात् पूर्ववयसि पुत्राः पितरमुपजीवन्ति उत्तरवयसि पुत्रान् पितोपजीवति । एवं पारस्परिकस्नेहेनैव किञ्चित् कुटुम्बं सुखेनैधते ।

---

१. दशास्यान् पुत्रानाधेहि । ऋ० १०।८५।४५ ।

२. परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् । ऋ० १०।१७९।२ ।

३. वाचस्पत्यम् , शब्दकल्पद्रुमः ।

४. ऋ० ६।५३।२, अथर्व० १४।१।५१, १९।३१।१३ ।

५. ऋ० १०।८५।२६, अथर्व० ३।२४।६ ।

६. यजु० ३।४१ ।

गहेषु स्नेहाभावात् क्लेशा उत्पद्यन्ते । केषुचिद् गृहेषु दम्पतिकलहो दृश्यते । भर्ता भार्यया रुष्टो भार्या च भर्त्रा । कदाचित्तौ परस्परं तुष्यमाणावपि स्वापत्यैर्न तोषमनुभवतः । पुत्राश्च पित्रोर्व्यवहारं नाभिनन्दन्ति नहि च तयोरादेशमनुचरन्ति । श्वश्रूवध्वोश्चापि कलहो दृश्यते । एवमन्येषामपि कुटुम्बिनां पारस्परिककलहात् क्लेशोऽभिजायते । तदेतादृशानां क्लेशानां द्विविधं मूलं बाह्यमाभ्यन्तरञ्च । सामाजिकहेतुभिर्बाह्यं शास्त्रविहितनियमशैथिल्येन चाभ्यन्तरम् । कदाचिद्दम्पत्योः क्लेशोऽयुक्तपरिणयेन कदाचिच्चार्थाभावेनाऽपि भवति। नैत्यिकानामावश्यकतानामपूर्त्या क्रोध उत्पद्यते ।

एतेषां क्लेशानां परस्परं स्नेहेनैवोपशान्तिः । तत्र चैकस्मिन् गृहे गृहसदस्याः कथं व्यवहरेयुरिति वेदेषु बहुशः प्रतिपादितम् । तत्र चोक्तम्—दम्पती आजीवनं सहैवातिष्ठताम्[१] । तौ मोदमानौ सुपुत्रौ सुगृहौ पशुमन्तौ च भवताम्[२] । पुत्रैर्नप्तृभिश्च क्रीडमानौ जीवितं यापयताम्[३] । पतिपत्न्योर्मनसी वातधूमयोरिव भवताम्[४] । विद्यागुणेन युक्तौ विद्वांसौ देवा इव विचरन्ताम् । परस्परं सहयोगं कुर्वन्तौ राज्यं समृद्धिं यशश्चाश्नुताम् । सत्यं प्रियं वदन्तावन्योन्यमुपकुरुताम्[५] । यथा चक्रवाकौ परस्परं स्नेहभावेन वर्तेते तथा दम्पती अपि वर्तेताम्[६] । स्त्री स्वपुरुषमेव सदाऽभिलषेत् पुरुषश्च स्वपत्नीम्[७] ।

---

१. इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम् । ऋ० १०।८५।४२ ।

२. स्योनाद्योनेरधिबुध्यमानौ हसामुदौ महसा मोदमानौ ।
सुगू सुपुत्रौ सुगृहौ तराथो जीवावुषसो विभातीः ॥
अथर्व० १४।२।४३ ।

३. क्रीडन्तौ पुत्रैर्नप्तृभिमोदमानौ स्वे गृहे । ऋ० १०।८५।४२ ।
नित्यं न सूनुं मधु बिभ्रत उपक्रीडन्ति क्रीडा विदथेषु घृष्वयः ॥
ऋ० १।१६६।२ ।

४. वातं धूम इव सध्र्यङ् मामेवान्वेतु ते मनः । अथर्व० ६।८६।२ ।

५. ज्यायस्वन्तश्चित्तिनो मा वियौष्ट संराधयन्तः सधुराश्चरन्तः ।
अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान्वः संमनसस्कृणोमि ॥
अथर्व० ३।३०।५ ।

पत्युरनुव्रता भूत्वा संनह्यस्वामृतायकम् । अथर्व० १४।१।४२ ।

६. चक्रवाकेव दम्पती । अथर्व० १४।२।६४ ।

७. यथा मां कामिन्यसो यथा मन्नापगा असः । अथर्व० १।३४।५ ।

गृहसदस्या अन्योऽन्यस्यादेशं प्रियं वा समाचरन्तु[१]। मा पुत्रः पितुर्वचनमुल्लङ्घयेत्[२]। पुत्रो मात्रा पित्रा सह प्रीतमना भवतु, अनुव्रतो भवतु[३]। जाया पत्ये मधुमतीं वाचं वदतु भर्ता च पत्न्यै शान्तां वाचं ब्रवीतु[४]। यत्र गृहसदस्या मिथो न विद्विषन्ति तेषु गृहेष्वेव सुखं समृद्धिश्च जायते[५]। मा भ्राता भ्रातरं विद्वेष्टु, मा स्वसा स्वसारम्। सर्वे सुव्रता भूत्वा कल्याणकरीं वाचं वदन्तु[६]। गृह एवं प्रशंसितया मधुरवाचा एव सर्वाण्यभीष्टानि सिध्यन्ति[७]। सदस्यानां भोजनं स्नानं जलपानञ्च सदृशं सह च भवतु[८]।

गृहिणीकर्तव्यविषये वात्स्यायनमुनिना विस्तरेण प्रतिपादितम्[९]। तत्प्रतिपादितकर्तव्येषु बहूनि वेदेषूपलभ्यन्ते। तद्यथा—सा भार्या पतिप्रसादमिच्छन्ती गूढविश्रम्भा देववत् पतिमानुकूल्येन वर्तेत। कुटुम्बचिन्तामात्मनि सन्निवेशयेत्। वेश्म च शुचिसुसंमृष्टस्थानविरचितविविधकुसुमं संश्लक्ष्णभूमितलं हृद्यदर्शनं कुर्यात्। गुरुषु मन्त्रवश्येषु भृत्यवर्गेषु पतिभगिनीषु तत्पतिषु च यथार्हं प्रतिपत्तिः। श्वश्रूश्वशुरयो-

---

१. अन्यो अन्यमभिहर्यत वत्सं जातमिवाघ्न्या। अथर्व० ३।३०।१।
द्र० ऋ० १।६८।५।

२. मा नो वधीः पितर मोत मातरम्। ऋ० १।११४।७।

३. अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः। अथर्व० ३।३०।२।

४. मधुमन्मे निक्रमणं मधुमन्मे परायणम्।
वाचा वदामि मधुमद् भूयासं मधुसन्दृशः॥ अथर्व० १।३४।३।
मधोरस्मि मधुतरो मदुघान्मधुमत्तरः। अथर्व० १।३४।४।
जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम्। अथर्व० १।३४।२।

५. यस्मै धायुरदधा मर्त्यायाभक्तं चिद् भजते गेह्यं सः।
भद्रा त इन्द्र सुमतिर्घृताची सहस्रदाना पुरुहूत रातिः॥
ऋ० ३।३०।७।
यद्दम्पती समनसा कृणोषि। ऋ० ५।३।२।

६. मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥ अथर्व० ३।३०।३।

७. द्र० शत० ब्रा० २।३।४।६।

८. सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तै० आ० ब्रह्मानन्दवल्ल्याम् १०।१।
समानी प्रपा सह वोऽन्नभागः। अथर्व० ३।३०।६।

९. द्र० कामसूत्रे ४।१।

र्वापि परिचर्यां कुर्यात्। तथैव वेदेषु चापि समुपलभ्यते[1]। तत्र हि मृत्पात्राणां घृतादिकस्य च काले ग्रहणं विधीयते तस्य च बीजमथर्वणि समुपलभ्यते[2]। यथा च कामसूत्रे गृहिण्या गृहमेव स्थानं प्रतिपादितं तथैव श्रुतावपि[3]। एवं कर्तव्यपरिपालनेन गृहिणी धर्ममर्थं कामं निःसपत्नञ्च भर्तारं लभते[4] गृहे च साम्राज्ञीवत् प्रतिष्ठां प्राप्नोति[5]। दर्शपौर्णमास्यां व्रताचरणेन च सर्वे कामाः सत्या जायन्ते श्रीश्च वर्धते[6]।

**( ख ) दायविभागः—**

मातुः पितुश्चोर्ध्वलोकं गते पुत्राः पितृरिक्थं समं विभजन्ति स्वभगिन्यै च स्वेभ्योंशेभ्यश्चतुर्थमंशं प्रयच्छन्ति। यस्य च केवलं पुत्र्यैव स्यात्तस्य दौहित्र एवोत्तराधिकारी भवति[7]। अथवा केचिदाचार्याः पुत्रं दुहितरञ्च समरूपेणैव दायादौ मन्यन्ते[8]। ये चापुत्रा भवन्ति तेभ्यः पुत्रिकाकरणस्यैव विधानम्। यस्याः पुत्र्याः पुत्रः सन्तानकर्मणे पिण्डदानाय च गृह्यते सा पुत्रिकापदेनाम्नायते[9]। दत्तकपुत्रो दायभागे पिण्डकार्ये वा न प्रशस्यते। स पुत्रत्वेन परिकल्प्यमानोऽपि न पुत्र-

---

१. स्योना भव श्वशुरेभ्यः स्योना पत्ये गृहेभ्यः।
स्योनास्यै सर्वस्यै विशे स्योना पुष्टायैषां भव ॥ अथर्व० १४।२।२७।

२. पूर्णं नारि प्रभर कुम्भमेतं घृतस्य धारामृतेन संभृताम्।
अथर्व० ३।१२।८।

३. गृहान् गच्छ गृहपत्नी यथासो०। अथर्व० १४।१।२०।
अस्मिन् गृहे गार्हपत्याय जागृहि। अथर्व० १४।१।२१।
ऋ० १०।८५।२७।

४. सपत्नीं मे पराणुद पतिं मे केवलं कृधि। अथर्व० ३।१८।२,
द्र० अथर्व० ३।१८।१–५।

५. सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु ॥ ऋ० १०।८५।४६।

६. द्र० अथर्व० ७।८०।१–४।

७. तु० अभ्रातर इव योषास्तिष्ठन्ति हतवर्चसः। अथर्व० १।१७।१।
अभ्रातृका इव योषास्तिष्ठन्ति सन्तानकर्मणे पिण्डदानाय च।
नि० ३।४।

८. ऋ० ३।३१।१, द्र० नि० ३।४।

९. द्र० नि० ३।५।

कार्येष्ववतिष्ठते, परकीयत्वात् । एतद्विषये प्रार्थनाऽपि दृश्यते—हे अग्ने ! वयं नित्यस्य धनस्य स्वामिनो भवेम, यतो ह्यन्यजातमपत्यमचेतनस्य प्रमत्तस्याश्रुतवतो परितोषमात्रं भवति ममेदपत्यमिति[१] । स स्वं वंशमिति तद्वश्यं भवत्यतोऽपुत्र्येवासौ । एवं यदैवौरसमपत्यं भवति तदेव पुत्रो भवति । सैव पुत्रः परेभ्यो भयदाता सपत्नानभिभवन् नः प्राप्नोतु[२] ।

इत्थञ्च वेदेषु पुत्रपुत्र्योरुभयोरपि दायभागित्वं विधीयते । अपुत्रकस्य तु पुत्र्य एव दायभागमर्हन्ति । यदुत्तरवर्तिशास्त्रेषु दत्तकस्यापि दत्तभागित्वं दृश्यते तत्तु न वेदेषु प्रशस्यते[३] ।

**( ग ) वास्तुविद्या—**

गृहाश्रमाय सर्वर्तुसुखप्रदा गवाक्षादिभिर्युता पुष्कलावकाशा सर्वतो द्वारा शाला निर्मातव्या[४] । तत्र सर्वेषां मातृ-पितृ-ज्ञातीनां सर्वव्यवहारकरणाय पृथक् पृथक् शालागृहाणि भवेयुः[५] । बहिःस्था जना गृहस्थान् सहसा न पश्येयुर्न च गृहस्था बाह्यान् पश्येयुः[६] । यत्र सूर्यस्य रश्मीनां स्पर्शः सर्वतः स्यात्[७] । यच्च बलवर्धकं रोगनाशकरं शुद्धं गृहं भवेत् तत्र सर्वान् स्वापयेम वयं च शयीमहि । तस्यां शालायां स्त्रीभ्योऽन्तःपुरमपि रचयेत् । यत्र स्त्रीणां वासः स्यात्[८] । तत्रैकं गोभ्यो गोष्ठं

---

१. परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो विदुक्षः ॥
ऋ० ७।४।७ ।

नहि ग्रभायरणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥
ऋ० ७।४।८ ।

२. द्र० दयानन्दभाष्यम् ऋ० ७।४।८ ।

३. द्र० याज्ञवल्क्यस्मृतिः २।१३३–१३५ ।

४. द्र० ऋ० ७।५४।१–२ ।

५. सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः ।
ससन्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥ ऋ० ७।५५।५ ।

६. य आस्ते यश्च चरति यश्च पश्यति नो जनः ।
तेषां सं हन्मो अक्षाणि यथेदं हर्म्यं तथा ॥ ऋ० ७।५५।६ ।

७. सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् । ऋ० ७।५५।७ ।

८. प्रोष्ठेशया वह्येशया नारीर्यास्तल्पशीवरीः । ( अग्रिमे पृष्ठे )

रचनीयम्[1] येन घृतदुग्धैः सुपुष्टा मेधावत्यः प्रजा भवन्तु ।

सा शाला केन विधिना निर्मातव्या तत्रोच्यते—द्विपक्षा द्विप्रकोष्ठवती चतुःप्रकोष्ठा[2] त्रिवरूथा[3] वा शाला भवेत् । साऽनुपमा प्रतिमिता परिमिता च स्यात्[4] । अथ स्थूणाया उपरि वंशं निधायानेकभूमिमन्ति गृहाणि, कोष्ठे कोष्ठे प्रकोष्ठवन्ति कारयितव्यानि[5] । तस्य गृहस्य समीपे दूर्वावत्यः पुष्पवत्यो वाटिकाः, कूपाः, पुण्डरीकवन्तो जलाशयाः सन्तु येन परिजनाः शुद्धानिलेनाऽऽरोग्ययुक्ता भवन्तु[6] ।

एवं यमनियमाचरणेन तपसा गृहाश्रमः सम्यक् वर्तितव्यः ।

भवतश्चात्र—

सामाजिकेऽस्मिन्नधिकारदेशे या ब्राह्मणादिर्विविधा अभिख्याः ।
तासां समीक्षा गुणकर्मणा वा जात्याऽथवा किं प्रतिपादिता वै ॥१॥
ततो व्यवस्था चतुराश्रमाणां गृह्ये विवाहस्य पुनर्विचारः ।
पुत्रोपलब्धिः किल सन्नियामः कुटुम्बवृत्तं विधिवत्प्रदिष्टम् ॥२॥

---

स्त्रियो याः पुण्यगन्धास्ताः सर्वाः स्वापयामसि ॥ ऋ० ७।५५।८ ।
पत्नीनां सदनं सदः । अथर्व० ९।३।७ ।

१. व्रजं कृणुध्वं स हि वो नृपाणो० । अथर्व० १९।५८।४ ।
सं वो गोष्ठेन सुषदा संरय्या । अथर्व० ३।१४।१ ।
वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिः० ।
ऋ० ७।५४।२ ।

२. या द्विपक्षा चतुष्पक्षा षट्पक्षा या निमीयते ।
अष्टापक्षां दशपक्षां शालां मानस्य० । अथर्व० ९।३।२१ ॥

३. त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।
छर्दिर्यच्छ० । ऋ० ६।४६।९ ।

४. उपमितां प्रतिमितामथो परिमितामुत० । अथर्व० ९।३।१ ।

५. कुलायेऽधिकुलायं कोशे कोशः समुब्जितः । अथर्व० ९।३।२० ।

६. आयने ते परायणे दूर्वा रोहतु पुष्पिणीः ।
उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवान् ॥ अथर्व० ६।१०६।१ ।

# ७. राजनीतिकमधिकरणम्

## ( १ ) शासनवृत्तम्

**( क ) शासनप्रणाली—**

शासनं राज्यं प्रभुत्वमिति प्रायेण समानार्थकम् । ब्राह्मणक्षत्रियविट्शूद्रा राज्ञा दण्डेन पालिता एव स्वेषु वर्त्मसु स्वधर्मकर्माभिरता भवन्ति[१] । दण्डधारको राजा न भवेच्चेत् दुर्बलं बलवत्तरा जले मत्स्यानिवादन्तु[२] । ततो देवा अपि अराजकतानिवारणार्थं राजानं चक्रुः[३] । मात्स्यन्यायाभिभूताश्च प्रजा मनुं वैवस्वतं राजानं चक्रे[४] । राज्ञा एव राष्ट्रं धार्यते कलाकौशलविद्याभिश्च समृद्धं क्रियते । तस्य राज्यस्य स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि सप्ताङ्गानि भवन्ति[५] । एतैः प्रकृतिस्थैरङ्गैरेव राज्यं दृढं स्थाप्यते । शासनञ्च विविधाभिः प्रणालीभिर्विधीयते ।

देशकालभेदैः प्रणाल्योऽपि भिद्यन्ते । तद्यथा—

**राजतन्त्रम्**—पुरा प्रायेण बहुषु देशेषु राजतन्त्रमासीत् । तत्र क्षात्रकुलावतंसा अन्ये वा वंशानुक्रमेण राजानः संबभूवुः[६] । तदा प्रजा राजानं पूज्यभावेन जानन्ति स्म । राजा च प्रजां स्वपुत्र इव पोषयति स्म । राज्ञामुपर्येकश्चक्रवर्तिसम्राड् विरराज[७] । यस्यानु-

---

१. कौ० १।३ ।

२. दण्डाभावे परिध्वंसी मात्स्यो न्यायः प्रवर्तते । कामन्दक० २।४० ।

३. ते देवाऽब्रुवन्नराजतया वै नो जयन्ति राजानं करवामहा ।
ऐ० ब्रा० १।१४ ।

४. कौ० १।१२ ।

५. स्वाम्यमात्यो जनो दुर्गं कोशो दण्डस्तथैव च ।
मित्राण्येताः प्रकृतयो राज्यं सप्ताङ्गमुच्यते ॥
याज्ञवल्क्यस्मृतिः १।३५३ ।

६. कौरव्यो राजा यो ह वा अयं दुष्टरीतुः पौंसायनो ।
दशपुरुष ऌ राज्यात्० । शत० ब्रा० १२।९।३।३ ।

७. सम्राडेको विराजति । अथर्व० ६।३६।३ ।
विशां पतिरेकराट् त्वं विराज । अथर्व० ३।४।१ ।

शासने सर्वे राजानः स्वं स्वं राज्यं पालयन्ति स्म तस्मै शुल्कञ्च प्रयच्छन्ति स्म। यदि नृपोऽधर्मेण वर्तयति स्म तदा सम्राट् तमपसार्यान्यं सुयोग्यं जनं राजपदे नियोजयत्याभिषेचयति स्म।

**अधिनायकतन्त्रम्**—कालक्रमेण कस्मिंश्चिद्युगे केषुचिद्देशेषु केचिन्निरङ्कुशाः शासका अभवन्। तेऽधिनायका भूत्वा तन्त्रं कृतवन्तोऽतोऽधिनायकतन्त्रमिदमुच्यते। ते प्रायेण हिरण्यकश्यपुवत् प्रभूताऽन्यायकारिणोऽभूवन्।

सम्प्रति बहुषु देशेषु प्रजातन्त्रं दृश्यते। एषु नियतकालेषु लोकानां मतेन निर्वाचितानां पौराणां सभा शासनं सञ्चालयति। एवंविधाः कतिपयाः प्रदेशाः मिलित्वैकं गणतन्त्रं कुर्वन्ति। इदं संघीयशासनं गणतन्त्रं वोच्यते। प्रदेशानां पारस्परिकविवादानां न्यायार्थं बाह्यशत्रुभ्यो रक्षार्थञ्च तच्छासनमुत्तरदायी भवति।

अद्यत्वे राजतन्त्रं प्रायेण सर्वत्र लुप्तं यत्र कुत्रचिल्लभ्यते तदपि नामावशेषमात्रम् वस्तुतस्तु तत्रापि प्रजातन्त्रमेव। अधिनायकतन्त्रं तु स्वेच्छाचारित्वान्न धर्मण्यवतिष्ठते। प्रायेणाऽत्याचारिणोऽन्यायकारिणो वाऽधिनायका जायन्ते। अद्यतनीये प्रजातन्त्र लोकसभायाः सदस्यानां निर्वाचनं सर्वजनानां बहुमतेन सम्पाद्यते। न च प्रजायां बहुमतं बुद्धियुतं राष्ट्राय हितावहमेव वा सर्वदा भवत्यतो मन्वादिभिर्वैदिकसिद्धान्तप्रतिपादकैरेतदुक्तं यदेकस्यापि धर्मात्मनो विदुषश्च मतमनेकेषां मूर्खाणां वचनापेक्षया श्रेयस्करं मन्तव्यम्[1]।

**( ख ) वैदिकशासनप्रणाली**—

वेदेषूपदिश्यते यत् प्रजा स्वकीयाय राज्यायैव सर्वदा प्रयतेत[2]। तत्र च शासनपद्धतेर्विषये केचन सङ्केता उपलभ्यन्ते। मनीषिभिश्चैतन्निर्धारितं यत्तत्र राजतन्त्रस्य प्रजातन्त्रस्य च समन्वय इव दृश्यते। तथा हि तत्रोपदिश्यते हे मनुष्याः! यूयं राजप्रजासम्बन्धरूपव्यवहारे

---

१. एकोऽपि वेदविद्धर्मं यं व्यवस्येत् द्विजोत्तमः।
स विज्ञेयः परो धर्मो नाज्ञानमुदितोयुतैः॥
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।
सहस्रशः समेतानां परिषत्वं न विद्यते॥
यं वदन्ति तमोभूता मूर्खाः धर्ममतद्विदः।
तत्पापं शतधा भूत्वा तद्वक्तृननुगच्छति॥
मनु० १२।११३–११५।

२. यतेमहि स्वराज्ये। ऋ० ५।६६।६।

त्रीणि सदांसि राजसभां धर्मसभां विद्यासभाञ्च विधाय विविधप्रजाजनान् सर्वतो विद्यया स्वातन्त्र्येण धर्मेण सुशिक्षया धनादिना चालङ्कुरुथ। तं राजधर्मं तिस्रः सभाः, संग्रामादिव्यवस्थापिका समितिः सेना च मिलित्वा पान्तु[1]। राजा सभायाः, सभा राज्ञः, राजा सभ्याश्च मिलित्वा राज्यं पालयन्तु[2]।

यथा राजा प्रजा रक्ष्यात् तथा प्रजा राज्ञो गृहस्य शरीरस्य राज्यस्य सेनायाश्च रक्षिका भूयासुः[3]। कदाचिद् राजा स्वेच्छाचारी न स्यादतो दशसदस्यवती परिषत् राज्यकार्याणि सम्पादयेत्[4]। स्वच्छन्दः शासकः प्रजामत्ति[5]। राज्ञः प्रजायाश्च पारस्परिकः सम्बन्धो गुरुशिष्ययोः पितापुत्रयोरिव भूयात्[6]। प्रजाः स्वयमेव नृपगुणवन्तं राजानं वृण्वते। तादृशौ राजाप्रजा जनौ चाऽन्योन्यं कामयमानौ सख्यभावेन वर्तमानौ परस्परं नमस्येताम्[7]। एवंविधस्य प्रजातन्त्रस्योपदेश आम्नायेषु दृश्यते। एवंविधे प्रजातन्त्रे चक्रवर्तिराज्य एव सर्वे पुरुषार्थचतुष्टयमाप्नुवन्ति[8]। तत् प्रजातन्त्रञ्च सत्येन नियमपालनेन तेजसा क्षात्रेण व्रतग्रहणेन तपश्चरणेन च धार्यते[9]। प्रजातन्त्रमेव प्रजाया

---

१. द्र० दयानन्दभाष्यम्।
त्रीणि राजाना विदथे पुरूणि परिविश्वानि भूषथः सदांसि।
ऋ० ३।३८।६।

२. तं सभा समितिश्च सेना च०। अथर्व० १९।५।२।
सभ्य सभां मे पाहि ये च सभ्या सभासदः। अथर्व० १९।५५।६।

३. इन्द्र स्याम सुगोपाः शूर स्याम सुगोपाः। ऋ० ५।३८।५।

४. दशावरा वा परिषद्यं धर्मं परिकल्पयेत्। मनु० १२।११०।

५. राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशं घातुकः।
शत० ब्रा० १३।२।९।

६. उत त्यं पुत्रमग्रुवः परावृक्तं शतक्रतुः। ऋ० ४।३०।१६।

७. वयमिन्द्र त्वायवोऽभिप्रणोनुमो वृषन्।
विद्धि त्वस्य नो वसो॥ ऋ० ७।३१।४।
सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते।
त्वामभिप्रणोनुमो जेतारमपराजितम्॥ ऋ० १।११।२।

८. स नो रास्व राष्ट्रमिन्द्रजूतम्। अथर्व० ६।३९।२।

९. सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्मयज्ञः पृथिवीं धारयन्ति।
सा नो भूतस्य भव्यस्य पत्न्युरुलोकं पृथिवी नः कृणोतु॥
अथर्व० १२।१।१।

राज्यं भवति । प्रजा एव राज्याय राजकर्मणे च सर्वगुणवन्तं पराक्रमिणं नरं वृणोति[1] । तं साम्राज्यपदेऽन्यदेशाधिपा माण्डलिका राजानः सचिवाः सूता ग्रामण्यश्चाभिषिञ्चन्ति[2] । स राजा सदैव स्वात्मानं प्रजायाः प्रतिनिधीनां मतं ग्रहीतारं संसदि चैश्वर्यवन्तं विधातुं यतेत[3] ।

एतादृशं तन्त्रं लोकतन्त्रं प्रजातन्त्रं वा भवति[4] । इत्थं वेदेषु प्रजया निर्वाचितस्य राज्ञः साम्राज्यमेवेष्यते । एतद्विषये विशेषेण जनपदप्रसङ्गे निरूपयिष्यते । इतिहासाऽनुशीलनेनापि ज्ञायते यत् पुरा प्रजाजना नागरिका अमात्याश्च मतप्रदानेन राजानमभिषिञ्चन्ति स्म[5] । परवर्तिषु ग्रन्थेषु यानि राज्यस्य सप्ताङ्गानि निरूपितानि, यद्यपि तत्र प्रजा न निर्दिश्यते परन्तावत् प्रजा तु तेषामाधार एव । तानि चाङ्गानि स्वामी, अमात्यः, जनपदः, दुर्गम्, कोशः, बलं सुहृच्च[6] । तत्र च स्वामीत्यभिधो राजा प्रथममवसरप्राप्तः ।

**राजा—**

पुरा न राजासीन्न राज्यं न दण्डो न दाण्डिकश्चासीत् । प्रजा अन्योन्यं धर्मेणैव रक्षन्ति स्म । ताश्च कालक्रमेण खेदमुपाजग्मुस्तदा तासु मोह आविशत् । मोहवशमापन्ना मनुजा धर्मं नाशयामासुः ।

---

१. त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्च देवीः ।
अथर्व० ३।४।२ ।

२. ये राजानो राजकृतः सूता ग्रामण्यश्च ये ।
उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान् ॥ अथर्व० ३।५।७ ।

३. एषामहं समासीनानां वर्चो विज्ञानमाददे ।
अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥ अथर्व० ७।१२।३ ।

४. जानराज्याय । यजु० ९।४० ।

५. रत्निनामेतानि हवींषि भवन्ति । एते वै राष्ट्रस्य प्रदातारः ।
तै० ब्रा० १।७।३ ।

शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त । यजु० १०।४ ।
जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त ॥ यजु० १०।४ ।
द्र० कौ० १।१२ ।

६. द्र० कौ० ६।१, याज्ञवल्क्यस्मृतिः १।३५३, मनु० ९।२९४ ।

एवं विप्लुते नृलोके ब्रह्म वै ननाश। ब्रह्मनाशे धर्मनाशः[1]। तदा ते न्यायार्थं प्रजारक्षणार्थञ्च राज्ञ इच्छां चक्रुः[2]। पुनः कालक्रमेण विविधा नरपतयो बभूवुः। तेभ्यो नरपतिभ्यो देवा एवमुपदिदिशुः—

नियतो यत्र वै धर्मस्तमशङ्कः समाचर।
प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु॥
कामं क्रोधञ्च लोभञ्च मानञ्चोत्सृज्य दूरतः।
यश्च धर्मात् प्रविचलेल्लोके यः कश्चन मानवः॥
निग्राह्यास्ते स्वबाहुभ्यां शश्वद् धर्ममवेक्षता।
प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा[3]॥

तत एव श्रेष्ठा राजान इममुपदेशं नित्यमाचरन्ति।

तत्र च कीदृग्गुणवन्तं पुरुषं राज्यपदे प्रजा वृणुयुरित्यत्र वेददिशा निरूप्यते। यः परमैश्वर्यवान्, शत्रूणां जेताऽपराजितोऽधिराजो राजसु, प्रशंसनीयगुणकर्मस्वभावः, सत्करणीयः, शरण्यो माननीयः[4] स्वस्तिदा, अभयङ्करो,[5] ऽसपत्नः[6] स्यात्तमेव राजपदेऽभिषेचयेत्। स धनदाता[7] अस्तु, प्रजाभ्यो न्यायकारी[8] भवतु। चित्रसेनो[9] व्याघ्र इव सिंह इव पराक्रमी भूयात्[10]। धार्मिकः शूरवीरः शस्त्रास्त्रप्रयोगेषु कुशलो

---

१. महाभारते शान्तिपर्वणि ५९।१४–२१।

२. महाभारते शान्तिपर्वणि ५९।८७।

३. महाभारते शान्तिपर्वणि ५९।१०३–१०६।

४. इन्द्रो जयाति न पराजयाता अधिराजो राजसु राजयातै।
चर्कृत्य ईड्यो वन्द्यश्चोपसद्यो नमस्योऽभवेह॥
अथर्व० ६।९८।१।

५. स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी।
वृषेन्द्रः पुरः एतु नः सोमपा अभयङ्करः॥ अथर्व० १।२१।१।
इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयङ्करत्। ऋ० २।४१।१२।

६. इमं देवा असपत्न ँ सुवध्वम्। यजु० ९।४०।

७. त्वमग्ने द्रविणोदा अरंकृते। ऋ० २।१।७।

८. प्र यो मन्युं रिरिक्षतो मिनाति०। ऋ० ७।३६।४।

९. चित्रसेना इषुबला अमृध्राः सतो वीरा उरवो व्रातसाहाः।
ऋ० ६।७५।९।

१०. सिंहप्रतीको विशो अद्धि सर्वा व्याघ्रप्रतीकोऽवबाधस्व शत्रून्।
अथर्व० ४।२२।७। ( अग्रिमे पृष्ठे )

भूयात्[1]। एतादृशस्य नराधिपते राज्यं पर्वत इव ध्रुवं तिष्ठति[2]। यस्य राष्ट्रे ब्राह्मणाः पराभूयन्ते स सद्यो जीर्यति तस्मात् ब्राह्मणान् विशेषेण सत्कुर्यात्[3]। एवं यः क्षात्रकुलावतंसो बलवत्तमः परोपकर्ता प्रजापालयिता सत्यधर्मन्यायाचरणशीलो दुष्टानां दमनशीलः सज्जनानां पुरस्कर्ता दयालुः स्यात्तमेव राजानं मन्येयुः। स एव प्रभुर्भवति यस्मिन्नेकस्य वशे सर्वं राष्ट्रं भवति स साम्राज्यमाप्नोति।

**अभिषेकः—**

स य इच्छेदेवंवित् क्षत्रियः सर्वान् लोकान् विन्देतायं सर्वेषां राज्ञां श्रैष्ठ्यं परमतां गच्छेत् साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यं भजेत। सार्वभौम आयुर्यावत् समुद्रपर्यन्ताया एकराड् भूयात् तमेतेनेन्द्रेण महाभिषेकेणाभिषिञ्चेत्[4]। एवंगुणिनं नरं प्राञ्चं तिष्ठन्तं प्रजाजना अभिषिञ्चन्ति। पुरस्ताद् ब्राह्मणोऽभिषिञ्चत्यध्वर्युर्वा, यो वाऽस्य पुरोहितो भवति पश्चादितरे[5]। तमेनं महते क्षत्राय महते ज्यैष्ठाय महते जानराज्यायेन्द्रस्य धनवर्धनायाभिषिञ्चन्ति[6]। स पुरोहितो बिल्वप्रभृतीन् सम्भारान् संभृत्य, षोडश-

---

व्याघ्रो अधिवैयाघ्रे विक्रमस्व दिशो महीः। अथर्व० ४।८।४।
सिंहो न दमे अपांसि वस्तोः। ऋ० १।१७४।३।

१. धिष्व वज्रं गभस्त्यो रक्षोहत्याय वज्रिवः। ऋ० ६।४५।१८।

२. इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः।
इन्द्र इवेह ध्रुवस्तिष्ठे राष्ट्रमु धारय॥ ऋ० १०।१७३।२,
अथर्व० ६।८७।२।

आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत्॥ ऋ० १०।१७३।१।
उग्रो राजा मन्यमानो ब्राह्मणं यो जिघत्सति।
परा तत् सिच्यते राष्ट्रं ब्राह्मणो यत्र जीयते॥ अथर्व० ५।१९।६।

३. वृषा ह्यसि राधसे जज्ञिषे वृष्णि ते शवः।
स्वक्षत्रं ते धृषन्मनः सत्राहमिन्द्र पौंस्यम्॥ ऋ० ५।३५।४।

४. तद् यस्मा एवं विदुषेऽलाम्बुनाभिषिञ्चेत्०। अथर्व० ८।१०।(६)१।
द्र० ऐ० ब्रा० ८।१९।

५. ग्रामणीरसि ग्रामणीरुत्थायाभिषिक्तोऽभिमा सिञ्च वर्चसा॥
अथर्व० १९।३१।१२।

६. द्र० यजु० १०।१८, ९।४०।

कलशान्, षोडशबिल्वानि, वल्मीकस्य मृत्तिकां सर्वान्नं सर्वरसान् सर्वबीजान्याहरेत्। तत्र चत्वारः सौवर्णाश्चत्वारो राजताश्चत्वारस्ताम्राश्चत्वारो मृन्मयाः कुम्भा ह्रद ऊर्ध्वस्रुतोदकेन पूरयित्वा वेदिपृष्ठे स्थापयेत्। ततस्तान् कलशान् गृहीत्वा श्रोत्रियैः पवित्रतमै राजानमभिषिञ्चेत्। 'भूमिमिन्द्रं च वर्धयित्वा क्षत्रियं म इति' सिंहासनारूढमभिमन्त्रयेत्। एवमभिषिक्तस्तु रसान् प्राश्नीयात्, विप्रेभ्यश्च गोसहस्रं दद्यात्, सदस्येभ्यः पुरोहिताय च ग्रामवरम् प्रयच्छेत्। एवं विपुलं यशः प्राप्नोति धरां भुनक्ति जितशत्रुश्च जायते[1]।

तादृशस्याभिषिक्तस्य राज्ञः कीदृशी शिक्षा भवितव्या येन स सम्यक् राष्ट्रं दृढं स्थातुं प्रभवेदिति विचार्यते। उपनीय राजपुत्रमक्षरलिपयोऽङ्कगणितञ्च शिक्षयेत्[2]। पुनस्त्रैविद्येभ्यस्त्रयो वेदान्, नीतिविद्भ्यः शाश्वतीं दण्डनीतिं, नैयायिकेभ्य आन्वीक्षिकीं, योगिभ्य आत्मविद्यां, लोकतश्च वार्तारम्भान् शिक्षयेत्[3]। अथ च शिष्टजनानां मध्ये स्थित्वा पौनःपुन्येन ज्ञानं परिमार्जयेत्। दिवसस्य प्रथमे प्रहरे हस्त्यश्वरथारोहणमस्त्रशस्त्राभ्यासं चाभ्यसेत्। द्वितीये प्रहर इतिहासं गाथां नाराशंसी धर्मशास्त्रमर्थशास्त्रञ्चाभ्यसेत्[4]। एवंविधो नृप एव प्रजामनुशास्तुं प्रभवति। स विनयेन राष्ट्रं वर्धयति, यतो विनीतात्मा नृपतिर्न विनश्यति। बह्वोऽविनयात् सपरिच्छदा राजानो नष्टाः, वनस्थाश्च विनयाद् राज्यं प्रतिपेदिरे। यथा वेनो नहुषः पैजवनः सुमुखश्चाविनयादेव नष्टाः। पृथुर्मनुः कुबेरश्च विनयाद्राज्यं

---

१. यत्काम इदमभिषिञ्चामि वोऽहं तन्मे सर्वं सम्पद्यतां वयं स्याम पतयो रयीणाम्। अथर्व० १०।६।२७।
द्र० अथर्व० ११।१।२७, ६।१२२।५।
ऋतेन राजन्ननृतं विविञ्चन् मम राष्ट्रस्याधिपत्यमेहि।
ऋ० १०।१२४।५।
शत० ब्रा० ५।३।४।१-२८, ५।४।२।१-४। १२।८।३।२-६।
तु० धर्मशास्त्रम् पृ० ६०९।

२. वृत्तचौलकर्मा लिपिं संख्यानं चोपयुञ्जीत। कौ० १।४।

३. त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः॥ मनु० ७।४३।

४. द्र० कौ० १।४।

प्राप्तवन्तः[1]। तस्य च राज्ञो बहूनि कर्तव्याणि तद्यथा—

**प्रजारक्षणम्**—सर्वाणि राजनीतिशास्त्राणि प्रजारक्षणं जनाधिपतेर्मुख्यकर्तव्यत्वेन प्रतिपादयन्ति ।

तस्य धर्मः प्रजारक्षा वृद्धप्राज्ञोपसेवनम् ।
दर्शनं व्यवहाराणामुत्थानञ्च स्वधर्मसु ॥

तथा च—नृपस्य परमो धर्मः प्रजानां परिपालनम् ।
दुष्टनिग्रहणं नित्यं न नीत्या ते विना ह्युभे[2] ॥

चौरेभ्यो दुष्टेभ्यश्च सतां रक्षणमेव प्रजारक्षणम्। यो राजा चक्षुर्विज्ञानविकलानन्धान् खञ्जाननाथान् विधवाबालवृद्धानौषधावासाशनाच्छादनैर्बिभर्ति स सततं सुखेनैधते। यो राजा प्रजापालनेन विना करं गृह्णाति, यस्य प्रजाभ्यो दुष्टास्तस्करा दुःखं ददति, यः स्वयं नीचकर्मा श्येनवद्धिंस्रः पशुवन्मूर्खो वर्तते, यस्य च सेना चौरवद्वर्तते तस्य सद्यो विनाशो जायते[4]। तस्मात्—

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां तु हितप्रियम्[5] ॥
कृत्वा सर्वाणि कार्याणि सम्यक् संपाल्य मेदिनीम् ।
पालयित्वा तथा पौरान् परत्र सुखमेधते ॥
किं तस्य तपसा राज्ञः किञ्च तस्याध्वरैरपि ।
सुपालितप्रजो यः स्यात् सर्वधर्मविदेव सः[6] ॥

**धनदानम्**—सर्वे योद्धारो राज्ञः सकाशाद्धनादिकं प्राप्तुमिच्छन्ति

---

१. द्र० मनु० ७।३९–४२ ।

२. शुक्रनीतिः १।१४ ।

३. द्र० दयानन्दभाष्यम् ।
अनुद्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् ।
न तत्ते सुम्नमष्टवे ॥ ऋ० ४।३०।१९ ॥

४. उत स्मैनं वस्त्रमथिं न तायुमनुक्रोशन्ति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥
ऋ० ४।३८।५ ।

५. कौ० १।१८ ।

६. महाभारते शान्तिपर्वणि ६९।७२–७३ ।

तस्माद्राज्ञा तेभ्यो यथायोग्यं गोरथादिकं धनं देयमुत्साहवर्धनार्थम्[1]। पुरुषार्थिने चाह्लादकरं सुवर्णमैश्वर्यञ्च देयम्[2] ॥

**दण्डः**—राजा दण्डधर उच्यते। स एव राजा वीरः यो धार्मिकानदण्ड्यान् कृत्वा दुष्टान् दण्डयति। दण्ड्यानां दण्डनमृते दस्यवो लुण्ठकास्तस्कराः सज्जनान् ब्राह्मणान् विदुषः स्त्रीश्च लुण्ठन्ति पीडयन्ति घ्नन्ति च। अतो दण्ड्यं न मुञ्चेत्[3]। दुष्टान् प्रतापयेत् मायिनां मायां कुत्सितां छलयुक्तां प्रज्ञाञ्च विनाशयेत्[4]।

**न्याय्य.**—स सर्वप्रजासु समदृष्टिवान् स्यात्। न्यायं कुर्वन् कमपि पक्षान्तरं नावगच्छेत्[5]। ये दुष्टान् प्रति मन्युं कुर्वन्ति त एव राज्ञा न्यायाधीशा नियोक्तव्याः[6]। सूर्यवदन्यायं निवर्त्य सततं बलं वर्धयितव्यम्[7]। यावन्मनोऽन्यायेन प्रवर्तते तावदेवोन्नतिर्जायते[8]।

**राजमार्गाः**—स राजा राजमार्गान् प्रकुर्यात्[9]। तेषु मार्गेष्वनेकघटवारिभिः सेचनं प्रत्यहं कारयेद्येन तुरगानां पादापस्करणाद्धूलिर्नोत्तिष्ठेत्। प्रजाजनाश्च सुखेन गमनागमनं कुर्युः[10]। प्रजाहितार्थं पान्थ-

---

१. षष्टिः सहस्रमनुगव्यमागात् सनत् कक्षीवाँ अभिपित्वे अह्नाम्।
ऋ० १।१२६।३।

२. रत्नं भर शशमानाय घृष्वे पृथुश्चन्द्रमवसे चर्षणिप्राः।
ऋ० ४।२।१३।

३. मा नो वधी रुद्र परा दा मा ते भूम प्रसितौ हीळितस्य।
ऋ० ७।४६।४।

४. नि मायिनो दानवस्य माया अपादयत् पपिवान्त्सुतस्य।
ऋ० २।११।१०।

५. समः प्रजासु स्यात्। गोतमधर्मसूत्रम् ११।५।
द्वयोर्विवदमानयोः पक्षान्तरं नावगच्छेत। वसिष्ठधर्मसूत्रम् १६।३।

६. प्र यो मन्युं रिरिक्षतो मिनात्या सुक्रतुमर्यमणं ववृत्याम्।
ऋ० ७।३६।४।

७. अपा वृणोर्ज्योतिरार्याय नि सव्यतः सादिदस्युरिन्द्र। ऋ० २।११।१८।

८. मा ते मनो विष्वद्र्यग् विचारीत्। ऋ० ७।२५।१।

९. इन्द्रो रथाय प्रवतं कृणोति। ऋ० ५।३१।१।

१०. शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम्।
ऋ० १।११७।६।

शाला: कारयेत् । एवं राजा विदुषां ब्राह्मणानां साहाय्यं कुर्वन् कवीनां गोष्ठीरायोजयन् विद्यालयेभ्यो धनमाजीविकाहीनेभ्यो वृत्युपकरणानि च प्रयच्छन् विद्यासमुन्नतिं सम्पादयेत्[१] । स्वराष्ट्रे च सर्वभूतहिताय राजनियमान् प्रकल्प्य तान् सर्वजनज्ञापनार्थं चतुष्पथे लेखयेत्[२] । ते च राजनियमा नीतिग्रन्थेषु बहुधाऽम्नाताः[३] ।

एवं राजा राष्ट्रं सर्वात्मना रक्षेत् । प्रजा च सावधानं नरपतिं निपुणं गोपायेत, यतो विक्रमाक्रान्ताः क्रोधं सिसृक्षवो रिपवो विवरं प्राप्य नृपतिं निहन्ति[४] ।

एतादृशस्य नरपतेरेव चक्रवर्तिराज्यं भवितुमर्हति । यावतीऽयं भूमिरासमुद्रं यावच्चान्तरिक्षं वर्तते तावत् सर्वं तस्यादेशमनुचरति[५] ।

**अमात्यः—**

अमात्यपदस्यार्थे क्वचित् सचिवमन्त्रीप्रभृतयः शब्दा अपि प्रयुज्यन्ते । यथा रथस्य चक्रमेकाकी न प्रवर्तते तथा राजकार्यमप्येकाकिना राज्ञा न प्रभवति ततो विविधान् सचिवान् कुर्यात् तेषाञ्च मतं शृणुयात् । तद्यथा—

> यद्यप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
> पुरुषेणासहायेन किमु राज्यं महोदयम्[७] ॥

युगपदेव कर्मणामनेकत्वादनेकस्थत्वाच्च कर्मकरणे देशकालात्ययो मा भूदित्यमात्यैः कर्माणि कारयेत्[८] ।

सोऽयममात्यो जानपदेऽभिजातः कृतशिल्पश्चक्षुष्मान् प्राज्ञो धारयिष्णुर्दक्षो वाग्मी प्रगल्भः प्रतिपत्तिमानुत्साहप्रभाववान् क्लेशसहः

---

१. द्र० शुक्रनीतिः १।३६८ ।

२. द्र० शुक्रनीतिः १।३१३ ।

३. द्र० शुक्रनीतिः १।२९३–३१२ ।

४. सुश्रुते कल्पस्थाने १।४, ६ ।
तु० कामसूत्रे ५।५।२६ ।

५. उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरे अन्ता ।
उतो समुद्रौ वरुणस्य कुक्षी० । अथर्व० ४।१६।३ ।

६. कौ० १।६ ।

७ शुक्रनीतिः २।१ ।

८. कौ० १।८ ।

शुचिर्मैत्रो दृढभक्तिः शीलबलारोग्यसत्त्वसंयुक्तः स्तम्भचापल्यवर्जितः संप्रियो वैराग्याणामकर्ताऽऽत्मसंपत्तिवाञ्च स्यात्[९]।

एतादृशानाममात्यानामपि कर्मारम्भेषु प्रज्ञां धारयिष्णुतां दाक्ष्यञ्च, कथायोगेषु वाग्मित्वं प्रागल्भ्यं प्रतिभानवत्वञ्च, आपद्युत्साहप्रभावौ क्लेशसहत्वञ्च, संव्यवहाराच्छौचं मैत्रीं दृढभक्तिञ्च, एवं शीलबलारोग्यसत्त्वयोगस्तम्भमचापल्यञ्च, प्रत्यक्षत संप्रियत्वमवैरित्वञ्च राजा परीक्षेत। ऋग्वेदेऽमात्यपदस्य प्रयोगाद्[१०] ध्वन्यते यद्राज्ञा अमात्यः सहैव राजकार्यं कर्तव्यम्[११]। ये राज्ञो गूढपुरुषाः पुरोहिता वा भवन्ति तेऽप्यर्थशास्त्रमतेऽमात्या एव[१२]। तेषु च चराः प्रमुखा यतो नीतावुक्तम्—

गावो गन्धेन पश्यन्ति वेदैः पश्यन्ति वै द्विजाः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥

तस्माद्ये पूर्णविद्याः प्रगल्भा अनुरक्ता धार्मिका जनास्स्युर्ये राज्यस्य व्यवहारं वोढुं शक्नुवन्ति ताञ्छूरवीरानिङ्गिताकारचेष्टज्ञान् दक्षान् देशकालविदः सुहृदो दूतान् सम्पाद्य तेभ्यो राज्यवृत्तान् विज्ञाय राज्ञा व्यवस्था कारणीया[५]। स एव राजा श्रेयान् भवति यो दूताचारैः सर्वस्य राज्यस्य सर्वा वार्ता विदित्वा यथायोग्यं प्रबन्धं करोति[६]।

---

१. कौ० १।८।

२. कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजवामवाँ इभेन।
ऋ० ४।४।१।

अस्य मन्त्रस्य सन्दर्भे—याहि राजेवामात्यवान्। अभ्यमनवान्।
नि० ६।१२।

द्र० ऋ० ७।१५।३।

३. सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता।
मन्त्रयेत् परमं राजा षाड्गुण्यमसंयुतम्॥
नित्यं तस्मिन् समाश्वस्तः सर्वकार्याणि निक्षिपेत्।
तेन सार्धं विनिश्चित्य ततः कर्म समारभेत्॥ मनु० ७।५८–५९।

४. द्र० कौ० १।१०।

५. द्र० दयानन्दभाष्यम्।
वेषीद्वस्य दूत्यं यस्य जुजोषो अध्वरम्।
हव्यं मर्तस्य वीळहवे॥ ऋ० ४।९।६।

६. ते स्याम य आनृचुस्त्वा दूतासो दमे दम इषं स्तोतृभ्य आ भर।
ऋ० ५।६।८।

गूढपुरुषमाध्यमेन भूपतिस्तिष्ठन्तं चरन्तं प्रवञ्चयन्तं निगूढं पुरुषं सर्वज्ञतया वेत्ति द्वौ क्वापि स्थितौ मन्त्रयेते तावपि सूक्ष्मं निरीक्षयति[1]।

निखिलेष्वमात्येष्वेको ब्राह्मणः प्रधानसचिवो नियोजनीयः। यतो यस्मिन् राज्ये विद्वान् ब्राह्मणो राज्ञा गुरुरिव पूजितः प्रधानमन्त्री भवति तद्राज्यं पुण्यं लोकमिव संजायते यथा यत्र देवा अग्निना सह वर्तन्ते तल्लोकं पुण्यं भवति[2]। एवं ये स्वकीयानिवान्येषां पदार्थान् जानन्ति आत्मानमिवान्यान् रक्षन्ति त एवामात्याः करणीया येन शत्रूणां बलं विनश्येत्[3]।

**जनपदः—**

राज्यस्य सप्ताङ्गानामुद्भवो जनपदेन भवति[4]। 'जनपदः' इति शब्दो राष्ट्रस्यार्थे प्रयुज्यते[5]। तस्माद्राज्ञा नित्यं राष्ट्रवृद्धिः करणीया। वेदेषु राष्ट्रपदेन न कश्चिद्भौगौलिकसीमायुतो देशो गृह्यते प्रत्युत सर्वं भूलोकमेव चक्रवर्तिराज्ञो राष्ट्रं भवति[6]। राज्ञो राष्ट्रसमृद्धिस्तस्य देशस्य जलवाय्वोरधीना। राष्ट्रसमृद्ध्या राजसमृद्धिस्ततो राद्धिकामः शुभगुणवत्यां भूमौ वसेत्। यत्र प्रचुरान्नानि, प्रभूतखनयः, अपरे च प्राकृतिकपदार्थाः स्युः कृषेः पाशुपाल्यस्य च सुविधा स्यात्, सुरम्याणि कमनीयानि दृश्याणि विपिनानि दन्तिनः सरितश्च [7]स्युस्तादृशि

---

१. यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम्।
द्वौ संनिषद्य यन्मन्त्रयेते राजा तद् वेद वरुणस्तृतीयः॥
अथर्व० ४।१६।२।

२. यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह।
तँल्लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना॥ यजु० २०।२५।

३. ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन्।
ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाहदेभुः॥
ऋ० ४।४।१३।

४. कामन्दक० ६।३।

५. द्र० अमरकोशः।

६. मम द्विता राष्ट्रं क्षत्रियस्य। ऋ० ४।४२।१।

७. यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः संबभूवुः।
यस्यामिदं जिन्वति प्राणदेजत् सा नो भूमि पूर्वपेये दधातु॥
अथर्व० १२।१।३।

सा नो भूमिस्त्विषं बलं राष्ट्रे दधातूत्तमे। अथर्व० १२।१।८।

( अग्रिमे पृष्ठे )

बहुधान्यवति देशे भूतपूर्वेऽभूतपूर्वे वा जनपदे स्वदेशाभिष्यन्दवमनेन परदेशापवाहनेन वा मनुष्यान् वासयेत्[1]।

अस्मिन् राष्ट्रे ब्रह्मवर्चस्विनो ब्राह्मणा महारथिनो राजन्या दोग्ध्र्यो धेनवो वोढारोऽनड्वांसः, आशुगामिनोऽश्वाः, सद्गृहिण्यो युवतयः, जयशीला रथारोहिणः सभ्या युवानश्च जायेरन्। यथेष्टं पर्जन्यो वर्षतु सुपक्वानि सुसमृद्धानि च धान्यानि भवेयुः, एवं सर्वतो नराणां योगक्षेमो कल्पेत[2]। तत्र राष्ट्रे राजधर्मज्ञातारो याननिर्मातारः शिल्पिनो योगिनश्च स्युः[3]। एवं परराष्ट्रविमर्दनं विहाय स्वराष्ट्र-परिपालने सकलो यत्नो विधेयः[4]। स्वराष्ट्रे चापि ये रक्षाकार्येषु नियोजिताः परस्वादायिनः शठा वैतनिकाः सन्ति तेभ्य इमा प्रजा निपुणं रक्षेत्। ये च भृतिभुज उत्कोचग्रहीतारः सन्ति तेषां सर्वस्व-माहृत्य तान् प्रवासयेत्[5]।

**दुर्गम्—**

एकः शतं योधयति प्राकारस्थो धनुर्धरः।
शतं दशसहस्राणि तस्माद् दुर्गं विधीयते॥

दुर्गाश्रितान् पौरानरयो हिंसितुं न प्रभवन्ति। तानि दुर्गाण्यायुध-सम्पन्नानि धनधान्यवाहनयुक्तानि ब्राह्मणैः शिल्पिभिश्चाधिष्ठितानि

---

द्र० विष्णुधर्मसूत्रम् ३।४-५, कामन्दक० ४।५०-५६।
याज्ञवल्क्यस्मृतिः १।३२१, मनु० ७।६९।

१. कौ० २।१।

२. आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्यो-ऽतिव्याधी महारथो जायताम्। दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्॥
यजु० २२।२२, द्र० तै० सं० ७।५।१८।१।
शत० ब्रा० १३।१।९।१-१०।

३. ये धीवानो रथकाराः कर्मारा ये मनीषिणः।
उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान्॥ अथर्व० ३।५।६।

४. सुसंगृहीतराष्ट्रो हि पार्थिवः सुखमेधते। मनु० ७।११३।
विदुरनीतिः १।२।३०।

५. कौ० २।१, मनु० ७।११४-१२८।

यन्त्रयवसेनोदकेन च पूर्णानि कर्तव्यानि[1]। दुर्गैरेव भूपतिरक्षा प्रजारक्षा कोशरक्षा च विधीयते। सुवर्णायस्कान्तनिर्मितानि पुराणि, पुराणां परितः प्राचीरपरिखादयश्च दस्युनिवारणार्थं कल्पनीयाः। तानि दुर्गाणि नैकविधान्यर्थविविधत्वात्। जनपदान्ते चतुर्दिशं संगरोचितं दुर्गं कारयेत्। तद्दुर्गनिर्माणविधिर्व्यासेन कौटिल्यविरचितेऽर्थशास्त्रे दृश्यते[2]। नाम्नायेष्वेतद्विषयेऽधिकमुपलभ्यते[3]।

प्रासादोऽपि दुर्गसदृशो भवति। तं प्रासादं नानावृक्षलताकीर्णे पशुपक्षिगणावृते सुबहूदकधान्ये तृणकाष्ठयुते आसिन्धुनौगमाकूले नातिदूरमहीधरे सुरम्यसमभूदेशे प्रकल्पयेत्। तत्र च पृथक्-पृथक् सभाभ्यः प्रकोष्ठाः सुशोभिताः स्युः[4]।

**कोशः—**

कोशमूलाः कोशपूर्वाः सर्वारम्भाः। तस्मात् पूर्वं कोशमवेक्षेत[5]। अल्पकोशो हि राजा पौरजनपदानेव ग्रसते[6]। अमात्यसचिवदूतसैन्यादीनां भरणाय प्रजापालनाय च कोशः संग्रहणीयः। स कोशो राजभिर्यत्नमास्थाय सततं रक्षणीयः, यतः कोशमूला हि राजानः, कोशो वृद्धिकरो भवति[7]। यथा धीमान् वैश्यः प्रीत्या धनं रक्षति तथा राजा कोशेन प्रजाः सततं रक्षतु। प्रजा एव तस्य धनम्[8]। यदि स प्रजाजनस्य सन्तोषं जनयति तदा यशसा नृलोकमापूरयत्याऽऽदित्य इव

---

१. कौ० २।१९, मनु० ७।७३-७५।

२. प्रति यदस्य वज्रं बाह्वोर्धुर्हत्वी दस्यून् पुर आयसीर्नितारीत्।
ऋ० २।२०।८, ५।३४।७, द्र० शत० ब्रा० ३।४।४।३।
पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम्।
ऋ० १०।१०१।८। पूर्भिरायसीभिः। ऋ० १।५८।८, ७।३।७।
शतं मा पुर आयसीररक्षन्नध०। ऋ० ४।२७।१।

३. द्र० कौ० २।३, २।४।

४. शुक्रनीतिः १।२१२-२१४।

५. कौ० २।८।

६. कौ० २।१।

७. महाभारते शान्तिपर्वणि ११९।१६।

८. द्र० दयानन्दभाष्यम्।
वि हि होत्रा अवीताविपो न रायो अर्य्यः। ऋ० ४।४८।१।

विद्योतते[1]। ततः प्रजां संपोष्य बलिं हृत्वा धनधान्यरत्नानि सञ्चेयानि।

प्रजाभ्यः करग्रहणेन, खनिभ्यः सुवर्णरत्नानामुद्धरणेन राज्ञा कोशः पूरणीयः। वेदेषु करशब्दस्यार्थो बलिपदेन गृह्यते। प्रजाभ्यो गृह्यमाणा मिता मात्रा बलिरुच्यते[2]। राजा प्रजापोषणाय प्रजाभ्यो बलिहृत् स्यात्[3]। इयं बलो राज्ञो भृतिरिव भवति[4]।

सा बलिः प्रजामपीडयता ग्राह्या। उक्तञ्च नीतिविद्भिः—

यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत्।
मालाकार इवारामे न यथाऽङ्गारकारकः ॥[5]

द्रव्याणां मूल्यभेदेन करमात्रायामपि भेदो भवति। एतच्चार्थशास्त्रे स्मृतिषु च व्याख्यातम्[6]। कोशपरिपूरणार्थमाचार्यैरष्टोपाया वर्णिताः[7]। एवं कोशं विविधोपायैः संगृह्य नरपतिर्विविधेषु समुचितकार्येषु नियोजयेत्।

---

१. यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः।
ऋ० ५।१।३।

२. इयं मात्रा मीयमिना मिता च सजातांस्ते बलिहृतः कृणोतु।
अथर्व० ११।१।६।

३. वयं तुभ्यं बलिहृतः स्याम। अथर्व० १२।१।६२।
विशश्चक्रे बलिहृतः सहोभिः। ऋ० ७।६।५।
अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत्। ऋ० १०।१७३।६।
हरन्त्यस्मै विशो बलिम्। तै० ब्रा० २।७।१८।३।

४. तवायं भाग ऋत्वियः। ऋ० १।१३५।३।

५. महाभारते उद्योगपर्वे ३४।१७-१८।
आददीत धनं काले त्रिवर्गपरिवृद्धये।
यथाः गौः पाल्यते काले बुध्यते च तथा प्रजा ॥
कामन्दक० ५।८३–८४।

६. कौ० २।६।

७. धातुवादप्रयोगैश्च विविधैर्वर्धयेद्धनम्।
ताम्रेण साधयेत् स्वर्णं रौप्यं बंगेन साधयेत्॥
मानसोल्लास० २।४।३२७।

**बलम्—**

अत्र बलशब्देन सैन्यमभिप्रेतम् । वेदेषु सेनाया अस्त्रशस्त्राणां संगरस्य च वर्णनं समुपलभ्यते । बलं हि राज्यस्य प्रधानमङ्गम् । भीरुं नरपतिं सर्वे पराभवन्ति । ततः शत्रुजयायास्त्रशस्त्रपरिपूर्णा सेना स्वाधीना विधेया । तत्र चैकः सेनानी नियोक्तव्यः[1] । तत्सैन्यं षड्विधं भवति गुणभेदात् । या वंशपरम्परानुगतानां पुरुषाणां सेना सा मौल-पदेनाख्यायते । भृतिभुजां भृत-भृतक-भृत्यादिपदैः, वणिजां श्रेणीपदेन मित्राणां मित्राख्यया रिपुपक्षाद्विद्रुता नाम 'अमित्राख्या' वा, वन्य-पुरुषाणाम् 'आटविक' पदेनोच्यते[2] । तासु सेनासु मौलसेना श्रेष्ठतमा । ताः सर्वा अपि सेना हस्त्यश्वरथपदातिभेदाच्चतुर्विधा भवन्ति[3] । तादृशीषु हस्तिप्रधानो विजयो राज्ञाम्[4] । यथा चोक्तम्—

मुख्यं दन्तिबलं राज्ञां समरे विजयैषिणाम् ।
तस्मान्निजबले कार्या बहवो द्विरदा नृपैः ॥[5]

ये योग्यतां प्राप्यायुधान् सेनां राज्यं धनञ्च संरक्षन्ति सर्वेषां धर्मात्मनामुपरि करुणां कुर्वन्ति त एव बलिष्ठा जायन्ते[6] । यत्र राजानो विद्युदिव स्तनयित्नुरिव पूर्णबलां पराक्रमयुक्तां सेनां वर्द्धयन्ति तत्र षष्टिरपि योद्धारो षट्सहस्राण्यपि शत्रून् विजेतुं शक्नुवन्ति[7] । राज्ञा

---

१. अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व ॥
ऋ० १०।८४।२, अथर्व० ४।३१।२ ।

२. मौलभृतकश्रेणीमित्रामित्राटवीबलानां समुद्दानकालाः । कौ० ६।२ ।

३. चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्ने श्रेणिं नयन्ति ।
मदच्युतः कृशनावतो अत्यान् कक्षीवन्त उदमृक्षन्त वज्राः ॥
ऋ० १।१२६।४ ।

४. कौ० २।२ ।

५. मानसोल्लासः २।८।६७८ ।
बलेषु हस्तिबलादीनि । योगसूत्रम् ३।२४ ।

६. द्र० दयानन्दभाष्यम् ।
अर्हन् बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् ।
ऋ० २।३३।१० ।

७. नि गव्यवो नवो द्रुह्यवश्च षष्टिः शता सुषुपुः षट् सहस्रा ।
षष्टिर्वीरासो अधि षट् द्रुवोयु विश्वेदिन्द्रस्य वीर्या कृतानि ॥
ऋ० ७।१८।१४ । ( अग्रिमे पृष्ठे )

सरित्तरङ्गा इवासंख्यसेना रक्षणीयाः[1]। तस्याः सेनाया आयुधा दृढाः सन्तु[2]। ते पुरुषा अश्वरथादीनारुह्य युध्येयुर्येन ध्रुवं विजयमाप्नुयुः[3]। ऋषिदयानन्दस्तु वेदमाश्रित्यैवमपि निरूपयति यन्मनुष्यैरन्तरिक्षगामिषु विमानेषु जलचारिषु यानेषु चापि स्थित्वा दृढं योद्धव्यम्[4]।

ते सैनिकाः शतघ्न्यृ[5]-ष्टि[6]-परशु[7]-कृपाण[8]-तोमर-तूणीरा[9]ङ्कुश[10]-बाण[11]-वज्र[12]-धनुर्भ्यो[13] विविधेभ्यः शस्त्रेभ्यः सुशोभिता स्युः। अथ च हेति (तोप) प्रभृतीनामस्त्राणां[14] वर्णनमपि दृश्यते। शत्रु-

---

यासां तिस्रः पञ्चाशतोऽभिव्लङ्गैरपावपः। ऋ० १।१३३।४।

पञ्चाशत्कृष्णा निवपः सहस्रात्०। ऋ० ४।१६।१३।

१. ऋ० ४।१६।८।

२. स्थिरा वः सन्त्वायुधा०। ऋ० १।३९।२।

३. तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः।
अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूँरनपव्ययन्तः॥
ऋ० ६।७५।७।

४. द्र० दयानन्दभाष्यम्।
अध स्मा नो वृधे भवेन्द्र नायमवा युधि।
यदन्तरिक्षे पतयन्ति पर्णिनो०। ऋ० ६।४६।११॥

५. तै० सं० १।५।७।६।

६. ऋ० ५।५२।६, ५।५७।२।

७. ऋ० १०।२८।८।

८. ऋ० १०।२२।१०।

९. द्र० ऋ० ५।५७।२।

१०. ऋ० ८।१७।१०। १०।४४।९।

११. इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः।
ऋ० ६।७५।५, द्र० अथर्व० ३।१९।८।

१२. धिष्व वज्रं हस्त आ दक्षिणत्रा। ऋ० ६।१८।९।
शुभं वज्रं बाह्वोर्दधाना०। ऋ० २।११।४।

१३. धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम॥
ऋ० ६।७५।२।
योषेव शिङ्क्ते वितताधिधन्वन् ज्या इयं समने पारयन्ती।
ऋ० ६।७५।३।

१४. आरेसावस्मदस्तु हेतिर्देवासो असत्। अथर्व० १।२६।१।

जयायाग्नेयास्त्राणि[1] सूर्यरश्मिप्रकल्पितानि सौरास्त्राणि[2] च विधाय संगरो विधेयः। त्रिभिः प्रकारैर्युद्धं भवति बाहुयुद्धं नालिकायुद्धमस्त्रयुद्धञ्च। यदा रिपुसेनाऽत्योजसा स्पर्धमाना ऽग्रेऽग्र आक्रम्यमाणाऽऽपतति तां तामसास्त्रेण विध्येत्, येन सर्वे शत्रुसैनिका अन्धा भूत्वा परस्परमन्योन्यमप्रत्यभिजानन्तो मिथो युध्येयुर्विनश्येयुश्च[3]। अथ चापद्धर्मे शत्रुसेनाया उपरि फूत्कुर्वती दुर्गन्धमयी धूमं प्रक्षिपन्ती पूतिरज्जुः प्रक्षेपणीया[4]। तस्या दुर्गन्धमयेन धूमेन रिपवो मूर्च्छिता हतोत्साहाश्च जायन्ते। एवं विविधास्त्रशस्त्रनिर्माणेन दस्यून् जेयात्।

**कवचधारणम्**—ये पुरुषा वृत्रवत् सुशोभनानि वर्माणि धृत्वा युध्यन्ति तेऽक्षतशरीरा शत्रूञ्जेतुं शक्नुवन्ति। शल्यनिवारणार्थं वर्मणा तनुराच्छादनीयम्[5]। यतो वर्मी भूत्वाऽनाविद्धया तन्वा लोकं जयति[6]। ब्रह्मरूपेणान्तर्वर्मणा च यशस्वी भवति[7]।

**युद्धम्**—

संग्रामात् प्राक् वीरेभ्य उत्साहप्रदानायारीणां भीषणाय च दुन्दुभिर्वादनीया[8]। दुन्दुभिरवं शृण्वत्यमित्राणां सेना समरात् परा-

---

१. अग्निर्नः शत्रून् प्रत्येतु विद्वान् प्रतिदहन्नभिशस्तिमरातिम्।
स सेनां मोहयतु परेषां निर्हस्तांश्च कृणवज्जातवेदाः॥
अथर्व० ३।१।१।

२. द्र० प्रसूत इन्द्र प्रवता हरिभ्यां प्र ते वज्रः प्रमृणन्नेतु शत्रून्।
अथर्व० ३।१।४।

३. तमसापव्रतेन। अथर्व० ३।२।६।
द्र० धर्मशास्त्र का इतिहास पृ० ६८५–६८७।

४. पूतिरज्जुरुपध्मानी। अथर्व० ८।८।२।

५. मर्माणि ते वर्मणा छादयामि। ऋ० ६।७५।१८।

६. जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे।
अनाविद्धया तन्वा जयत्वं स त्वा वर्मणो महिमा पिपर्तु॥
ऋ० ६।७५।१।

७. ब्रह्म वर्म ममान्तरम्। ऋ० ६।७५।१६, अथर्व० १।१६।४।

८. आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति। ऋ० ६।४७।३१।
पूर्वो दुन्दुभे प्रवदासि वाचं भूम्याः पृष्ठे वद रोचमानः।
अमित्रसेनामभिजम्भमानो द्युमद् वद दुन्दुभे सूनृतावत्॥
अथर्व० ५।२०।६।

धावति[1]। समरे राजा सेनानीं सर्वतोऽग्रे प्रेरयति सेनासमुत्साहाय[2]। तस्य सेनायाः सैनिकाः सुवीराः सन्तु ये शत्रूणामभिभञ्जकाऽग्रेऽग्रे गन्तारो रिपूणां विजेतारः स्युरेतेषां नेता सेनानीरिन्द्रवच्छत्रुधर्षको बृहस्पतिवद्विद्वान् सोमवद्धीरो गम्भीरश्च स्युरेतादृशस्य सेनापतेः सेना देवसेना भवत्यर्थात् दिव्यगुणैः परिपूर्णा शत्रुभिरजेया भवति[3]।

आक्रमणेनाग्निमनलञ्च[4] विकृत्य[5] शत्रुसेना नाशनीया। आक्रमणञ्च कथं करणीयमित्यत्रोपमालङ्कारेण वर्ण्यते—यथा गोयूथे वृषा सहसाऽऽपतति तथा सैनिकै रिपुयूथे पतितव्यम् तदा शत्रवोऽसून् विहाय सद्यः परलोकं यान्ति[6]।

---

१. दुन्दुभेर्वाचं प्रयतां वदन्तीमाशृण्वती नाथिता घोषबुद्धा।
नारी पुत्रं धावतु हस्तगृह्यामित्री भीता समरे वधानाम्॥
अथर्व० ५।२०।५।
उद्वेपमाना मनसा चक्षुषा हृदयेन च।
धावन्तु बिभ्यतोऽमित्राः प्र त्रासेनाज्ये हुते॥ अथर्व० ५।२१।२।
यथा मृगाः संविजन्त आरण्याः पुरुषादधि।
एवा त्वं दुन्दुभेऽमित्रानभिक्रन्द प्रत्रासयाथो चित्तानि मोहय॥
अथर्व० ५।२१।४।

२. वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः।
अस्माँ अभिदासत्यधरं गमया तमः। यजु० ८।४४, १८।७०।

३. इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्॥
ऋ० १०।१०३।८।

४. असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना।
तां विध्यत तपसापव्रतेन यथैषामन्यो अन्यं न जानात्॥
अथर्व० ३।२।६।

५. अग्नेर्वातस्य ध्राज्या तान् विषूचो विनाशय। अथर्व० ३।२।३।
इन्द्रः सेनां मोहयतु मरुतो घ्नन्त्वोजसा।
चक्षूंष्यग्निरादत्तां पुनरेतु पराजिता॥ अथर्व० ३।१।६।
इन्द्रो वृत्रस्य तविषीं निरहन्त्सहसा सह।
महत्तदस्य पौंस्यं वृत्रं जघन्वाँ असृजदर्चन्ननु स्वराज्यम्॥
ऋ० १।८०।१०।

६. वृषेव यूथे सहसा विदानो गव्यन्नभिरुत सन्धनाजित्।
शुचाविध्य हृदयं परेषां हित्वा ग्रामान् प्रच्युता यन्तु शत्रवः।
अथर्व० ५।२०।३।

**युद्धनीतिः—**

विद्वद्भिर्बलिष्ठैः शस्त्रचालनावसरे विमृश्यैव शस्त्रं प्रक्षेपणीयं येन क्रोधान्निर्गतं शस्त्रं भूम्यादौ न पतेत् किन्तु शत्रुष्वेव पतेत्[1]। संगरे यथा वर्मणा देही रक्ष्यते तथा न्यायेन प्रजाः स्त्रियो रक्षणीयाः शरणागताश्चारातयोऽपि न हन्तव्याः[2]।

राज्ञः शूरवीरा पत्नी पत्युः सह रणप्राङ्गणं गच्छतु[3]। तदेतेन संग्रामेण हिरण्यस्य भूमेर्मित्राणाञ्च प्राप्तिर्जायते[4]।

**सुहृत्—**

यानि कानि च मित्राणि कर्तव्यानि शतान्यपि। यथा राज्ञोऽन्याङ्गानि सिद्धिप्रदानि तथैव सुहृदपि[5]। सुहृदा विना न काऽपि सिद्धिर्भवति। हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते यथा कृशमपि ध्रुवं मित्रमवाप्य सुखं लभते। धर्मज्ञं कृतज्ञं तुष्टप्रकृतिमनुरक्तं स्थिरारम्भं लघुमित्रमपि प्रशस्यते[6]। तच्चतुर्विधम्—

औरसं कृतसम्बन्धं तथा वंशक्रमागतम्।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम्[7]॥

मित्राणां गुणा बहवो नीतिकारैः प्रकीर्तिताः[8]। धर्मार्थकामपुरुषार्थेष्वन्योन्यस्य सिद्धिर्मित्रप्रयोजनम्। तानि मित्राणि नयेन

---

१. यत्ते गात्रादग्निना पच्यमानादभिशूलं निहतस्यावधावति।
मा तद्भूम्या मा श्रिषन् मा तृणेषु०। ऋ० १।१६२।११।

२. अवास्या शिशुमतीरदीदेर्वर्मेव युत्सु परिजर्भुराणः। ऋ० १।१४०।१०।

३. अपाः सोमस्तमिन्द्र प्रयाहि कल्याणीर्जाया सुरणं गृहे ते।
ऋ० ३।५३।६।

४. ऋ० ६।७५।११॥

५. यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः।
तं लोकं यमिन्यभिसम्बभूव सा नो मा हिंसीत् पुरुषान् पशूंश्च॥
अथर्व० ३।२८।५। द्र० अथर्व० ३।२८।६, ६।१२०।३।

६. मनु० ७।२०९।
सुहार्दो मे बहून् कृधि। अथर्व० १९।३२।६।

७. कामन्दक० ४।७४।

८. भर्तृहरिः, नीतिशतके ६५, कामन्दक० ४।७६।

धावति[1]। समरे राजा सेनानीं सर्वतोऽग्रे प्रेरयति सेनासमुत्साहाय[2]। तस्य सेनायाः सैनिकाः सुवीराः सन्तु ये शत्रूणामभिभञ्जकाऽग्रेऽग्रे गन्तारो रिपूणां विजेतारः स्युरेतेषां नेता सेनानीरिन्द्रवच्छत्रुधर्षको बृहस्पतिवद्विद्वान् सोमवद्धीरो गम्भीरश्च स्युरेतादृशस्य सेनापतेः सेना देवसेना भवत्यर्थात् दिव्यगुणैः परिपूर्णा शत्रुभिरजेया भवति[3]।

आक्रमणेनाग्निमनलञ्च[4] विकृत्य[5] शत्रुसेना नाशनीया। आक्रमणञ्च कथं करणीयमित्यत्रोपमालङ्कारेण वर्ण्यते—यथा गोयूथे वृषा सहसाऽऽपतति तथा सैनिकै रिपुयूथे पतितव्यम् तदा शत्रवोऽसून् विहाय सद्यः परलोकं यान्ति[6]।

---

१. दुन्दुभेर्वाचं प्रयतां वदन्तीमाशृण्वती नाथिता घोषबुद्धा।
नारी पुत्रं धावतु हस्तगृह्यामित्री भीता समरे वधानाम्॥
अथर्व० ५।२०।५।

उद्वेपमाना मनसा चक्षुषा हृदयेन च।
धावन्तु बिभ्यतोऽमित्राः प्र त्रासेनाज्ये हुते॥ अथर्व० ५।२१।२।

यथा मृगाः संविजन्त आरण्याः पुरुषादधि।
एवा त्वं दुन्दुभेऽमित्रानभिक्रन्द प्रत्रासयाथो चित्तानि मोहय॥
अथर्व० ५।२१।४।

२. वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः।
अस्माँ अभिदासत्यधरं गमया तमः। यजु० ८।४४, १८।७०।

३. इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्॥
ऋ० १०।१०३।८।

४. असौ या सेना मरुतः परेषामस्मानैत्यभ्योजसा स्पर्धमाना।
तां विध्यत तपसापव्रतेन यथैषामन्यो अन्यं न जानात्॥
अथर्व० ३।२।६।

५. अग्नेर्वातस्य ध्राज्या तान् विषूचो विनाशय। अथर्व० ३।२।३।
इन्द्रः सेनां मोहयतु मरुतो घ्नन्त्वोजसा।
चक्षूंष्यग्निरादत्तां पुनरेतु पराजिता॥ अथर्व० ३।१।६।
इन्द्रो वृत्रस्य तविषीं निरहन्त्सहसा सह।
महत्तदस्य पौंस्यं वृत्रं जघन्वाँ असृजदर्चन्ननु स्वराज्यम्॥
ऋ० १।८०।१०।

६. वृषेव यूथे सहसा विदानो गव्यन्नभिरुव सन्धनाजित्।
शुचाविध्य हृदयं परेषां हित्वा ग्रामान् प्रच्युता यन्तु शत्रवः।
अथर्व० ५।२०।३।

**युद्धनीतिः—**

विद्वद्भिर्बलिष्ठैः शस्त्रचालनावसरे विमृश्यैव शस्त्रं प्रक्षेपणीयं येन क्रोधान्निर्गतं शस्त्रं भूम्यादौ न पतेत् किन्तु शत्रुष्वेव पतेत्[१]। संगरे यथा वर्मणा देही रक्ष्यते तथा न्यायेन प्रजाः स्त्रियो रक्षणीयाः शरणागताश्चारातयोऽपि न हन्तव्याः[२]।

राज्ञः शूरवीरा पत्नी पत्युः सह रणप्राङ्गणं गच्छतु[३]। तदेतेन संग्रामेण हिरण्यस्य भूमेर्मित्राणाञ्च प्राप्तिर्जायते[४]।

**सुहृत्—**

यानि कानि च मित्राणि कर्तव्यानि शतान्यपि। यथा राज्ञोऽन्याङ्गानि सिद्धिप्रदानि तथैव सुहृदपि[५]। सुहृदा विना न काऽपि सिद्धिर्भवति। हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते यथा कृशमपि ध्रुवं मित्रमवाप्य सुखं लभते। धर्मज्ञं कृतज्ञं तुष्टप्रकृतिमनुरक्तं स्थिरारम्भं लघुमित्रमपि प्रशस्यते[६]। तच्चतुर्विधम्—

औरसं कृतसम्बन्धं तथा वंशक्रमागतम्।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम्[७]॥

मित्राणां गुणा बहवो नीतिकारैः प्रकीर्तिताः[८]। धर्मार्थकामपुरुषार्थेष्वन्योन्यस्य सिद्धिर्मित्रप्रयोजनम्। तानि मित्राणि नयेन

---

१. यत्ते गात्रादग्निना पच्यमानादभिशूलं निहतस्यावधावति।
मा तद्भूम्या मा श्रिषन् मा तृणेषु०। ऋ० १।१६२।११।

२. अवास्या शिशुमतीरदीदेर्वर्मेव युत्सु परिजर्भुराणः। ऋ० १।१४०।१०।

३. अपाः सोमस्तमिन्द्र प्रयाहि कल्याणीर्जाया सुरणं गृहे ते।
ऋ० ३।५३।६।

४. ऋ० ६।७५।११॥

५. यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः।
तं लोकं यमिन्यभिसम्बभूव सा नो मा हिंसीत् पुरुषान् पशूंश्च॥
अथर्व० ३।२८।५। द्र० अथर्व० ३।२८।६, ६।१२०।३।

६. मनु० ७।२०९।
सुहार्दो मे बहून् कृधि। अथर्व० १९।३२।६।

७. कामन्दक० ४।७४।

८. भर्तृहरिः, नीतिशतके ६५, कामन्दक० ४।७६।

प्रकल्प्यन्ते[1] षड्गुणेन च धार्यन्ते[2]।

एवंविधेन शासनेन राजा प्रजा चोभये नित्यमेधेते। राष्ट्रं सुसमृद्धं सर्वसुखमयञ्च भवति।

## ( २ ) व्यवहारदर्शनात्मकं वृत्तम्

अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः। तच्च दुष्टनिग्रहणमन्तरेण न सम्भवति। दुष्टपरिज्ञानं च न व्यवहारदर्शनमन्तरेण सम्भवति ततो राजा व्यवहारदर्शनं कुर्यात्[3]। तथा च दिनचर्याक्रमे द्वितीये पौरजनपदानां कार्याणि पश्येत्[4]। न्यायः शासनञ्च राज्ञो निजकार्ये, न ताभ्यां यथाशक्यमन्यं नियोजयेत्[5]। एवमर्थानर्थावुभौ बुद्ध्वा धर्माऽधर्मौ च विज्ञाय वर्णक्रमेण सर्वाणि न्यायप्रार्थिनां कार्याणि पश्येत्[6]। न्यायालयगतश्च नृपो न्यायार्थीन् मोपेक्षेत।

अविवेकी राजाऽऽसन्नैः परिजनैर्वञ्च्यते। तन्न प्रकृतिकोपमरिवशं वा गच्छेत्[7]। न पौरजनपदानां कार्याण्यनवेक्ष्य सुखासक्तो स्यान्नरकगामी मा भूत्[8]। अदण्ड्यान्न दण्डयेत् दण्ड्यांश्चापि न मुञ्चेत्[9]। वेदेषु स्मृतिषु चापि दण्डमहिमा वर्णितः। यो राजा शरीरात्मबलं प्रत्यहं वर्धयति तस्य शत्रवो दूरादेव पलायन्ते[10]।

दण्डव्यवस्था न्यायव्यवस्था च नीतिकारैः स्मृतिकारैश्च विस्तरेण व्याख्याता। अपराधभेदाद् दण्डभेदः। वैदिकविधौ दोषानुरूपं दण्डप्रदानस्यादेशः। येनाङ्गेनापराधं कुर्यात्तेनैवाङ्गेन विहीनः कार्यो

---

१. द्र० कौ० ६।१।

२. सन्धिविग्रहासनयानद्वैधीभावाः षाड्गुण्यमित्याचार्याः। कौ० ७।१।

३. याज्ञवल्क्यस्मृतिः २।१।

४. कौ० १।१८।

५. मनु० ८।१, द्र० वसिष्ठस्मृतिः १६।२८।

६. मनु० ८।२४।

७. कौ० १।१८।

८. शुक्रनीतिः ४।५।८।

९. द्र० ऋ० ४।१७।५।

१०. अभिक्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ् महिमानं रजांसि।
स्वेना हि वृत्रं शवसा जघन्थ न शत्रुरन्तं विविदद्युधा ते॥
ऋ० ७।२१।६।

दण्डप्रदानात्। प्राक् पुरुषस्येङ्गिताकारैः साक्ष्येण गुप्तचरैश्चापराधिनोपराधस्य निर्णयः कार्य एव। दोषसदृशदण्डप्रदानस्य निदर्शनार्थमुच्यते कूटव्यवहारिभ्यो वामहस्तद्विपादच्छेदः, पशूनामपहर्तृभ्यो द्विपादच्छेदः। निन्दकेभ्यः स्तेनेभ्यो वा जिह्वाच्छेदो जिह्वोत्पाटनं वा, रत्नादिमहर्घवस्तुचौरेभ्यः शुद्धवधः, हिंसकेभ्यः पारदारिकेभ्यो वा चित्रवधस्तदङ्गच्छेदोऽग्निदाहः, कटाहाग्निदाहः कुम्भीपाकोऽप्सु निमज्जनम्, शूलारोहणं कर्णनासाच्छेदनादयश्च दण्डा विहिताः। स्वल्पापराधिभ्यो भर्त्सनं, तिरस्कारः, कशाताडनं, कृतकबन्धनाङ्कः, कारावन्धनमर्थदण्डाश्च विहिताः। एवं दण्डप्रदानेनोभयोर्हितम् प्रजाया दुष्टैरव्यथनात् दुष्टानाञ्च दुष्टकर्मभ्यो विरामात्। खलं दण्डेन विना साधो रक्षणं न शक्यं तत ऐश्वर्यवान् नृप उत्तमगुणकर्मस्वभावमार्यं रक्षेत् दस्यून् शिष्यात् हिंस्याच्च[१]। ये बुद्धिबलेन विदुषो रक्षन्ति पापाचरणशीलान् विनाशयन्ति त एव धीमन्तः सन्ति[२]। दस्यवो न केवलं विनाशनीया एवापितु सदाचरणेनापि शिक्षणीयाः[३]।

### (क) कण्टकशोधनम्—

ये दुर्बुद्धिमन्तो दुष्कर्माणः शस्त्रास्त्रप्रक्षेपयितारो रिपवः सन्ति ते हिंसनीयाः[४]। द्विविधा रिपवः स्वदेशान्तःस्थाः शत्रुदेशीयाश्च। तावुभयविधा एव विनाशनीयाः। शत्रूणामुपरि शस्त्राणि प्रक्षेपणीयानि, दुष्टस्वभावा प्राणिनो हन्तव्याः, पापिनो मर्दनीयाः[५]। लुब्धाः पर-

---

१. इन्द्रः समत्सु यजमानमार्यं प्रावत्...शासदव्रतान्।
त्वचं कृष्णामरन्धयत्॥ ऋ० १।१३०।८।

२. अया धिया स्याम देवगोपा अया धिषा तुतुर्यामत्यंहः।
ऋ० ५।४५।११।

३. अनासो दस्यूँरमृणो वधेन नि दुर्योण आ वृणङ् मृध्रवाचः।
ऋ० ५।२९।१०।

४. दुर्मायवो दुरेवा मर्त्यासो निषङ्गिणो रिपवो हन्त्वासः।
ऋ० ३।३०।१५।

५. वृश्चेमधस्ताद्विरुजा सहस्व जहि रक्षो मघवन् रन्धयस्व।
ऋ० ३।३०।१६।

मात्मद्वेषिणो वा वज्रेण समूलं नाशनीयाः[1]। ये गर्दभस्वभावाः श्वानस्वभावाश्च पापया मिथ्याभाषणान्वितया वाचा कपटेन स्तुवन्ति तान् मूर्खान् कुत्सितशब्दमुच्चरतः पुरुषान् हन्यात्[2]। सत्यभाषण-व्यवहाररहितं स्तेन इवाचरन्तं मिथ्याचारयुक्तं व्यभिचारिणं कञ्चिदपि दुष्टं दण्डप्रदानेन विना न मुञ्चेत्[3]। एवं दस्यूनां वधं कृत्वा साहसिकानां तस्कराणामुपरि वज्रं [4]क्षिप्त्वाऽधर्मतमो विनाशनीयः, धर्मप्रकाशश्च प्रथनीयः[5]। तेषां क्रोधश्च वज्रेण हन्तव्य[6]।

**(ख) चित्रदण्डः—**

विविधगतिमताश्चक्रव्यूहस्थाः शत्रवः कपटपूर्वकं विषप्रदानेन तर्दनीयाः[7]। केचिद्दग्धव्याः कारागारे बन्धनीया न्यक्कारश्च प्रापणीयाः[8]। एवं शत्रूणामर्णवसमा अपि सेनाः पादाक्रान्ताः करणीयाः[9]।

---

१. उद्वृह रक्षः सहमूलमिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि।
आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य॥
ऋ० ३।३०।१७।

२. समिन्द्र गर्दभ मृण नुवन्तं पापयामुया। ऋ० १।२९।५।
प्र दुच्छुना मिनवामा०। ऋ० ५।४५।५।

३. रन्धया कञ्चिदव्रतं हृणायन्तं चिदव्रतम्। ऋ० १।१३२।४।

४. असदस्युर्नितोशे... घनं दस्युभ्यो अभिभूतिमुग्रम्। ऋ० ४।३८।१।
वधेन दस्युं प्र हि चातयस्व। ऋ० ५।४।६।
अव दानवं हन्। ऋ० ५।२९।४, ५।३२।१।

५. घ्नन्दस्यून् ज्योतिषा तमः। ऋ० ५।१४।४।

६. वृषप्रभर्मा दानवस्य भामं वज्रेण वज्री निजघान शुष्णम्।
ऋ० ५।३२।४।
ऊर्ध्वो नः पाह्यंहसो निकेतुना विश्वं समत्रिणं दह।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः। ऋ० १।३६।१४।

७. विष्वाचो अहतं विषेण। ऋ० १।११७।१६।

८. उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात्तिग्महेते।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम्॥
ऋ० ४।४।४।

९. अमित्रसेनां मघवन्नस्माञ्छत्रूयतीमभि।
उभौ तामिन्द्र वृत्रहन्नग्निश्च दहतं प्रति। साम० उ० ९।३।६।२।
अभिव्लग्या चिदद्रिवः शीर्षायातुमतीनाम्।
छिन्धि वटूरिणा पदा महावटूरिणा पदा॥ ऋ० १।१३३।२।

भयङ्कररूपेण शत्रूणां विदारको भाव्यः[1]। वज्रेण रिपवो भृशमेजनीयाः[2]। तेन दस्युनाशनेन भूपतिरादित्य इव भुवि विद्योतते[3]। यदि कश्चिद् व्यवहारमजानता प्रमादेननवाऽपराधो कुर्यात् सोऽपि यथोचितदण्डप्रदानेन दण्डनीय एव परमेश्वरनियमत्वात्[4]। विश्वद्वेषिणां हिंसनेनैव राष्ट्रं धनसमृद्धं जायते[5]।

**( ग ) रक्षःपिशाचनाशः—**

ये स्वकीयप्राणपोषणतत्पराः परान् पीडयन्ति ते रक्षःपिशाचासुरशब्देनोच्यन्ते[6]। अज्ञातकुलशीलाः परापकारचिकीर्षिण्यः पिशाचिन्योऽसिभिश्च्छेदनीयाः[7]। तेषां पिशाचानां नेत्रे स्फोटनीये हृदयं विदारणीयम्, जिह्वा छेदनीया दन्ताश्च त्रोटनीयाः[8]। यथा वृकोऽविं मथ्नाति तथा शत्रवो मथनीया जीवितादेव मोचनीयाः[9]। सिंह इव व्याघ्र इव

---

१. आदर्ता वज्रं स्थविरं न भीम०। ऋ० ४।२०।६।

२. दधानो वज्रं बाह्वोरुशन्तं द्याममेनरेजयत् प्रभूम। ऋ० ४।२२।३।

३. सं यत्त इन्द्र मन्यवः सं चक्राणि दधन्विरे।
अध त्वे अध सूर्ये। ऋ० ४।३१।६।

४. यच्चिद्धि ते पुरुषत्रा यविष्ठा चित्तिभिश्चकृमा कच्चिदागः।
कृधीष्व स्माँ अदितेरनागान् व्येनांसि शिश्रथो विष्वगग्ने॥
ऋ० ४।१२।४।

५. भिन्धि विश्वा अप द्विषः परिबाधो जही मृधः।
वसुस्पार्हं तदा भर॥ ऋ० ८।४५।४०, अथर्व० २०।४३।१।
अभीहि मन्यो तवसस्तवीयान् तपसा युजा विजहि शत्रून्।
अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरात्वं नः॥
ऋ० ४।३२।३।

६. द्र० दयानन्दभाष्यम् यजु० ४०।३।

७. द्र० सायणभाष्यम्।
स्वायसा असयः सन्ति नो गृहे विद्मा ते कृत्ये यतिधा परूंषि।
उत्तिष्ठैव परेहीतोऽज्ञाते किमिहेच्छसि॥ अथर्व० १०।१।२०।

८. अक्ष्यौ निविध्य हृदयं निविध्य जिह्वां नितृन्धि प्रदतो मृणीहि।
पिशाचो अस्य यतमो जघासाग्ने यविष्ठ प्रति तं शृणीहि॥
अथर्व० ५।२९।४।

९. अविं वृक इव मथ्नीत स वो जीवन् मा मोचि प्राणमस्यापि नह्यत।
अथर्व० ५।८।४।

शत्रवो व्यापादनीयाः[१]। यदि पापिनां लुण्ठकानां सङ्घोऽपि स्यान्न तदाऽपि भेत्तव्यम्। एक एवेन्द्रो बहून् रिपूञ्जयति[२]।

श्रूयते यदेकलश्रणको भ्राष्ट्रीं भेत्तुमक्षमस्तथा च 'संघे शक्तिः कलौ युगे' इत्युक्तिः। सा च कलौ धर्मस्य त्रयाणां पादानां ह्रासात् पापभूयिष्ठत्वात् पापिषु चरितार्था न सत्यव्रतेषु सत्याचरणशीलेषु। एक एवाग्निर्बहुधा समिद्धो दृश्यते, एक एव सूर्यो ब्रह्माण्डमालोकयति, एकयैवोषसा सर्वमिदं जगद् विभाति, एक एव च परमेश्वरः सर्वं ब्रह्माण्डं नियामयति[३]। सत्यव्रतिनो बलं पापिनां पुरतः शतगुणं भवतीति दृश्यते[४]। तस्य च प्रत्यङ्गममितं बलयुक्तं भवति ततोऽनायासं शत्रून् जेतुं प्रभवति[५]। स्वशक्त्या दुष्टानामुपरि मन्युर्निपातनीयः[६]। ये मांसाशिनो राक्षसास्तेऽपि राज्ञा स्ववशे कर्तव्याः[७]। ये सन्मार्गप्रवृत्तं मनुजं बाधन्ते, इष्टविघातेन ये चित्तं विक्षिप्तं कुर्वन्ति ते कुलिशेन वृक्षा इव छेदनीयाः,[८] पिशुनाश्च भञ्जनीयाः[९]।

---

१. सिंहप्रतीको विशो अद्धि सर्वा व्याघ्रप्रतीकोऽवबाधस्व शत्रून्।
एक वृष इन्द्र सखा जिगीवाँछत्रूयतामाखिदा भोजनानि॥
अथर्व० ४।२२।७।

२. अभीदमेकमेको अस्मि निष्षाळभीद्वा किमु त्रयः करन्ति।
खलेन पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः॥
ऋ० १०।४८।७।

३. ऋ० ८।५८।२।

४. अयुतोऽहमयुतो म आत्मायुतं मे चक्षुरयुतं मे श्रोत्रमयुतो मे प्राणो०।
अथर्व० १९।५१।१।

५. पदा पणींरराधसो निबाधस्व महाँ असि।
नहि त्वा कश्चन प्रति॥ ऋ० ८।६४।२॥

६. ऋ० १०।८४।३।

७. सहमूराननुदह क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः।
अथर्व० ५।२९।११।

८. वृश्चामि ते कुलिशेनेव वृक्षं यो अस्माकं मन इदं हिनस्ति।
अथर्व० २।१२।३।

वज्रेणापि शीर्षाणि वृश्चतु। अथर्व० १।७।७।

९. चक्षुर्मन्त्रस्य दुर्हार्दः पृष्टीरपि शृणीमसि। अथर्व० २।७।५।
वि वृत्रस्य हनू रुज। अथर्व० १।२१।३।

ये रक्षः पिशाचास्सन्ति ते तत्र विनियुक्तेनाग्निहोत्रेण ब्रह्मास्त्रेणाग्नेयास्त्रेण च नश्यन्ति[१]। तेनास्त्रेण तेषां प्राणा यमसदनं यान्ति[२]। अथ च शत्रुः शपनेन मूढमतिर्भूत्वा विनश्यति[३]। यातनादात्री रिपुसेना मूढमतया स्वकीयानेव हन्ति, अथ च केशाकेशि नखानखीति कलहेनोपदस्यति[४]। ये रिपवो हस्तिनं मशका इव सम्राजं क्रोधयन्ति ते क्षुद्रकीटवन्नृपक्रोधाग्निना मर्दिता जायन्ते[५]। महान्तोऽपि मिथ्याभिमानिनो रिपवः सत्पुरुषान् पीडयन्तो न्याययुते राज्ये विनश्यन्ति[६]। ये राज्ञो मद्यपा दासा भवन्ति ते राजक्रोधात् म्लायन्ते[७]।

राज्ञो दस्युदमनं मुख्यकर्तव्यत्वेनाम्नायते[८]। अतो राजा बलवतः शत्रूनुपदस्येदेव[९]। ये व्याघ्रवृत्तयः स्तेनाः सन्ति ते स्वराष्ट्रात् निष्कास-

---

१. द्र० सायणभाष्यम्।

यत्रैषामग्ने जनिमानि वेत्थ गुहासतामत्रिणां जातवेदः।
तांस्त्वं ब्रह्मणा वावृधानो जह्येषां शततर्हमग्ने ॥ अथर्व० १।८।४।

२. सप्त प्राणानष्टौ मन्यस्तांस्ते वृश्चामि ब्रह्मणा।
अया यमस्य सादनमग्निदूतो अरङ्कृतः ॥ अथर्व० २।१२।७।

३. या शशाप शपनेन याघं मूरमादधे।
या रसस्य हरणाय जातमारेभे तोकमत्तु सा ॥ अथर्व० १।२८।३।

४. पुत्रमत्तु यातुधानीः स्वसारमुत नप्त्यम्।
अधा मिथो विकेश्यो विघ्नतां यातुधान्यो वितृह्यन्तामराय्यः ॥
अथर्व० १।२८।४।

५. ये मा क्रोधयन्ति लपिता हस्तिनं मशका इव।
तानहं मन्ये दुर्हितान् जने अल्पशयूनिव ॥ अथर्व० ४।३६।९।

६. महि चिन्मन्यमानमेभ्यो नृभ्यो रन्धया येष्वस्मि। ऋ० ६।१९।१२।

७. द्र० दयानन्दभाष्यम् ऋ० ६।२०।६।

८. त्वं ह नु त्यददमायो दस्यूँरेकः।
कृष्टीरवनोरार्याय ॥ ऋ० ६।१८।३।
अरन्धयः शर्धत इन्द्र दस्यून्। ऋ० ६।२३।२।
धृषता रुजन्तः। ऋ० ६।६।३।

९. तूर्वन्तो दस्युम्। ऋ० ६।१४।३।
विमृधो जहि। ऋ० ६।५३।४।
अधा अर्यो अरातयः। ऋ० ६।४८।१६।
जहि रक्षांसि सुक्रतो। ऋ० ६।१६।२९।
जहि शत्रूरभि गा इन्द्र तृन्धि। ऋ० ६।१७।३।

यितव्याः । ये चाहिवृत्तयो वृकवृत्तयः सन्ति त इन्द्रस्य वज्रेण पथ्येव विनाशं यान्तु[१] । ये तस्कराणां प्रचोदयितारः सन्ति तेऽपि राज्ञो दृष्टयाऽनवेक्षिता न स्युः[२] । तेऽपराधिनो यथोचितदण्डनेन दण्डनीयाः । वधोचिता दुष्टा सीसगोलकेन हन्तव्याः[३] । एवं विनिहत्य तेषां सर्वस्वमपहर्तव्यम्[४] । ये च नराणामपकर्तार आखवस्तत्सदृशा वा अन्ये प्राणिनः सन्ति तेऽपि हिंसनीया एव । न तेषां वधे कश्चित् पापेन युज्यते[५] ।

एवं देशभेदात् स्वभावभेदाच्चानेकविधाः शत्रव आम्नायेषु कीर्तिताः । ते सर्वे जेतव्या एव[६] । न ते सर्वेऽत्र दर्शयितुं शक्यास्तथापि निदर्शनार्थं केषाञ्चिदेव प्रस्तावः । तथा हि—

ये परपदार्थान् दस्यन्त्युपक्षपयन्ति ते दस्यवः[७] । येऽभिमानिनस्तेऽभिमातिनः[८] । योऽदाता कृपणो वा स अरातिः[९] । य उभयपक्षाश्रिताः

---

१. व्याघ्रं दत्वतां वयं प्रथमं जम्भयामसि ।
आदुष्टेनमथो अहिं यातुधानमथो वृकम् ॥ अथर्व० ४।३।४ ।
यो अघस्तेन आयाति स संपिष्टो अपायति ।
पथामपध्वंसेनैत्विन्द्रो वज्रेण हन्तु तम् ॥ अथर्व० ४।३।५ ।

२. स्रोकानुस्रोक पुनर्वोयन्तु यातवः पुनर्हेतिः किमीदिनः ।
यस्य स्थ तमत्त यो वः प्राहैत् तमत्त स्वमांसान्यत्त ॥
अथर्व० २।२४।३ ।

३. सीसं म इन्द्रः प्रायच्छत् तदङ्ग यातुचातनम् ।
इदं विष्कन्धं सहत इदं बाधतेत्त्रिणः ॥ अथर्व० १।१६।२–३ ।

४. ऐषां यज्ञमुत वर्चोददेहं रायस्पोषमुतचित्तान्यग्ने । अथर्व० १।९।४ ।

५. हतं तर्दं समङ्कमाखुम् । अथर्व० ६।५०।१ ।
तर्दहै पतङ्गहै जभ्यहा उपक्वस । अथर्व० ६।५०।२ ।

६. इतो जयेतो विजय सं जय जय स्वाहा । अथर्व० ८।८।२४ ।

७. ऋ० १।३६।१८, ८।५५।१, ८।५६।१ ।
विजानीह्यार्यान् ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान् ।
ऋ० १।५१।८ ।

८. विश्वा मृधो अभिमातीर्जयेम । अथर्व० १८।२।५९ ।
सहस्व नो अभिमातिं सहस्व पृतनायतः ।
सहस्व सर्वान् दुर्हार्दः सुहार्दो मे बहून् कृधि ॥ अथर्व० १९।३२।६,
अथर्व० २०।१९।७ ।

९. अरातिर्नो मातारीन्मानस्तारिषुरभिमातयः । अथर्व० २।७।४ ।

सन्ति ते द्वयाविनः[१]। ये विरोधिनो रन्ध्रान्वेषिणो वा ते द्विषः[२]। ये द्रोहबुद्धयस्ते दुर्विदत्राः[३]। योऽघं पापं चिकीर्षुः सोऽघायुः[४]। य ईर्ष्यालवः शत्रवस्ते सपत्नाः[५]। ये सेनायाऽऽक्रमणं चिकीर्षवस्ते पृतन्यवः[६]। अन्ये दुर्हिताः[७]। दुष्टहृदया दुर्हार्दः[८]। किमिदानीं कस्य किञ्चिदिति चरन्ति किमिदं वर्तत इति वा चरन्ति, साधुजनवैरिणः सदाविरुद्धबुद्धयः किमीदिनः[९]। प्रतिकूले पथि चरन्ति स्तेयाय सुगुप्तं तिष्ठन्ति ते परिपन्थिनः[१०]। यो मुष्णाति स मुषीवान्[११]। य उत्कोचको हस्तात् परपदार्थहर्ता स हुरश्चितः[१२]। अनिष्टं रपति वदतीति रिपुः[१३]।

---

१. नारातयस्तितिरुर्न द्वयाविनः। ऋ० २।२३।५।
या नो दूरे तळितो या अरातयोऽभिसन्ति जम्भया ता अनप्नसः।
ऋ० २।२३।६।
दहतादरातिः। ऋ० ३।१८।१।

२. यो अस्मभ्यमरातीयाद् यश्च नो द्वेषते जनः।
निन्दाद् यो अस्मान् धिप्साच्च सर्वं तं भस्मसा कुरु॥
यजु० ११।८०। ऋ० ६।६१।२८। ऋ० २।७।३।
राजन्नपद्विषः सेध०। ऋ० ८।७९।९।

३. अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः।
ऋ० १०।६३।१२।

४. ऋ० १।१४७।४।

५. अग्ने जातान् प्रणुदा मे सपत्नान्। अथर्व० ७।३४।१।
द्र० अथर्व० १३।१।२९, १७।१।२४, १।१९।४, ६।२।१८, ५।२८।१४।
ऋ० १०।१६६।१।

६. ऋ० १।८।४, २।८।६, १०।१५२।४।

७. तानहं मन्ये दुर्हितान् जने अल्पशयूनिव। अथर्व० ४।३६।९।

८. अथर्व० ८।३।२५।

९. ताभ्यां दुहार्दमभिदासन्तं किमीदिनं प्रत्यञ्चमर्चिषा जातवेदो विनिक्ष्व॥
अथर्व० ८।३।२५।

१०. ऋ० १।४२।३।

११. ऋ० १।४२।३।

१२. अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम्।
दूरमधिस्रुतेरज। ऋ० १।४२।३।

१३. ऋ० १।१४८।५।

आत्मजिघांसवो रिषण्यवः[1] । हिंसका रेषणाः[2] । ज्ञानचक्षुरहिता अन्धाः[3] । ये न पश्यन्ति तेऽपश्याः[4] । यः स्तेनयति चौरयति स स्तेनः[5] । दुःखेन प्राप्तुं योग्यो दुरेवः[6] । वृकवच्छत्रुहिंसको वृणोतीति वृकः काकः श्वापदो वा[7] । यो दभ्नाति हिंसति स दभीतिः[8] । रक्षतीति रक्षः[9] पालको वा दुष्टो वा । रक्षसां संघातो रक्षस्विनः । यः संलुब्धं भवति स सललूकः[10] । यः पिशति दुःखयति स पिशाचिः[11] । यो जिघांसया प्रच्छन्नचारी स यातुधानः[12] । मूलेन विषौषध्या दीव्यति स मूरदेवः[13] । अथ चामित्राः[14] वृत्राणि[15] धूर्वन्तो[16]ऽहर्दृशो[17]ऽपि सन्ति ।

**( घ ) वन्ध्यकरणम्—**

एवं विविधाः शत्रवः सन्ति । सद्राज्य एते सत्पुरुषान् पीडयितुं न

---

१. ऋ० १।१४८।५ ।

२. ऋ० १।१४८।५ ।

३. ऋ० १।१४८।५ ।

४. ऋ० १।१४८।५ ।

५. ऋ० ५।३।११ ।

६. अथर्व० ८।३।१६, २४ ।

७. ऋ० ४।४१।४ ।

८. यो नो दुरेवो वृकतिर्दभीतिस्तस्मिन्मिमाथामभिभूत्योजाः ।
ऋ० ४।४१।४ ।

९. घृताहवन दीदिवः प्रति ष्म रिषतो दह ।
अग्ने त्वं रक्षस्विनः । ऋ० १।१२।५ ।

१०. आ कीवतः सललूकं चकर्थ० । ऋ० ३।३०।१७ ।

११. पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण ।
सर्वं रक्षो निबर्हय । ऋ० १।१३३।५ ।।

१२. ऋ० १०।८७।११, १।३५।१०, अथर्व० १।८।३ ।

१३. अथर्व० ८।४।२४ ।

१४. वसोऽमित्रान्त्सुषहान् कृधि । ऋ० ६।४६।६ ।
अप प्राच इन्द्र विश्वाँ अमित्रान् । ऋ० १०।१३१।१ ।

१५. घ्नन्तो वृत्राण्युभयानि शूर राया मदेम । ऋ० ६।१९।१३ ।

१६. धूरसि धूर्व धूर्वन्तम् । यजु० १।८ ।

१७. ऋ० ८।६६।१० ।

प्रभवन्ति दुर्बलराज्ये च वृद्धिं यान्ति। यथैतेषां शत्रूणां दण्डा विहिताः, तथा व्यभिचारिणे पुरुषाय वन्ध्यकरणं दण्डरूपेण प्रकीर्तितम्। ये पुरुषाः परदाराभिगामिनः स्युस्ते शल्यकर्मणौषध्या वा क्लीबाः करणीयाः[1]। तस्याण्डौ पाषाणेन भेत्तव्यौ[2]। रेतोवहे नाड्यौ छित्वा क्लीबः करणीयः[3]। यथा दुष्टपुरुषो नपुंसकः कर्तव्य एवमेव विद्वेषिणी पुंश्चली योषाऽपि वन्ध्या करणीया[4]।

एवं न्यायकारिणा राज्ञा स्वसाहाय्यार्थं न्यायकारिणो न्यायाधीशा राजपुरुषाश्च नियोजनीयाः प्रत्यहञ्च तेषां कार्यं स्वयमवेक्षणीयमिति वेदमनुसृत्य दण्डनीतिर्व्याख्याता।

भवन्ति चात्र—

राज्यस्य नीतेर्विषयाधिकारे प्रशासनानां विविधत्वमुक्त्वा।
वेदेषु दिष्टं नृपनीतिरूपं विज्ञापिता शासनपद्धतिश्च ॥ १ ॥
अङ्गानि राज्यस्य च विस्तरेण राजा तथाऽमात्यजनप्रदेशः।
दुर्गं हिरण्यं पृतना सखा च निरूपितान्यत्र हि सप्रमाणम् ॥ २ ॥
न्यायप्रकारं बहुधा विविच्य सुशोधनं तस्करकण्टकानाम्।
दण्डाश्च तेभ्यो विविधाः प्रदेयाः सुवर्णितं वेददिशा सुखार्थम् ॥३॥

---

१. इमं मे अद्य पूरुषं क्लीबमोपशिनं कृधि। अथर्व० ६।१३८।१।

२. क्लीबं कृध्योपशिनमथो कुरीरिणं कृधि।
अथास्येन्द्रो ग्रावभ्यामुभे भिनत्त्वाण्ड्यौ ॥ अथर्व० ६।१३८।२।
क्लीब क्लीबं त्वाऽकरं वध्रे वध्रिं त्वा करमरसारसं त्वाऽकरम्।
कुरीरमस्य शीर्षणि कुम्बं चाधिनिदध्मसि। अथर्व० ६।१३८।३ ॥

३. ये ते नाड्यौ देवकृते ययोस्तिष्ठति वृष्ण्यम्।
ते ते भिनद्मि शम्ययाऽमुष्या अधिमुष्कयोः ॥ अथर्व० ६।१३८।४।
यथा नडं कशिपुने स्त्रियो भिन्दन्त्यश्मना।
एवा भिनद्मि ते शेपोऽमुष्या अधिमुष्कयोः ॥ अथर्व० ६।१३८।५।

४. इमा यास्ते शतं हिराः सहस्रं धमनीरुत।
तासां ते सर्वासामहमश्मना बिलमप्यधाम्।
परं योनेरवरं ते कृणोमि मा त्वा प्रजाभिभून्मोत सूनुः।
अथर्व० ७।३५।२-३ ॥

# ८. आध्यात्मिकमधिकरणम्

## ( १ ) हेतुलिङ्गात्मकं वृत्तम्

**( क ) आधिस्वरूपम्—**

पुरुषस्य दुःखसंयोगा आधयो व्याधयश्चोच्यन्ते। तेषां मानसाः कामक्रोधलोभमोहशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यामर्षपरापकारचिकीर्षाप्रभृतय आधयो रागद्वेषभेदैर्भवन्ति। एते मनोऽधिष्ठानाः[1]।

मनस्तु सत्त्वरजस्तमात्मिकायास्त्रिगुणमय्याः प्रकृतेर्विकारः। यदा पुरुषस्य देहे यो गुणः साकल्येनातिरिच्यते तदा स गुणः शरीरिणं तद्गुणप्रायं करोति। यदा मनः सत्त्वगुणप्रायं भवति तदा देह्याऽऽत्मानं प्रीतिसंयुक्तं प्रशान्तं शुद्धाभं प्रकाशयुक्तं लघु ज्ञानवन्तञ्चानुभवति। यदा तु रजःप्रायं भवति तदा स आत्मानमप्रीतिसंयुक्तं दुःखसमायुक्तं द्रवत्वचलत्वगमनागमनघोरक्रियासु प्रवृत्तिमन्तमनुभवति। यदा च मनस्तमोऽभिभूतं भवति तदा देही स्वात्मानं मोहसंयुक्तमव्यक्तं विषयात्मकमप्रतर्क्यमविज्ञेयं स्तब्धत्वगुरुत्वमूढत्वविषादयुक्तमनुभवति[2]। ततः पुरुषेण सर्वदा रजस्तमसि व्यावर्त्य सत्त्वं स्वात्मनि वर्धनीयम्।

**( ख ) कामक्रोधौ—**

अथायं पुरुषोऽनिच्छन्नपि बलान्नियोजित इव किमर्थं पापं चरति तदाह—रजोगुणसमुद्भवो महाशनो महापाप्मा कामः क्रोधश्च वैरिणौ पुरुषं पापे प्रचोदयतः। एताभ्यां नित्यवैरिभ्यां पुरुषस्य ज्ञानमावृतं भवति। यथा वह्निर्धूमेनादर्शो वा मलेनाव्रियते यथा वा गर्भ उल्वेनावृतो भवति तथा ज्ञानमाव्रियते। एतयोरधिष्ठानमिन्द्रियाणि मनो बुद्धिश्चोच्यते। एतैः पुरुषस्य ज्ञानमाव्रियते मूढश्च भवति[3]।

**( ग ) अविद्या—**

अपरो हेतुरविद्या भवति। सैवायुर्वेदशास्त्रेषु प्रज्ञापराध इत्युच्यते[4]। धीधृतिस्मृतिविभ्रष्टो रजोमोहेन व्यावृतो यदशुभं कर्म कुरुते

---

१. सुश्रुते सूत्रस्थाने १।२३–२५।

२. तु० मनु० १२।२७–२९।

३. द्र० गीता ३।३६–४०।

४. द्र० चरके शारीरस्थाने १।१०९।

स प्रज्ञापराधो भवति । स एव सर्वदोषप्रकोपकत्वेन सर्वरोगाणां सर्वशारीरमानसाधिव्याधीनां दुःखानामाधिभौतिकाधिदैविकाध्यात्मिकत्रिविधतापानाञ्च हेतुर्नाम । सैव जन्ममरणरूपबन्धनस्य हेतुत्वे सत्यऽविद्यानाम्ना योगशास्त्रे यजुषि[1] च समाम्नाता । सर्वक्लेशानां मूलहेतुरविद्या एव[2] । अविद्यावन्तो मनुष्याः परमेश्वरं विहायातो भिन्नं जडं वस्तूपास्य महति दुःखसागरे मज्जन्ति[3] । दृष्टादृष्टजन्मवेदनीयानां कर्माशयानां मूलमविद्यादयः पञ्चक्लेशा भवन्ति तेऽविद्याऽस्मिता रागद्वेषाभिनिवेशा इति[4] । तेषामुत्पत्तिक्षेत्रं माता वाऽविद्या सा चतुर्विधा ।

१. अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्या[5] । अनित्ये कार्ये शरीरादिस्थूलपदार्थेषु पृथिवीचन्द्रादिषु लोकलोकान्तरेषु दिवौकसेषु नित्यख्यातिस्तथा च नित्येष्वीश्वरजीवप्रकृतिष्वनित्यबुद्धिः ।

२. अशुचौ परमबीभत्से कायेऽस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निःस्सारेऽस्मिञ्छरीरे जराशोकसमाविष्टे रोगायतने रजस्वले भूतावासे सरोवरे नद्यां वा तीर्थत्वाभासः पापान्मुक्तत्वबुद्धिर्वा, तेषां चरणामृतपाने एकादश्यादिषु व्रतेषु क्षुत्पिपासातितिक्षा, स्पर्शेन्द्रियभोग आत्यन्तिकी प्रीतिरित्याद्यशुचिपदार्थेषु शुचिख्यातिस्तथा सत्यविद्यायां सत्यभाषणे सत्सङ्गे परमेश्वरोपासनायां जितेन्द्रियत्वे सर्वोपकारकरणे सर्वैः प्रीतिव्यवहार एवमादिषु शुद्धाचरणेषु पदार्थेषु चाशुचिबुद्धिरिति । एतेनाऽपुण्ये पुण्यप्रत्ययस्तथैवानर्थे चार्थप्रत्ययो व्याख्यातः ।

३. दुःखे सुखख्यातिः । विषयतृष्णायां कामक्रोधलोभमोहशोकहर्षविषादद्वेषादिषु दुःखरूपव्यवहारेषु सुखबुद्धिः । जितेन्द्रियत्वे निष्कामे शमे सन्तोषे विवेके प्रसन्नतायां प्रीत्यां मैत्र्यादिसुखरूपव्यवहारेषु दुःखबुद्धिः ।

---

१. अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते० । यजु० ४०।१२ ।

२. तस्य हेतुरविद्या । योगसूत्रम् २।२४ ।

३. द्र० दयानन्दभाष्यम् यजु० ४०।३ ।

४. योगसूत्रम् २।३ ।

५. योगसूत्रम् २।५ ।

४. तथाऽनात्मन्यात्मख्यातिर्बाह्योपकरणेषु चेतनाऽचेतनेषु। जडेषु चेतनभावश्चेतनेषु च जडभावः। व्यक्तं पुत्रादिकमव्यक्तं धनादिकं वा सत्त्वमात्मत्वेन प्रतीत्य तस्य सम्पदमनुनन्दत्यात्मसंपदं मन्यमानस्तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्वानः सर्वोऽप्रतिबुद्ध इति[1]।

ततो ज्ञायते सर्वे दुःखसंयोगा अविद्ययैव जायन्ते। अविद्या विपर्ययो मिथ्याज्ञानमित्यनर्थान्तरम्। तयाऽविद्ययाऽभिभूताः सर्वे प्राणिन ऋते योगिनः। एत एवाऽधीनां हेतवः। इन्द्रियविषयाणां ध्यानाच्चाप्याधयः प्रादुर्भवन्ति। तथैव च शास्त्रेषु प्रतिपादितम्[2]। सर्वेषामाधीनां वा मूलमधर्मः। तन्मूलं चासत्कर्म पूर्वकृतम्। तयोर्योनिरपि प्रज्ञापराध एव। एतद्विषये चरकशास्त्रे निरूप्यते—

आदिकाले सत्यार्जवानृशंस्यदानदमनियमतपोपवासब्रह्मचर्यव्रतपरा व्यपगतभयरागद्वेषमोहलोभशोकमानरोगनिद्रातन्द्राश्रमक्लमालस्यपरिग्रहाच्चामितायुषः पुरुषा बभूवुः। भ्रश्यति तु कृतयुगे केषाञ्चिदत्यादानात् सांपन्निकानां शरीरगौरवमासीत्, शरीरगौरवाच्छ्रमः, श्रमादालस्यमालस्यात् परिग्रहः परिग्रहाल्लोभः प्रादुरासीत्। ततो लोभादभिद्रोहः। अभिद्रोहादनृतवचनमनृतवचनात् कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोकचिन्तोद्वेगादयः प्रवृत्ताः[3]। अस्य तथ्याऽतथ्ये तु विद्वांस एव प्रमाणमत्र तु कामादीनां कथं प्रादुर्भाव इति प्रदर्शनमेव तात्पर्यम्।

वेदे त्वेतद्दृश्यते स एष कामोऽग्रे सर्वतो प्रथमं समवर्तत[4]। योगशास्त्रे प्रतिपादितं यत्प्रत्याहारेणेन्द्रियाणि विषयेभ्यो निवर्तयेत्[5]।

---

१. तु० व्यासभाष्यम् योगसूत्रम् २।५।

२. ध्यायतो विषयान् पुंसः संगस्तेषूपजायते।
संगात् संजायते कामः कामात् क्रोधोऽभिजायते॥
क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति॥
गीता २।६२। २।६३।

३. चरके विमानस्थाने ३।२४–२६।

४. कामो जज्ञे प्रथमो नैनम्०। अथर्व० ९।२।१९, १९।५२।१।
अथर्व० १०।१२९।४।

५. योगसूत्रम् २।५४–५५।

लोभशोकादिवेगान् च सततं स्वात्मनि धारयेत्[1]। कामाचारी मा स्यात्, विवेकी भूयात्, जितक्रोधो भवेत्, न लोभेनाचरेत, दानेनोपभुञ्जीत, न मोहमुपेयात्। सुखीपुरुषं वीक्ष्य न मात्सर्यं कुर्यात् तेन सह मैत्रेण चरेत्। मैत्रीकरुणामुदितोपेक्षादिभिर्भावैः सुखदुःखपुण्यापुण्यविषये मनसःप्रसादनं जायते[2]। नहि गुणिनमभ्यसूयेत् न परापकारचिकीर्षुः स्यात्। न मनोदैन्यमाप्नुयात्। यो मनोभवान्रागादीन्नापवारयति स सर्वत्र सीदात्युन्मत्तश्चापि जायते। त एव मनोगता विकाराः कदाचिदपस्मारोन्मादरूपेष्वप्यभिव्यज्यन्ते।

## (२) आधिप्रशमनात्मकं वृत्तम्

सर्वेषां दुःखानां द्विविधं निवर्तनं भवति। एकं तु स्वल्पकालाया-परश्च परान्तकालाय। यज्ञादिशुभकर्मणा पुरुषः स्वर्गमाप्नोति देवादीनां श्रेष्ठयोनौ वा जायते। सुखभोगादिना तत्कर्मक्षयात् स पुनः मनुष्ययोनिमधिगच्छति। ईश्वरव्यवस्थया कर्माशयविपाकवशात् जात्यायुर्भोगाँल्लभते जीवः[3]।

### (क) यज्ञयागानुष्ठानम्—

प्रथमविधस्य दुःखनिवर्तनस्य सुखप्राप्तेश्च साधनानि यज्ञयागप्रभृतीनि कर्माणि भवन्ति। यानि समासतोऽत्र निरूप्यन्ते—

यज्ञकर्माणि त्रिविधानि श्रौतस्मार्तगृह्यभेदात्। तत्र श्रौतयज्ञा एव श्रौतसूत्रेषूक्ताः, स्मार्ताः स्मृतिग्रन्थेषु, गृह्याश्च गृह्यसूत्रेषु। 'अग्निहोत्रं जुहुयात् स्वर्गकाम'[4] इति वाक्येन यज्ञेषु मुख्यस्याग्निहोत्रस्य स्वर्गप्रदत्वात्सिद्धं यज्ञस्य सुखप्रदत्वम्। तेषु यज्ञेषु पञ्च वा एते महायज्ञाः सततं प्रतायन्ते सततं सन्तिष्ठन्ते[5]। ते सर्वेभ्योऽपरिहार्या लौकिकपारलौकिकसुखप्रदाश्च भवन्ति। तत्र प्रथमो ब्रह्मयज्ञः, साङ्गानां वेदादिशास्त्राणां सम्यगध्ययनमध्यापनं संध्योपासनञ्च। द्वितीयो देवयज्ञः। अग्नये परमेश्वराय जलवायुशुद्धिकरणाय च होत्रं हवनं यस्मिन् क्रियते। तत्राग्निहोत्रमग्न्युद्देशेन सायं प्रातः क्रियमाणो

१. द्र० चरके सूत्रस्थाने ७।२७।
२. योगसूत्रम् १।३३।
३. योगसूत्रम् २।१३।
४. कातीयश्रौतसूत्रे ४।१५।२१।
५. तैत्तिरीयारण्यके २।१०।

होमविशेषः[1]। तत्र पयो मुख्यद्रव्यत्वेनाम्नायते। अस्य चाग्निहोत्रस्य महत्प्राशस्त्यमकरणे च महान् प्रत्यवायो जन्मनो वैयर्थ्यञ्च बहु प्रतिपादितं श्रुतौ स्मृतौ च[2]। तृतीयः पितृयज्ञः स द्विविधस्तर्पणाख्यो श्राद्धाख्यश्च। यत् पितॄणां मधुरपदार्थैः तृप्तिस्तत्तर्पणम्। श्रद्धया सेवा-शुश्रूषा सपर्या च श्राद्धः[3]।

पितृयज्ञञ्च द्विविधं व्याचक्षते विचक्षणाः। जीवितपितृभ्य इत्येके[4] मृतेभ्य इत्यपरे[5]। ये मृतपितॄनभिलक्ष्य पिण्डपितृयागेन यष्टव्यमिति मन्यन्ते तेषां मतेऽयं यज्ञः प्रतिमासममावास्यायां तृतीये प्रहरे करणीयः[6]। पितॄणां मासभोजनात्[7]। तदेतत् विस्तरेण ब्राह्मणेषु श्रौतसूत्रेषु चाम्नायते[8]। ते च मृतपिण्डपितृयागं वेदैरपि साधयन्ति[9]। अपरतश्च दयानन्दप्रभृतयो महाभागाः सुदृढैः प्रमाणैरुपपादितवन्तो यज्जीवितेभ्यः

---

१. सायं सायं गृहपतिर्नो अग्निः प्रातः प्रातः सौमनसस्य दाता।
वसोर्वसोर्वसुदान एधि वयं त्वेन्धानास्तन्वं पुषेम॥
प्रातः प्रातः गृहपतिर्नो अग्निः सायं सायं सौमनसस्य दाता।
वसोर्वसोर्वसुदान एधीन्धानास्त्वा शतहिमा ऋधेम॥
अथर्व० १९।५५।३–४।

२. द्र० विद्याधरगौडः, का० श्रौ० भ० पृ० ३३,

३. द्र० दयानन्दभाष्यम्।
ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।
स्वधास्थ तर्पयत मे पितॄन्॥ यजु० २।३४।

४. दयानन्दः, ऋ० भा० भू० पृ० २५१।

५. द्र० विद्याधरगौडः, का० श्रौ० भू० पृ० ३१।

६. यत् संवत्सराय संवत्सरसदो दीक्षन्ते कथमेषां पितृयज्ञः?
शत० ब्रा० १२।३।५।५।

७. मासि मासि वोऽशनꣳस्वधा वो मनोजवो नश्चन्द्रमा वो ज्योतिरिति।
शत० ब्रा० २।४।२।२।

८. द्र० शत० ब्रा० २।४।२।१६–२४।
कातीय श्रौतसूत्रे ४।१।१–२२।

९. ये च जीवा ये च मृता ये जाता ये च यज्ञियाः।
तेभ्यो घृतस्य कुल्यैतु मधुधारा व्युन्दती॥ अथर्व० १८।४।५७।
द्र० यजु० १९।५८।
तु० गिरधरशर्मा चतुर्वेदी, 'वैदिकविज्ञान एवं भारतीयसंस्कृति।'

पितृभ्य, श्रद्धापूर्वकं भोजनादिप्रदानमेव श्राद्धकर्म[1]। श्राद्धविषय एतादृशं वैमत्यं चिरात् संदृश्यते विद्वांस एवाऽत्र तथ्यातथ्यं विचिन्वन्तु ।

चतुर्थो बलिवैश्वदेवयज्ञः । तत्र च कीटेभ्यस्तुच्छभूतेभ्यश्च बलिप्रदानम्[2] । पञ्चमोऽतिथियज्ञो[3] विदुषो महात्मनः परिव्राजकस्य च सत्काररूपः । सर्वैर्गृहाश्रमिभिर्वानप्रस्थैश्च पञ्चविधपापनिवारणायैते पञ्चमहायज्ञा नित्यमनुष्ठेयाः । ब्रह्मचारिसंन्यासिभिस्त्वादिमौ द्वावेव । ये गृहाश्रमिणोऽपि पूर्णज्ञानवन्तः स्युर्न तेप्याग्निहोत्रादिराज्ञं जुहुयुः[4] ।

यज्ञशब्दो दानदेवपूजासङ्गतिकरणार्थकाद्यजधातोर्निष्पद्यते।देवानां दिव्यगुणवतां विदुषां परमेश्वरस्य वा पूजा यस्मिन् क्रियते तेषां सत्कारस्तेभ्यो दानं तेषां सङ्गतिश्च, यत्रैतानि त्रीणि कर्माणि क्रियन्ते स यज्ञ इति । धनधान्यहिरण्यरत्नानां वृद्धये चक्रवर्तिराज्याय च राजसूययज्ञोऽनुष्ठातव्यः[5] । एते यज्ञा घृतपूर्णह्रदवते मधुक्षीरदधिसमायुताय भोग्यमयाय स्वर्गाय[6] तरणिरिव सन्ति[7]। गृहाणां चाधि-

---

१. द्र० दयानन्दः, ऋ० भा० भू० २५१–२६६ ।

२. अहरहर्बलिनिमित्ते हरन्तोऽश्वायेव तिष्ठते घासमग्ने ।
रायस्पोषेण समिषा मदन्तो मा ते अग्ने प्रतिवेशा रिषाम ।।
अथर्व० १९।५५।७ ।

३. तद्यस्यैवं विद्वान् व्रात्योऽतिथिर्गृहानागच्छेत् ।
स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्य क्वा वात्सीर्व्रात्योदकं व्रात्य तर्पयन्तु व्रात्य यथा ते प्रियं तथास्तु० । अथर्व० १५।११।१ ।

४. तद्ध स्मैतत्पूर्वे विद्वांसोऽग्निहोत्रं न जुह्वाञ्चक्रुः ।
शांखायनआरण्यकम् ४।५, पृ० १५ ।

५. भूतो भूतेषु पय आदधाति स भूतानामधिपतिर्बभूव ।
तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ।।
अथर्व० ४।८।१ ।

६. घृतह्रदा मधुकूलाः सुरोदकाः क्षीरेण पूर्णा उदकेन दध्ना ।
एतास्त्वा धारा उपयन्तु सर्वाः स्वर्गे लोके मधुमत्-
पिन्वमाना उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः ।।
अथर्व० ४।३४।६ ।

७. इमां धियं शिक्षमाणस्य देवक्रतुं दक्षं वरुणं स शिशाधि ।
ययातिविश्वा दुरिता तरेम सुतर्माणमधिनावं रुहेम ।।
ऋ० ८।४२।३ । ( अग्रिमे पृष्ठे )

व्याधिनाशकराः सपत्ननाशकराश्च भवन्ति। तेभ्यो यज्ञेभ्यो मनसः शान्तिरुपजायते। तत एवाह—"स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेनर्षीणां यत्प्रजामिच्छते यत्पितृभ्यो निपृणाति तेन पितृणामथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत् पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाँस्या पिपीलिकाभ्यऽउपजीवन्ति तेन तेषां लोकं तर्पयति[1]।"

द्वितीयविधस्यात्यन्तिकदुःखनिवर्तनस्य परान्तकालायानन्दप्राप्तेरुपायो मोक्षो वर्ण्यते, यत्र त्रिविधदुःखानामात्यन्तिकनिवृत्तिर्जायते त एवात्यन्तपुरुषार्थः परमपुरुषार्थो मोक्षो वाऽभिधीयते[2]। सर्वासां वेदनानामभावो मोक्षे भवति। योगसाधनेन च मोक्षसिद्धिर्जायते[3]। चित्तवृत्तिनिरोधेन च योगसिद्धिः। तेन चाष्टविधसिद्धिरपि भवतीति तासां योगस्य ग्रन्थेषु प्रपञ्चो विहितः[4]। तस्य मोक्षस्य चान्योपाया अपि कीर्तिताः। तद्यथा—

सतामुपासनमसतां च परिवर्जनम्, सत्याचरणं[5] ब्रह्मचर्यमुपवासो विविधा नियमाः, धर्मशास्त्राणां धारणं, विज्ञानं, विजने रतिः, विषयेष्वरतिः, मोक्षे व्यवसायः, परा धृतिः, कर्मणामसमारम्भः, कृतानाञ्च परिक्षयः, नैष्कर्म्यमनहङ्कारः, संयोगे भयदर्शनं, मनोबुद्धिसमाधानमर्थतत्वपरीक्षणञ्च[6]।

अस्य कैवल्यस्य नैकानि साधनानि वेदेषूपदिष्टानि येषां व्याख्यानं पातञ्जले योगशास्त्रे समुपलभ्यते। यच्चित्तवृत्तिनिरोधेन योग[7]

---

दैवीं नावं स्वरित्रामनागसो अस्रवन्तीमा रुहेमा स्वस्तये।

अथर्व० ७।६।३।

१. शत० ब्रा० १४।४।२।२६।

२. सां० सू० १।१।

३. अथर्व० १९।८।२।

४. द्र० योगसूत्रम् तृतीयो विभूतिपादः।

आवेशश्चेतसो ज्ञानमर्थानां छन्दता क्रिया।

दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम्॥

चरके शारीरस्थाने १।१४०।

५. सा मा सत्योक्तिः परिपातु०। ऋ० १०।३७।२। ४।२२।६।

६. चरके शारीरस्थाने १।१४२–१४६।

७. योगसूत्रम् १।२।

उक्तस्तस्य निरोधसाधनानि पतञ्जलिमहर्षिणा प्रोक्तानि । तद्यथा—

अभ्यासवैराग्ये[1], ईश्वरप्रणिधानम्[2], प्राणायामः[3], विषयवती प्रवृत्तिः[4], विशोका वा ज्योतिष्मती प्रवृत्तिः[5], वीतरागविषयत्वं[6] स्वप्ननिद्राज्ञानालम्बनं[7] यथाभिमतध्यानं वा ।[8] ते च तत्रैव विस्तरेण व्याख्याताः । अत्र तु प्रसङ्गप्राप्तमीश्वरप्रणिधानमेव निरूप्यते ।

**( ख ) ईश्वरविषयः—**

परमात्मविषये जनानां विविधा धारणाः सन्ति । य आश्चर्यगुणकर्मस्वभावः परमेश्वरोऽस्ति तं केचित् क्वास्तीति ब्रुवन्ति, केचिदेनं भयङ्करं, केचिच्छान्तं, केचिदयं नास्तीति बहुधा वदन्ति, परन्तावत् सः सर्वस्याधारभूतः सन् सत्यं धर्मं जीवनोपायाँश्च वेदद्वारेणोपदिशति[9] । तस्यामर्त्यस्य जातप्रज्ञस्य बहूनि नामानि सन्ति[10] । सोऽखिलब्रह्माण्डस्याधिष्ठाता विराजते । सोऽजरोऽमरः सच्चिदानन्दस्वरूपो नित्यगुणकर्मस्वभावोऽजेयोऽहिंसनीयोऽक्षयो व्यथाहीनः हिंसारहितोऽस्ति । तस्य रायो नोपक्षीयन्ते[11] । यदेदृशो जगदीश्वरोऽस्माकं सखा

---

१. योगसूत्रम् १।१२ ।

२. योगसूत्रम् १।२३ ।

३. योगसूत्रम् १।३४ ।

४. योगसूत्रन् १।३५ ।

५. योगसूत्रम् १।३६ ।

६. योगसूत्रम् १।३७ ।

७. योगसूत्रम् १।३८ ।

८. योगसूत्रम् १।३९ ।

९. यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् ।
सो अर्यः पुष्टीर्विज इवामिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥
ऋ० २।१२।५ ।
को अद्धा वेद क इह प्रवोचद्देवाँ अच्छा० । ऋ० ३।५४।५ ।

१०. मर्ता अमर्त्यस्य ते भूरि नाम मनामहे ।
विप्रासो जातवेदसः । ऋ० ८।११।५ ।
इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥
ऋ० १।१६४।४६ ।

११. न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति ।
नास्य राय उपदस्यन्ति० । ऋ० ५।५४।७ ।

बन्धुः पिता चास्ति[1] तदा न कोऽपि हेतुर्भयस्य विषादस्य चिन्ताया वा। चिन्ता दुःखं वाऽनाथस्यासहायस्य भवति न तु सनाथस्य। स परमेश्वरः सुहृज्जगतो जनक उपासकानामतिशयेन सुखदाताऽस्ति। नहि तादृशो दिव्यः पार्थिवो वाऽन्यं कश्चिदस्ति[2]। न काचित् कृतिर्कर्त्रा विना कल्प्यते। यथा दक्षा विचक्षणाः पूर्णविद्यावन्तो शिल्पिन उत्तमानि वस्तूनि निर्मिमते तथैवेश्वरेण विचित्रमुत्तमं जगन्निर्मितं ध्रियते च[3]। स एवास्य सर्गस्याध्यक्षः परमे व्योम्नि विराजते[4]। महतः सुखस्य प्रसविता सर्वभूतानां निवासायानेकविधानां लोकानां निर्माता जङ्गमस्य स्थावरस्य चोभयविधस्य नियन्ता स एवास्माकमुपासनीयो विद्यते[5]। अग्निवाय्वप्सु, पृथिव्यां शरीरौषध्यादिषु, दृश्यादृश्यपदार्थेषु व्याप्तो विद्यते[6]। स एव सर्वविधं धनं रत्नं द्रविणञ्च प्रजायै प्रयच्छति[7]।

स सर्वेषां प्राणिनां संकल्पजान् मनोभावान् जानाति[8]। तस्यैवेमे हिमवन्तः पर्वताः समुद्रा दिशः प्रदिशश्च सन्ति[9]। स एव मनुष्याणां न्यायकारी राजा विद्यते[10]। स हृदयगुहायां विराजतेऽ[11]तो धारणा-

---

१. सखा पिता पितृतमः पितॄणाम्। ऋ० ४।१७।१७।

२. न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते।
ऋ० ७।३२।२३।

३. त्वष्टेव विश्वा भुवनानि विद्वान्त्समैरयं रोदसी धारयञ्च।
ऋ० ४।४२।३।

४. अस्याध्यक्षः परमे व्योमन्०। ऋ० १०।१२९।७।

५. बृहत्सुम्नः प्रसवीता निवेशनो जगतः स्थातुरुभयस्य यो वशी।
ऋ० ४।५३।६।

६. अपां गर्भं दर्शतमोषधीनाम्। ऋ० ३।१।१३।

७. यो भोजनं च दयसे च वर्धनम्०। ऋ० २।१३।६।
वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधत्॥
ऋ० ४।५४।१।

८. यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम्।
द्वौ सन्निषद्य यन्मन्त्रयेते राजा तद् वेद वरुणस्तृतीयः॥
अथर्व० ४।१६।२।

९. यस्य विश्वे हिमवन्तो महित्वा समुद्रे यस्य रसामिदाहुः।
इमाश्च प्रदिशो यस्य बाहू कस्मै०। अथर्व० ४।२।५।

१०. इन्द्रो राजा जगतश्चर्षणीनाम्। अथर्व० १९।५।१।

११. त्वामग्ने अङ्गिरसो गुहाहितमन्व०। ऋ० ५।११।६।

ध्यानसमाधिभिः साक्षात्करणीयः। तस्योपासनया सर्वाणि दुःखानि हीयन्तेऽविद्या परागच्छति मनश्चैकाग्रं जायते विषयेभ्यश्च प्रतिनिवर्तते[१]। समाहितचित्तस्यैवर्तम्भरा प्रज्ञा जायते। तया प्रज्ञया बलिमंगलजपहोमदानैर्विद्याज्ञानेन सत्त्वगुणवर्धनेन सद्वृत्तानुष्ठानेनाधयो निराकरणीयाः। कामक्रोधादिभिरेव पारस्परिका अभियोगाः क्लेशाश्च दृश्यन्ते। एतेषां वेगानां संधारणात् क्लेशा अपि प्रणश्यन्ति। लोभादेव सर्वदुःखानां प्रसवः। कृपण आत्मानं सुखयितारं न विन्दते[२] ततो वेदेषूपदिश्यते भूरिदाता भव, भूरिदेहि[३]। शतहस्तेन समाहर सहस्रहस्तैः संकिर[४]। दीयमानं धनं न क्षयमुपैति[५]। यथा वृक्षः परेभ्य ओषधयः फलानि च प्रयच्छति तद्वद् गवां तुरगानां वसनानाञ्च दाता भव[६]। यो दानी भवति स एव नृपतिपदं ग्रहीतुं प्रभवति[७]। न कश्चित् कस्मैचिद्ददाति परमेश्वर एव सर्वेभ्यो ददाति[८]। ततः सः परमेश्वर एव सर्वैरुपास्यः।

एतादृशे परमेश्वरे प्रमाणैः सुदृढं सिद्धेऽपि केचित्तं विहाय जडमुपास्ते। ते नूनमेवान्धकारमयं नरकं यान्ति[९]। तथा च ब्राह्मणे— "योऽन्यां देवतामुपास्ते न स वेद यथा पशुरेवꣳस देवानाम्"[१०] इति

---

१. यत् ते यमं वैवस्वतं मनो जगाम दूरकम्।
तत्त आ वर्तयामसीह क्षयाय जीवसे॥ ऋ० १०।५८।१।

२. उतापृणन् मर्डितारं न विन्दते॥ ऋ० १०।११७।१।

३. भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर।
भूरिघेदिन्द्र दित्ससि॥ ऋ० ४।३२।२०।
भूरिदा ह्यसि श्रुतः। ऋ० ४।३२।२१।

४. अथर्व० ३।२४।५।

५. उतो रयिः पृणतो नोपदस्यति। ऋ० १०।११७।१।

६. अश्वदा उत वा सन्ति गोदा ये वस्त्रदाः सुभगास्तेषु रायः।
ऋ० ५।४२।८।

७. तमेव मन्ये नृपतिं जनानां यः प्रथमतो दक्षिणामाविवाय०।
ऋ० १०।१०७।५।

८. क इदं कस्मा अदात् कामः कामायादात्।
कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविवेश॥
अथर्व० ३।२९।७।

९. अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते। यजु० ४०।१२।

१०. शत० ब्रा० १४।४।२।२२।

वचनेनान्योपासकस्य निन्दा विहिता । 'आत्मेत्येवोपासीत'[१] इति वचनेन च तस्योपासना विधीयते । स सर्वदेवाधिदेव एक एव विराजते[२] स एव च सर्वदेवेषु गरीयान् ।

**( ग ) ईश्वरोपासनम्—**

ईश्वरोपासका मनुष्याः सर्वज्ञे परमेश्वरे मनो युञ्जते बुद्धिं तस्मिन्नेव नियोजयन्ति । परमात्मानं ज्ञातुमभ्यसन्ति[३] । ईश्वरोपासना एव ब्रह्मयज्ञनाम्ना कीर्त्यते तद्यथा—ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादनन्तिक उदीच्यां प्रागुदीच्यां वोदित आदित्ये दक्षिणत उपवीयोपविश्य हस्तावनिज्य त्रिराचामेद् द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषीप्रभृतीन् हृदयपर्यन्तानवयवान् क्रमेण स्पृष्ट्वा दर्भासनमुपस्तीर्य पद्मासनेन स्थित्वा प्राङ्मुख आसीनः स्वाध्यायमधीयीत । दक्षिणोत्तरौ पाणी पादौ कृत्वा त्रीन् प्राणायामान् कुर्यात्[४] । आभ्यन्तरस्थं वायुं नासिकापुटाभ्यां बलेन निःस्सार्य यथाशक्तिर्बहिरेव स्तम्भयेत् पुनः शनैः शनैर्गृहीत्वा किञ्चित् तमवरुध्य पुनस्तथैव बहिर्निस्सारयेत् अवरोधयेच्च । 'एवं त्रिःकृत्वा मनसः स्थितिं सम्पादयेत्[५] । अथ व्याहृतीः सावित्रीश्चाधीयीत[६] । सा परमेश्वरोपासना यमनियमाचरणैः सह श्रद्धया दीर्घकालनैरन्तर्यसत्कारासेविता दृढभूमिर्भवति[७] । अथ चेन्द्रियनिग्रहकरी परमेश्वरप्राप्तिकरी च भवति । तस्माद्योगेनोपासनेन मनसः पापानि क्षपयितव्यानि[८] । अनेन शरीरेणैव योगः सम्पाद्यते

---

१. शत० ब्रा० १४।४।२।१८ ।

२. अथर्व० १३।४(२) । १५–२१ ।

३. युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।

ऋ० ५।८१।१ ।

उपह्वरे च गिरीणां सङ्गमे च नदीनाम् ।

धिया विप्रो अजायत ।। यजु० २६।१५ ।।

४. द्र० तै० आ० २।११ ।

५. द्र० दयानन्दः, ऋ० भा० भू० पृ० १७१ ।

६. द्र० तै० आ० २।११ ।

७. द्र० व्यासभाष्यम् योगसूत्रम् १।१४ ।

८. परोऽपेहि मनस्पाप किमशस्तानि शंससि ।

परेहि न त्वा कामये वृक्षान् वनानि संचर गृहेषु गोषु मे मनः ।।

अथर्व० ६।४५।१ । ( अग्रिमे पृष्ठे )

तस्मादाह यजुषि—अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते"[1]। परमेश्वरप्राप्तेर्दुःखनिवारणस्य च सर्वसुगमोपाय ईश्वरप्रणिधानम्। तत्र ओमित्येतदक्षरस्य जपस्तदर्थभावनञ्च[2]। तस्य परमेश्वरस्य वाचकः सः प्रणव एव[3]। तथा च श्रूयते—

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्[4]॥

अन्यत्र चोपनिषत्सु प्रणवमहिमा गीयते[5]। उपासनेनैव नर इहलोकेऽभयत्वं सर्वभूतमैत्रीं चाधिगच्छति। स परमेश्वरस्तं सर्वतोऽभयं करोति[6]। उपासनोपकरणञ्चोङ्कार एव। तदेतदक्षरं ब्राह्मणो यं

---

अपेहि मनसस्पतेऽपक्राम परश्चर।
परो निर्ऋत्या आचक्ष्व बहुधा जीवतो मनः॥ ऋ० १०।१६४।१।
अम्भो अमो महः सह इति त्वोपास्महे वयम्।
अथर्व० १३।४(५)।५०।
द्र० ऋ० १।८९।५।

१. यजु० ४०।१४।

२. तज्जपस्तदर्थभावनम्। योगसूत्रम् १।२८।

३. तस्य वाचकः प्रणवः। योगसूत्रम् १।२७।

४. कठोपनिषत् १।२।१५।

५. ओमिति ब्रह्म। ओमितीदँ सर्वम्। ओमित्येतदनुकृतिर्ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति। ओमिति। सामानि गायन्ति। ओंशोमिति शस्त्राणि। ओमिति ब्राह्मणः प्रवक्ष्यन् ब्रह्मैवाप्नोति। तस्यैतस्याक्षरस्यैवायं सर्वमुपव्याख्यानं भूतं भवद्भविष्यदिति यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव।
माण्डूक्योपनिषत् १। तैत्तिरीयोपनिषदि शिक्षावल्ली ८।१।

६. मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः।
ऋ० २।२३।१६।
यत इन्द्र भयामहे ततो नो अभयं कृधि। अथर्व० १९।१५।१।
ऋ० ८।६१।१३।

अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे।
अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु॥
अभयं मित्रादभयममित्रादभयं ज्ञातादभयं परोक्षात्।
अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु॥
अथर्व० १९।१५।५–६। (अग्रिम पृष्ठे)

काममिच्छेत् त्रिरात्रोपोषितः प्राङ्मुखो वाग्यतो बर्हिष्युपविश्य सहस्र-कृत्वाऽऽवर्तयेत् सिद्ध्यन्त्यस्यार्थाः सर्वकर्माणि च[1]। तथा चापि—अध्यात्ममात्मभैषज्यमात्मकैवल्यमोङ्कार आत्मानं निरुध्य सङ्गममात्रीं भूतार्थचिन्तां चिन्तयेदतिक्रम्य वेदेभ्यः सर्वपरमध्यात्मफलं प्राप्नोति[2]। भवति चात्र—

आध्यात्मिके मानसदैहिकस्य दुःखस्य सिन्धोस्तरणं यथास्यात्।
यज्ञेश्वरोपासनयोगविद्या सम्यक् प्रदिष्टा प्रणवेन सिद्धिः॥

---

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत्।
जेता शत्रून् विचर्षणिः॥ अथर्व० २०।५७।१०।
सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते। ऋ० १।११।२।

१. गो० ब्रा० पूर्वगोपथ १।२२।
२. गो० ब्रा० पूर्वगोपथ १।३०।

# ९. उपसंहृतिः

उपर्युक्तविवेचनेनैतत् सुविदितमेव यन्निगमेषु जीवनोपयोगिविषया विस्तरेण प्रतिपाद्यन्ते । संक्षेपतोऽस्याध्ययनस्योपलब्धीनां संग्रहोऽधोप्रकारेण कर्तुं शक्यते ।

## १. वेदानामाविर्भावादयः

स्वरभेदाद् द्विविधो वेदशब्दो लोके प्रचरति । एको दर्भमुष्टिवाचकः संहितावाचकश्चापरः । स संहितावाची वेदशब्दः ज्ञानार्थे मुख्यत्वेन प्रयुज्यते । अत्र तु ज्ञानराशिरूपो ग्रन्थो वेदनाम्नाऽभिप्रेतः[1] । ते वेदाः शाखाभेदात् विभिद्यमाना दर्शिताः । तत्र चत्वार ऋग्यजुःसामाथर्वाख्या वेदाः पद्यगद्यगानरचनाभेदात् ज्ञानकर्मोपासनाविषयभेदाद्वा त्रयीपदेनाप्युच्यन्ते[2] । तेषां वेदानामाविर्भावविषये पाश्चात्यविदुषां मोक्षमूलर विलसनप्रभृतीनामन्येषाञ्च मतान्युपन्यस्य तेषां विवेचनं कृतम् । तत्र च केचित् भूगर्भशास्त्रप्रमाणैर्वेदाविर्भावकालं साधयन्ति । अपरे च वेदमन्त्रैरेव वेदाविर्भावकालं प्रतिपादयन्ति । भारतस्य चिरन्तना अपि मनीषिणस्तु वेदं नित्यं मन्यन्ते । तथैव दयानन्दोऽपि वेदभाष्यभूमिकासदृशेषु ग्रन्थेष्वेतदेव प्रतिपादितवान् यद्वेदास्तस्मात् परमात्मनः प्रसूतत्वादनादयो नित्याश्च सन्ति प्रत्येककल्पादावृषिहृदयेषु व्यज्यन्ते प्रलयकाले च तस्मिन्नेव विलीना जायन्ते[3] ।

अत्र च वेदस्यापौरुषेयत्वे विविधानामाचार्याणां मतान्युपक्षिप्य तेषां मतानामौचित्यानौचित्ययोश्च विवेकः कृतः[4] । यतो वेदा अपौरुषेयास्तत एवेतिहासविरहिता अपि । बृहद्देवतासदृशेषु ग्रन्थेषु वर्णितमितिहासमवेक्ष्य वेदेष्वितिहासप्रतिपादनं न समुचितम् । आख्यानप्रिया

---

१. १।१ ।

२. १।२ ।

३. १।३ ।

यस्मात् कोशादुदभराम वेदं तस्मिन्नन्तरव दध्म एनम् ।

अथर्व० १९।७२।१ ।

४. १।४ ।

हि देवा इति दिशाऽऽख्यानरूपेण प्रतिभासमानानां मन्त्राणां सत्योऽर्थ एव ग्राह्य इति साधितः । यथा यथा सुधियो वेदमन्त्राणामर्थान् गाम्भीर्येणाधीयन्ते तथा तथा तेषु तेषु मन्त्रेषु नवोदितज्ञानस्यानुभूतिर्दृश्यते । एवमाख्यानेषु निगूढमर्थतत्त्वमपि साधारणजनेभ्यः सुकरं ग्राह्यं भवति । अत्र च केषाञ्चन आख्यानवदवभासमानानां मन्त्राणां वास्तविकोऽर्थोऽपि दर्शितः[1] ।

## २. अर्थोत्पत्युपकरणानि—

वेदेष्वर्थप्रतिपादका अनेके शब्दा दृश्यन्ते । तथ्यमेतत् योऽप्याभ्युदयिकः पारलौकिको वा विषयो द्रष्टुमिष्यते तदेव श्रुतौ दृश्यते । अत्र विशेषतस्त्वर्थस्वरूपं सन्दर्श्यार्थोत्पत्युपकरणानि निदर्शितानि । चतुर्भ्यो ब्राह्मणक्षत्रियविट्शूद्रेभ्यः पृथक् पृथग् धनार्जनोपकरणानि सन्ति । तद्यथा ब्राह्मणानामध्ययनमध्यापनं यजनं याजनं दानमेव मुख्यमाजीविकासाधनं, क्षत्रियाणां राष्ट्रस्य रक्षणम्, वैश्यानां कृषिगोरक्ष्यवाणिज्यशिल्पादीनि ह्यर्थार्जनोपकरणानि, शूद्रेभ्यश्चापरवर्णानां सेवा एव भृतिः । ब्राह्मणा बुद्धिबलेन क्षत्रिया भुजबलेन वैश्या वाणिज्यशिल्पकलाकौशलेन शूद्राश्च देहबलेनाजीविकां साधयन्ति । प्रधानतोऽर्थस्तु वैश्यस्येव प्रमुखविषयः[2] ।

## ३. आम्नायेष्वारोग्यविषयः—

ऐहिकस्यामुष्मिकस्य च सर्वविधसुखस्य साधनभूतमारोग्यमुपपादितम् । आरोग्यवता देहेनैव पुरुषार्थचतुष्टयं साध्यते । तस्यारोग्यस्याधिष्ठानं शरीरम् । तत् शरीरविज्ञानं विस्तरेण वेददिशा प्रदर्शितम्[3] । तदस्य शरीरस्य व्याधयः स्वाभाविकधर्मत्वेन प्रस्तुताः । व्याधयश्च त्रिदोषप्रकोपेण विषेण कृमिभिश्चोत्पाद्यन्ते । त एते त्रिदोषाः शरीरस्य सप्तधातून् दूषयित्वा व्याधीन् जनयन्ति । विषं देहे व्याप्य मूर्च्छादीनां निमित्तं जायते । कृमयश्च निजदेहसम्पर्चनेन विषोत्पादनेन विसृष्टमलमूत्रसंसर्गेण चाऽऽमयानुत्पादयन्तीति व्यासेन प्रदर्शितम् । अत्र च कृमीणां नामानि गुणभेदेनाकृतिभेदेन चापि वर्णितानि[4] ।

---

१. १।५ ।

२. २।१। क-ग ।

३. ३।१ ।

४. ३।२। क-ग ।

बहूनां व्याधीनां नामानि वेदेभ्यः प्रदर्शितानि । ते चौषधि-शल्योद्धरणादिभिरुपायैश्चिकित्स्यन्ते यद्यपि रोगनिवारकास्तु बहव उपायास्तथापि केषाञ्चन गदानां दिनकरसुधांशुरश्मिभिश्चिकित्सा, केषाञ्चन चौषधीभिः प्रतिपादिता । सर्वास्वोषधीषु जलं श्रेष्ठत्वे-नाम्नातम् । ओषधयोऽपि चतुर्विधाः, विविधगुणवत्यो विविधरोग-नाशयित्र्यश्च । ता ओषधिविशेषविद्भिः, वन्यपशुपक्षिभिर्गोपालतापसादिभिश्चारण्ये गत्वाऽनुसन्धेयाः प्रयोक्तव्याश्च । यथा व्याधिनाशिन्य ओषधय उपपादितास्तथैवेर्ष्याद्वेषबुभुक्षापिपासादिस्वाभाविकरोग-शमका अप्योषधयो वर्णिताः । एवं सर्वभूतानामारोग्यं प्रतिपाद्य धर्मेण नियमाचरणेन च जनपदोध्वंसकरा भावा अपि समूलं नाशनी-यत्वेन प्रतिपादिताः[1] ।

## ४. शिक्षणविधिप्रभृतयः—

अस्मिन्नधिकरणे शिक्षास्वरूपं निरूप्य शिक्षया स्ववाक् शिक्षणीया, येन सा संस्कृता जायेतेति प्रदर्शितम् । तत्र चैतदपि साधितं यत्सर्वेभ्यो विद्याध्ययनमपरिहार्य एव । यतोऽविद्या दुःखमूला विद्या च सुखमूला भवति । एवं विद्यास्वरूपे का विद्या का चाविद्येति विविच्याऽक्षरज्ञान-मेव विद्याप्राप्त्युपकरणमिति प्रदर्शितम्[2] ।

तत्र प्रत्येकस्य वर्णस्य स्वकोयोऽर्थ इति धातुभ्यः सुष्ठूपपादितम् । एवमक्षरविज्ञानं निरूप्य शिक्षाविधौ शिक्षाप्रणाल्यपि विवेचिता । तत्र के विद्याऽधिकारिणः ? कीदृशाः सद्गुरवो भाव्याः, विद्या चाश्रमेषु कथं गृहीतव्या ? कियान् कालोऽध्ययनस्येति सुष्ठूपपादितम् । अत्र चाऽऽचार्यः पूर्वरूपमन्तेवास्युत्तररूपम् विद्यासन्धिः प्रवचनं सन्धान-मित्यधिविद्यं व्याख्यातम् । विद्याध्ययनकाले न केवलं ग्रन्थपाठ एव करणीय अपित्वात्मसंयमोऽनुशासनञ्चाप्यभ्यसनीये । न केवलं शिक्षा-समाप्त्यवसर एव परीक्षा करणीयाऽपितु प्रत्यहमधीतविषयाणां परीक्षणं विधातव्यं विद्याञ्च समाप्य गुरवो दक्षिणादिभिरर्चनीया इत्यपि विशदं चर्चितम् ।

अध्याप्यमानविषयेषु न केवला व्यवहारविद्यैवाध्ययनीयाऽपितु सद्वृतेन सदाचारेणाऽपि स्वात्मा परिष्कर्तव्यः । यदेव सदाचरणं

---

१. ३।३-४ ।

२. ४।१। क-ग ।

सत्यासत्यविवेचनं तदेव विद्यायाः फलत्वेन निर्दिष्टम्[१]।

## ५. वेदेषु विज्ञानानि

अत्र वेदमन्त्राधारेण कानिचिद् विज्ञानानि निदर्शितानि। तत्र जीवविज्ञाने जीवस्य स्वरूपं निरूप्य तस्यानेकयोनिषु भ्रमणहेतुर्निदर्शितम्। प्रकृतिविज्ञाने सृष्टयुपसरणसाधनत्वेनेयं प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी चेति निर्दिष्टा। परमेश्वरविज्ञाने तस्य प्रकृतेर्नियामकत्वं सृष्टिरचयितृत्वं जीवेभ्यः कर्मफलप्रदातृत्वं व्याख्यातम्[२]। सृष्टिविज्ञाने सृष्टिरचनाविषये प्रश्नानुत्थाप्य साधितं यत् प्रलयकाल इदं जगत् तुच्छयेनावृतमासीत्। प्रजापतिसंकल्पेनेयं सृष्टिर्जाता। तत्र कल्पादावापोमयं जगदिदमासीत्। तेभ्य एवाद्भ्यः पृथ्वी जातास्ततोऽन्ये लोकाः। तदा ग्राम्यारण्यपशूनां वयसाञ्चोत्पत्तिर्निदर्शिता। एवं क्रमेण त्रिविष्टपे पृथिव्या उत्तमे शिखरे मनुष्या उद्भिद्‌रूपेण जाताः। अत्र केषाञ्चिदाचार्याणां मतान्युपन्यस्य यथायथं समीक्षितानि[३]।

लोकानां परिक्रमणधारणाकर्षणविज्ञानविषय एतद् वर्णितं यदिमे ग्रहाः सूर्याकर्षणेनैव निरालम्बनेऽन्तरिक्षे स्थिताः सन्ति। एते सर्वे स्वकीयमक्षं परिधिं च प्रति भ्रमन्ति। सूर्य एवैकाकी स्वाक्षे भ्रमति न कमपि ग्रहमभिलक्ष्य। तस्य सूर्यस्यापि वात एव बलं भवति। तेन साहाय्येनैव स आकर्षणगुणं बिभर्ति[४]।

अग्निविज्ञाने साधितं यदस्मिन् लोके त्रिधा भूत्वाग्निर्विराजते। स एव सर्वेभ्यो जीवनं प्रयच्छति। शरीरस्थः सन्नूष्माणं जनयति। लोके स्थितो वनस्पतीन् जनयति व्यवहारकार्याणि च साधयति। विद्युद्‌रूपेण मेघं वर्षयति विद्युत्कार्याणि च करोति। स सर्वकार्येष्वग्रणी भूत्वा विराजते ततोऽग्निनाम्ना कीर्त्यते[५]।

वायुविज्ञाने द्विविधो वायुर्निरूपितः। अन्तरिक्षसञ्चारी चक्षुर्भ्यामलक्ष्यः स्पर्शनेन्द्रियेण च लक्षित एकः। शरीरस्थः प्राणापानाख्यः

---

१. ४।१।ग-, ४।१।२-३।
२. ५।१-३।
३. ५।४।
४. ५।५।
५. ५।६।

शतनाडीषु सञ्चरन्नपरः। तस्यैतादृशस्योत्पत्तिनिमित्तमन्तरिक्षं माता विद्यते। वायुरेवाग्नेर्दीपयिता वनस्पतीनां प्रवर्धयिता जीवानां प्राणयिता च। एतेनैव वचनं श्रवणं पुष्टिर्लोकधारणञ्च जायत इत्यादिकं विशदं व्याख्यातम्[1]।

शब्दविज्ञाने शब्दा एव भाषाया मूलत्वेन प्रतिपादिताः। तैरेव ज्ञानविज्ञानयोः प्रकाशो भावानां चाभिव्यक्तिर्जायत इति निर्दिष्टम्[2]।

दूरसञ्चारादिविज्ञाने दृढमुपादितं यदाम्नायेष्वेतादृशानां पदार्थानां संकेत उपलभ्यते। ये दिवि मरुतः सन्ति ते वैज्ञानिकैः प्रतिपादितानां तरङ्गाणां समानरूपाः। तरङ्गाः सप्तविधाः, मरुतोऽपि सप्तविधाः। ते बह्वोऽसंख्यातास्तथैव मरुतोऽपि। ते मरुतस्तरङ्गा एव तरङ्गार्थेष्वाचार्यप्रोक्तत्वात् सदृशगुणत्वाच्च। तेषु मरुत्स्वारुह्य शब्दा रूपाण्यस्त्राणि विमानानि मनुष्याश्च गन्तुं प्रभवन्ति। यत एते मनुष्यसदृशं कर्म कुर्वन्ति ततो मर्त्य इवालङ्काररूपेण वर्ण्यन्ते। त एतैश्वर्यबलपराक्रमजवगुणवन्तः सन्तो ध्वनिं वहन्ति रूपं चित्रयन्ति वृष्टिं जनयन्ति संग्रामे च सहायका जायन्ते[3]।

सूर्यविज्ञाने सूर्यस्य स्वरूपं निरूप्य तस्य लोकहितकराणि कार्याणि वर्णितानि। स सविता स्वयं कृष्णवर्णः सन् वायुसंघर्षणाद्दीप्यते लोकाञ्च विद्योतयतीत्यपि साधितम्। स लोकान् धारयति, पदार्थजनकत्वात् प्रजाभ्यो द्रविणं प्रयच्छति पुष्टिं जनयति प्राणिनश्च स्वस्वकार्ये प्रचोदयति कालञ्च विभजति। दिनमासवर्षयुगकल्पान् कल्पयतीत्यपि सर्वं प्रदर्शितम्[4]।

गणितविज्ञाने वेदमन्त्रेष्वङ्कगणितस्य रेखागणितस्य च मूलं निदर्शितम्। यानविज्ञाने स्थलजलनभश्चराणि यानानि प्रतिपादितानि। तेषां विस्तरेण वर्णनं निगमेषु दृश्यते[5]।

## ६. वर्णाश्रमादयः—

लोके समाजव्यवस्था वर्णैराश्रमैश्चैव निर्मीयत इति प्रदर्शितम्। एते सुचारुरूपेण व्यवस्थिता समाजं सुखीकुर्वन्ति विकारमापद्यमाना

१. ५।७।
२. ५:८।
३. ५।९।
४. ५।१०।
५. ५।११-१२।

अपभ्रंशयन्ति । अतोऽत्र वर्णनिर्वचनं कृत्वा वर्णानां कथमुत्पत्तिर्जाता ? त एते जन्मना गुणकर्मणा वेति विवेचनपूर्वकं साधितं यदिमे वर्णा गुणकर्मणैव भवन्ति न जन्मनेति । तत्र च वर्णजात्योः पार्थक्यस्यापि विवेचनं कृतम्[1] ।

चत्वार आश्रमाः कर्तव्यभेदेनायुर्भेदेन कर्मभेदेन च प्रतिपादिताः । तत्र ब्रह्मचर्ये विद्याध्ययनं गृहस्थे प्रजापालनं वानप्रस्थे परमेश्वरप्राप्तिः संन्यासे च सर्वेभ्य उपदेशेन परोपकरणं कर्तव्यत्वेन प्रस्तुतम्[2] । तेष्वाश्रमेषु गृहाश्रमो ज्येष्ठत्वेनाम्नातः । तस्यैवाधीनाः सर्वे प्राणिनो भवन्ति तेनैव च वंशप्रवृत्तिः । तत्र गृहस्थाश्रमं जिगमिषुः केन विधिना परिणयं कुर्यात् ? कयोश्च द्वयोर्मिथो विवाहः शास्त्रविगर्हितो प्रशस्यो वेत्युक्त्वा स विवाहोऽविच्छेद्यो भवत्यामरणं च सकृदेव जायते । तथापि मृतभर्तृकाया वा विवाह आपद्धर्मे शास्त्रोचितः प्रतीयते मन्त्रेषूपदिष्टत्वादिति प्रतिपादितः ।

तत्र च विवाहस्य फलमपत्यं भवतीत्युक्तम् । यः स्वकीयायां धर्मजायायां धर्मेण जन्यते तदेवापत्यत्वं वहति । अपत्यप्राप्त्यर्थञ्च गर्भाधानविद्याऽपि निर्दिष्टा । वशीकरणवाजीकरणे च तत्रोपकरणरूपेणोल्लिखिते । ते च भेषजैरप्युपपाद्येत इत्यपि निदर्शितम् । तथैव कुत्रचिदभीष्टापत्यकरा भावा अपि वर्णिताः ।

तत्र कियन्तः पुत्रा जननीया इति विषय आचार्याणां मतानि प्रस्तूय बहुप्रजो निर्ऋतिसदृशं दुःखं वहतीति पक्षः प्रदर्शितः । उत्तरवर्तिषु ग्रन्थेषु च गर्भप्रतिषेधोपाया दृश्यन्ते तथापि सुप्रजत्वं सौभाग्यरूपेणाम्नायत इति निदर्शितम् । अपत्यविरहितस्य विधीयमाना गर्हाऽपि प्रदर्शिता । विवाहसंस्कारमनुतिष्ठन् वरो वधूं बहुपुत्रानाकाङ्क्षते, तेन पुत्रेणैव पिताऽनृणी भवति । प्रजयाऽन्नेन पशुभिश्चैव गृहं शोभते ततः साधितमिदं यावन्तोऽपत्यान् पालयितुं पोषयितुं शिक्षयितुञ्च प्रभवेत्तावदेव जनयेत् ।

विवाहेनैव कुटुम्बं निर्मीयते । तस्मिन् कुटुम्बे सदस्यानां परस्परं स्नेहाचरणेन सुखं जायतेऽन्यथा क्लेशः । ते च गृहसदस्याः कथं परस्परं वर्तेयुरिति बहुत्र प्रतिपादितम् । स्वार्थत्यागेनैव सर्वेषां सुखं संजायते । कुटुम्बे मातरि पितरि च परलोकं गते पुत्राः पितृरिक्थं समं विभजन्ते ।

---

१. ६।१। क-ङ ।

२. ६।२। क-घ ।

ते च पुत्रा दुहितरश्च समरूपेण दायादार्हा इति सर्वं साधितम्। अभ्रातृकायाः कन्यायाः पुत्रो दायादो भवति न कश्चिद् दत्तकपुत्रकः क्रीतको वा। अथ च गृहस्थाश्रमसन्दर्भे शालानिर्माणविधिरपि निरूपितः[1]।

## ७. वैदिकशासनप्रणाली—

विविधशासनप्रणालीनिरूपणानन्तरं वेदाः जनतन्त्रस्यादेशं कुर्वन्तीति सम्यक् साधितम्। तस्य स्वरूपञ्च विशदं प्रतिपादितम्। तत्र तिस्रः सभा राजसभा धर्मसभा विद्यासभा च भवितव्याः। दशसदस्यवती परिषत्, समितिः सेना च परस्परं सहयोगेन राजकार्याणि सम्पादयन्तु। राजा राजसभ्याः सभाः प्रजा च संयुज्य राष्ट्रं पालयन्तु। सर्व एतेऽन्योन्यस्य पूरकाः पोषकाः रक्षकाश्च भवेयुः। प्रजासु विद्वज्जना राजानमभिषिञ्चेयुश्चैतत् सर्वमुपपन्नम्। तस्य राज्यस्य च राजप्रभृतीनि सप्ताङ्गानि व्याख्यातानि। एतैः प्रकृतिस्थै राज्यं धार्यते विकृतैश्च विनाश्यत इति दृढमुपसाधितम्[2]।

राज्ञः प्रधानकर्म प्रजारक्षणमेव, तच्च व्यवहारदर्शनेन विना न सम्भवति। व्यवहारदर्शनं न्यायोऽपराधिभ्यश्चोचितदण्डप्रदानम्। दण्डेनैव शासनं प्रवर्तते प्रजा च रक्ष्यते। तद्दण्डव्यवस्था विस्तरेण निगममधिकृत्य प्रतिपादिता। एतदपि च निरूपितं यद्दस्यवः सदाचारेण शिक्षणीया उचितदण्डप्रदानेन च दण्डनीयाः। नामभेदेन गुणभेदेन च विविधा दस्यवः कीर्त्यन्ते। तेभ्यो विविधप्रकारेणैव दण्डविधानमुपवर्णितम्[3]।

## ८. आधिप्रशमनम्—

मानसिकदुःखान्याधिपदेन प्रोक्तानि। तानि च मनसो रजस्तमोभ्यामावृतत्वात् कामक्रोधादिमानसदोषाच्चोत्पद्यन्त इति प्रदर्शितम्। अविद्ययैव सर्वाणि दुःखानि जायन्त इत्यपि साधितम्। तदाधीनां प्रशमनोपायत्वेन यज्ञानुष्ठानं परमेश्वरोपासनञ्च वर्णितम्।

एवं संक्षेपेण वेदेषु प्रतिपादिता व्यावहारिका अर्था अत्र निदर्शिताः[4]।

---

१. ६।३-६।

२. ७।१।

३. ७।२।

४. ८।१-२।

# १०. परिशिष्टम्

## १. सहायकग्रन्थानुक्रमणी


ऋग्वेदिक इण्डिया, अविनाशचन्द्रदासः। कलकत्ता, १९२२ ई०

ऋग्वेदिक पारिवारिक जीवन, डा० शिवराज शास्त्री। लीला कमल प्रकाशन, मेरठ, १९६२ ई०

ऋग्वेदीय सर्वानुक्रमणी, कात्यायन मुनिः। ऑक्सफोर्ड विश्वविद्यालय, लण्डन, १९८६ ई०

ऐतरेयब्राह्मणम्। निर्णयसागर मुद्रणालयः, मुम्बई, १९२५ ई०

ऐतरेयब्राह्मणभाष्यम्, सायणः। निर्णयसागरमुद्रणालयः, मुम्बई, १९२५ ई०

ऐतरेयारण्यकभाष्यम्, सायणः। आनन्दाश्रम, पूना, १९५९ ई०

ओरियन, बालगङ्गाधरतिलकः।

कठोपनिषत्। विद्याप्रकाशमुद्रणालयः, लाहौर १९८७ ई०

कविकल्पद्रुमः।

काठकसंहिता, दामोदरसातवलेकरः ( सम्पादकः )। स्वाध्यायमंडल पारडी, औंध, १९९९ वि०

कातीयश्रौतसूत्रम्, डा० अलबर्तवेवरः (संशोधकः)। चौखम्भा संस्कृत सीरीज आफिस, वाराणसी, २०२९ वि०

कात्यायनश्रौतसूत्रभूमिका, विद्याधरगोडः। अच्युतग्रन्थमाला, काशी।

कादम्बरी, बाणभट्टः। वेङ्कटेश्वर प्रेस, बम्बई, १९०४ ई०

कामसूत्रम्, वात्स्यायनः। चौखम्भा संस्कृत संस्थान, वाराणसी, १९८६ वि०

काव्यादर्शः, दण्डी। चौखम्बा विद्याभवन, वाराणसी, १९५८ ई०

गीता, लोकमान्यतिलकः ( सम्पादकः )। गायकवाड, पूना, १९६९ ई०

गोतमधर्मसूत्रम्, श्रीनिवासाचार्य (सम्पादकः)। महाराजा, मैसूर, १९१७ ई०

गोपथब्राह्मणम्, राजेन्द्रलालमित्रः। एशियाटिक सोसायटी, कलकत्ता, १८७२ ई०

गोभिलगृह्यसूत्रम्। शास्त्रप्रकाशकार्यालय, मथुरा, मुजफ्फरपुर, १९६३ वि०

चरकसंहिता, सं० यादवशर्मा। निर्णयसागर, मुम्बई, १९८९ वि०

चातुर्वर्ण्यसमीक्षा, महेश्वरानन्दगिरिः। सुरतगिरिबंगला, कनखल, १९६३ ई०

छान्दोग्योपनिषत्। विद्याप्रकाश प्रेस, लाहौर, १९८७ वि०

जाबालोपनिषत्, सं० वासुदेव शर्मा। निर्णयसागर, मुम्बई, १९२५ ई०

जैमिनीयब्राह्मणम्, सं० रघुवीरलोकेशचन्द्रः। सरस्वतीविहार नागपुर, २०११ वि०
ताण्ड्यब्राह्मणम्, महादेव शास्त्री (सम्पादकः)। महाराजा, मैसूर, १९१३ ई०
तैत्तिरीयसंहिताभाष्यम्, भट्टभास्करः। वैदिक संशोधनमण्डल, पूना १९७० ई०
तैत्तिरीयारण्यकम्। आनन्दाश्रम, पूना, १९६७ ई०
तैत्तिरीयोपनिषत्। विद्याप्रकाश प्रेस, लाहौर, १९८७ ई०
त्वष्टा सरण्यू के आख्यान का वास्तविक स्वरूप, धर्मदेवो निरुक्ताचार्यः। रामलाल कपूर ट्रस्ट—अमृतसर
धर्मशास्त्र का इतिहास, पी० वी० काणे। उत्तरप्रदेश शासन, लखनऊ, १९७३ ई०
नाडीतत्वदर्शनम्, सत्यदेवोवासिष्ठः। देवसदनम् भिवानी, २०२४ वि०
नारायणोपनिषत्, सं० वासुदेव शर्मा। निर्णयसागर प्रेस, मुम्बई, १९३५ ई०
निघण्टुः, यास्काचार्यः। वैदिकपुस्तकालय: अजमेर, २०१८ वि०
निघण्टुभाष्यम्, दुर्गाचार्यः। सरस्वतीयन्त्र, कलिकाता, १९९१ ई०
निरुक्तभाष्यम्, स्कन्दमहेश्वरौ। पञ्चनदीयविश्वविद्यालयः, लाहौर, १९३१ ई०
निरुक्तभाष्यम्, ब्रह्ममुनिः। गुरुकुल काङ्गड़ी, हरिद्वार, १९६६ ई०
निरुक्तसमुच्चयः, वररुचिः। भारतीय प्राच्य प्रतिष्ठान, अजमेर, २०२२ वि०
पारस्करगृह्यसूत्रम्। निर्णयसागर, मुम्बई, १९५० ई०
पारिवारिक समस्याओं का वर्गीकरण
पाणिनीयधातुपाठः। वैदिक यन्त्रालय अजमेर, २०१४ वि०
पाणिनीय शिक्षा, दयानन्दः (भाष्यकारः) वैदिक यन्त्रालय अजमेर, २००७ वि०
पुरुष सूक्त का विवेचनात्मक अध्ययन, कुसुमलता। राजस्थान विश्व० की पी-एच० डी० हेतु प्रस्तुत १९७५ ई०
प्रतिज्ञासूत्रम्, कात्यायनः। निर्णयसागर, मुम्बई, १९५० ई०
प्राचीन संस्कृत साहित्य, मैक्समूलरः अनुवा० लाजपतरायः। मोतीलाल बनारसीदास, दिल्ली, १९६६ ई०
बृहदारण्यकोपनिषत्। विद्याप्रकाश प्रेस, लाहौर, १९८७ वि०
बृहद्देवता, शौनकाचार्यः। चौखम्भा संस्कृत संस्थान, वाराणसी, १९६५ ई०
बोधायनधर्मसूत्रम्। चौखम्भा संस्कृत संस्थान, वाराणसी, १९७२ ई०

ब्रह्मपुराणम् ।

ब्राह्मस्फुटसिद्धान्तः ।

भविष्यपुराणम् ।

भारतभैषज्यरत्नाकरः, नगीनदास छगनलाल । ऊँझा फार्मेसी, अहमदाबाद, १९४२ ई०

भावप्रकाशनिघण्टुः, सं० विश्वनाथ द्विवेदी मोतीलाल बनारसीदास, वाराणसी, १९४९ ई०

भाषाविज्ञान, मङ्गलदेवः । इण्डियनप्रैस, इलाहाबाद, १९६२ ई०

मनुस्मृतिः, सं० वासुदेवः । ठाकुरदास एण्ड सन्स, वाराणसी, १९६८ ई०

मन्त्रों के ऋषि, ब्रह्ममुनिः । वानप्रस्थ आश्रम, ज्वालापुर, १९७४ ई०

महाभारतम्, कृष्णद्वैपायनव्यासः । गीता प्रेस, गोरखपुर, २०१३ वि०

महाभाष्यम्, पतञ्जलिः । निर्णयसागर, मुम्बई, १९१२ ई०

महाभाष्य व्याख्या । न्यास ट्रस्ट, दिल्ली, २०३१ वि०

मानसोल्लास ।

मानवार्षभाष्यम्, हेमचन्द्रः ।

मीमांसासूत्रम्, जैमिनिः । संस्कृति संस्थान, बरेली १९६९ ई०

मुण्डकोपनिषत् । विद्याप्रकाश प्रेस, लाहौर, १९८७ वि०

मैत्रायणीसंहिता, ल्योपोल्डवोन श्रोडरः । लिपजिग, जर्मनी, १९२३ ई०

यजुर्वेदः, सं० सातवलेकरः । स्वाध्याय मण्डल पारडी, औंध, २००३ वि०

यजुर्वेदभाष्यम्, दयानन्दः । वैदिकपुस्तकालय, अजमेर, २०१५ वि०

यजुर्वेदभाष्यम्, उवटः । निर्णयसागर, मुम्बई, १९१२ ई०

यजुर्वेदभाष्यम्, महीधरः । निर्णयसागर, मुम्बई, १९१२ ई०

याज्ञवल्क्यशिक्षा, सं० अमरनाथः । पशुपतीश्वर, काशी, २०१९ वि०

याज्ञवल्क्यस्मृतिः । ५ क्लाइव रो, कलकत्ता, २००९ वि०

याज्ञवल्क्यमिताक्षराटीका । चौखम्भा संस्कृत संस्थान, वाराणसी, २०२४ वि०

योगदर्शनम्, पतञ्जलिः । गीताप्रेस, गोरखपुर, २०९३ वि०

योगदर्शनभाष्यम्, व्यासः । महीधरपुरा, गुजरात, १९५८ ई०

राजनीतिप्रकाशः ।

रोगपरीक्षापद्धति, आशानन्दपञ्चरत्नः । विराट् फार्मेसी, लाहौर, १९३९ ई०

लघु आश्वलायन स्मृतिः । क्लाइव रो, कलकत्ता, २००९ वि०

वज्रसूच्युपनिषत्, सं० वासुदेवः । निर्णयसागरयन्त्रम्, मुम्बई, १९२५ ई०

वसिष्ठधर्मशास्त्रम् । बी० ओ० आर० आई० इंस्टीचूट, पूना, १९३० ई०

वसिष्ठस्मृतिः : क्लाइव रो, कलिकाता, २००६ वि०
वाचस्पत्यम्, तारानाथभट्टाचार्यः । चौखम्भा संस्कृत संस्थान, वाराणसी, २०१८ वि०
वाराहगृह्यसूत्रम्, (अनु०) उदयनारायणसिंह । विद्वद्पुर बाजार, मुजफ्फरपुर, १९९१ वि०
वाल्मीकीयरामायणम् । गीताप्रेस, गोरखपुर, २०२० वि०
विदुरनीतिः । गीताप्रेस, गोरखपुर, २०२३ वि०
विमानशास्त्रम्, भरद्वाजमुनिः ।
विष्णुधर्मसूत्रम् ।
विष्णुपुराणम् ।
वृद्धहारीतस्मृतिः ।
वेद में इतिहास नहीं, ब्रह्ममुनिः । गुरुकुल काँगड़ी विश्वविद्यालयः ।
वेदों का यथार्थस्वरूप, धर्मदेवोविद्यामार्तण्डः । गुरुकुल काँगड़ी विश्वविद्यालयः ।
वेदों में आयुर्वेद, रामगोपालः । मदनमोहनट्रस्ट, दिल्ली, २०१३ वि०
वैदिकज्योतिषशास्त्र, ब्रह्ममुनिः ।
वैदिक विज्ञान और भारतीय संस्कृति, गिरिधरशर्मा । बिहार राष्ट्रभाषा परिषद्, पटना, १९६० ई०
वैदिकसम्पत्ति; रघुनन्दन शर्मा ।
वैदिक साहित्य और संस्कृति, बलदेव उपाध्यायः । शारदा मन्दिर, वाराणसी, १९६७ ई०
वैराग्यशतकम्, भर्तृहरिः । निर्णयसागर, मुम्बई, १९५७ ई०
वैशेषिकसूत्रम्, कणादः : चौखम्भा संस्कृत संस्थान, वाराणसी, १९६६ ई०
शतपथब्राह्मणम्, याज्ञवल्क्यः । प्राचीन वैज्ञानिकाध्ययन संस्थान, दिल्ली १९६७ ई०
शब्दकल्पद्रुमः, राधाकान्तदेवः । चौखम्भा संस्कृत सीरीज आफिस, वाराणसी, १९६१ ई०
शाङ्खायनब्राह्मणम्, सं० गुलाबरायः । आनन्दाश्रम, पूना, १९११ ई०
शुक्रनीतिसारः, सं० जीवानन्दः । सरस्वतीयन्त्र, कलिकाता, १८८२ ई०
श्वेताश्वतरीयोपनिषद् । विद्याप्रकाश प्रेस, लाहौर, १९८७ ई०
श्लोकवार्तिकः, कुमारिलभट्टः । चौखम्बा संस्कृत सीरीज आफिस, वाराणसी, १८९८ ई०
षड्विंशब्राह्मणम् । सरस्वती प्रेस, कलकत्ता, १८८१ ई०
सत्यार्थप्रकाशः, दयानन्दः । आर्ष साहित्य प्रचार ट्रस्ट, दिल्ली, १९६७ ई०

